भैरवीसहितो हिन्दीभाष्योपेतश्च

नागेशभट्टविरचितः

# लघुशब्देन्दुशेखरः

[ कारकप्रकरणम् ]

कुलपतेः प्रो. राममूर्तिशर्मणः प्रस्तावनया विभूषितः

हिन्दीभाष्यकारः सम्पादकश्च

डॉ. तेजःपालशर्मा

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

वाराणसी

गङ्गानाथझा-ग्रन्थमाला

[ २१ ]

नागेशभट्टप्रणीतः

# लघुशब्देन्दुशेखरः

## [ कारकप्रकरणम् ]

व्याख्याद्वयोपेतः

कुलपतेः प्रो॰ राममूर्तिशर्मणः प्रस्तावनया विभूषितः

सम्पादकः
डॉ॰ तेजःपालशर्मा

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः
वाराणसी

GAṄGĀNĀTHAJHĀ-GRANTHAMĀLĀ

[ Vol. 21 ]

# LAGHUŚABDENDU-ŚEKHARAḤ

## [ KĀRAKAPRAKARAṆAM ]

OF

## NĀGEŚA BHAṬṬA

*With Two Commentaries*

'BHAIRAVĪ'

*By*

BHAIRAVA MIŚRA

*&*

'HINDĪ'

*By*

DR. TEJAḤPĀLA ŚARMĀ

*FOREWORD BY*

PROF. RAM MURTI SHARMA

VICE-CHANCELLOR

*EDITED BY*

DR. TEJAḤPĀLA ŚARMĀ

*Reader, Vyākaraṇa Department*

Shri Jagannath Sanskrit University

Puri (Orrisa)

VARANASI

2002

*Research Publication Supervisor—*
**Director, Research Institute**
Sampurnanand Sanskrit University
Varanasi.

ISBN : 81-7270-075-X

*Published by—*
**Dr. Harish Chandra Mani Tripathi**
***Director, Publication Institute***
Sampurnanand Sanskrit University
Varanasi-221002

*Available at—*
**Sales Department**
Sampurnanand Sanskrit University
Varanasi-221002

**First Edition** : 500 Copies

**Price** : Rs. 400.00

*Printed by—*
**Tara Printing Works**
Kamachha, Varanasi-221010

गङ्गानाथझा-ग्रन्थमाला

[ २१ ]

नागेशभट्टप्रणीतः

# लघुशब्देन्दुशेखरः

## [ कारकप्रकरणम् ]

भैरवमिश्रकृतया
'भैरवी' व्याख्यया

डॉ० तेजःपालशर्मकृतया
'हिन्दी' व्याख्यया

कुलपतेः प्रो० राममूर्तिशर्मणः प्रस्तावनया च विभूषितः

*सम्पादकः*
**डॉ० तेजःपालशर्मा**
*उपाचार्यः, व्याकरणविभागे*
श्रीजगन्नाथसंस्कृतविश्वविद्यालयस्य
पुरी (उड़ीसा)

**वाराणस्याम्**
२०५८ तमे वैक्रमाब्दे १९२३ तमे शकाब्दे २००२ तमे खैस्ताब्दे

*अनुसन्धान-प्रकाशन-पर्यवेक्षकः—*
**निदेशकः, अनुसन्धान-संस्थानस्य**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी।

❑

*प्रकाशकः—*
**डॉ. हरिश्चन्द्रमणित्रिपाठी**
***निदेशकः, प्रकाशन-संस्थानस्य***
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी-२२१००२

❑

*प्राप्तिस्थानम्—*
**विक्रय-विभागः,**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी-२२१००२

❑

**प्रथमं संस्करणम्** : ५०० प्रतिरूपाणि

**मूल्यम्** : ४००.०० रूप्यकाणि

❑

*मुद्रकः—*
**तारा प्रिंटिंग वर्क्स**
कमच्छा, वाराणसी-२२१०१०

ISBN : 81-7270-075-X

# प्रस्तावना

**डॉ. तेजःपाल शर्मा** द्वारा प्रश्नोत्तररूप में हिन्दी-भाषा में व्याख्यात **'लघुशब्देन्दुशेखर'** के **'कारकप्रकरण'** पर प्रस्तावना लिखते हुए मुझे अतिशय प्रसन्नता हो रही है। **'लघुशब्देन्दुशेखर'** ग्रन्थ को विद्वानों ने नागेशभट्ट का पुत्र-स्थानी एवं **'मनोरमा'** ग्रन्थ को उनका पुत्रीस्थानी माना है। अर्थात् लघुशब्देन्दुशेखर ग्रन्थ नागेशभट्ट के सभी ग्रन्थों में अतिशय प्रौढ़, अतिशय नवोन्मेषी एवं अतिशय पाण्डित्य का निकष माना गया है। सम्पूर्ण व्याकरणशास्त्र के चूडान्त-निर्मथन के उपरान्त श्री नागेशभट्ट ने **'लघुशब्देन्दुशेखर'** ग्रन्थ की रचना की थी। इतिहासविद् नागेशभट्ट का समय १७०० ई. से १७५० ई. के मध्य मानते हैं। इनका अध्ययन काशी में ही हुआ था। इन्होंने भट्टोजिदीक्षित के पौत्र हरिदीक्षित के यहाँ व्याकरणशास्त्र का तथा पण्डित रामराम भट्टाचार्य के यहाँ न्यायशास्त्र का अध्ययन किया था। इनके तीसरे गुरु श्री शङ्करभट्ट थे।

श्री नागोजिभट्ट का पाण्डित्य चतुरस्र था। वे जहाँ व्याकरणशास्त्र के शिखर विद्वान् थे, वहीं उन्होंने धर्मशास्त्र, अलङ्कारशास्त्र, इतिहास, पुराण, काव्यशास्त्र, सांख्यदर्शन, योगदर्शन आदि विविध विषयों का मन्थन करते हुए तीस से अधिक ग्रन्थों का प्रणयन किया। तीर्थेन्दुशेखर, आचारेन्दुशेखर, अशौचनिर्णय तथा तिथीन्दुसार इनके द्वारा प्रणीत धर्मशास्त्रविषयक ग्रन्थ हैं। महाभाष्य ग्रन्थ पर इन्होंने उद्द्योत नाम की व्याख्या के साथ ही परिभाषेन्दुशेखर, लघुशब्देन्दुशेखर, बृहच्छब्देन्दुशेखर, वैयाकरणसिद्धान्तमञ्जूषा नामक प्रौढ़तम व्याकरण-ग्रन्थों की रचना की थी। इसके साथ ही साहित्यशास्त्र के रसगङ्गाधर पर 'गुरुमर्मप्रकाश' टीका एवं 'रसतरङ्गिणी' नामक साहित्यशास्त्र के ग्रन्थ की रचना की। उनके इस विविध शास्त्रीय गौरव ग्रन्थनिधि से श्री नागोजिभट्ट की कीर्ति दिग्दिगन्त तक व्याप्त हुई।

ऐसे कीर्तिधर मनीषी द्वारा प्रणीत लघुशब्देन्दुशेखर नामक ग्रन्थ के **'कारकप्रकरण'** की पुङ्खानुपुङ्खभाव से अनुगुम्फित गुत्थियों का स्फोरण प्रश्नोत्तर रूप में **डॉ. तेजःपाल शर्मा** ने किया है, एतदर्थ मैं उन्हें हार्दिक शुभाशीर्वाद एवं वर्द्धापन प्रदान करता हूँ। अपनी हिन्दी व्याख्या के साथ ही संस्कृत की

**'भैरवी'** व्याख्या के साथ इस कारकप्रकरण को विद्वज्जगत् एवं छात्रों के समक्ष उपस्थापित करते हुए **डॉ. तेजःपाल शर्मा** ने विद्वानों, शोधार्थियों एवं छात्रों का महान् उपकार किया है। अतः वे भूरिशः धन्यवाद के पात्र हैं।

इस ग्रन्थ के आकर्षक तथा शीघ्र प्रकाशन में निरन्तर समर्पित प्रकाशन-संस्थान के निदेशक **डॉ. हरिश्चन्द्र मणि त्रिपाठी,** ईक्ष्यशोधनप्रवीण **डॉ. हरिवंश कुमार पाण्डेय,** सहायक सम्पादक **डॉ. ददन उपाध्याय,** ईक्ष्यशोधक **श्री अशोक कुमार शुक्ल, श्री अतुल कुमार भाटिया,** प्रकाशन सहायक **श्री कन्हई सिंह कुशवाहा,** पाण्डुलिपि संग्राहक सहायक **श्री ओमप्रकाश वर्मा** एवं डॉटा इन्ट्री आपरेटर **श्री जितेन्द्र कुमार भाटिया** प्रभृति को पौनःपुन्येन मङ्गल आशीर्वाद प्रदान करते हुए इस ग्रन्थ के हृदयावर्जक मुद्रक तारा प्रिंटिंग वर्क्स के सञ्चालक **श्री रवि प्रकाश पण्ड्या** को भी हार्दिक साधुवाद एवं शुभाशीर्वाद प्रदान करता हूँ।

अन्ततः सान्नपूर्णा श्रीकाशीविश्वेश्वर के करकमलों में इस ग्रन्थ-प्रसून को समर्पित करते हुए व्याकरणशास्त्राध्यायी विद्वानों की मङ्गलकामना करता हूँ।

रामभूर्ति शर्मा

**वाराणसी**
मार्गशीर्ष-पूर्णिमा,
२०५८ विक्रमाब्द

**राममूर्ति शर्मा**
*कुलपति*
सम्पूर्णानन्द संस्कृत विश्वविद्यालय

**श्रीश्रीजगद्गुरु-शङ्कराचार्य-महासंस्थानम्, दक्षिणाम्नाय-**
**श्रीशारदापीठम्, शृङ्गेरी**

**दक्षिणाम्नाय-शृङ्गगिरि-शारदापीठाधीश्वराणां**
**जगद्गुरुशङ्कराचार्याणामनन्तश्रीविभूषितानां**
**श्रीश्रीश्रीभारतीतीर्थमहास्वामिनाम्**

# अनुग्रहसन्देशः

नव्यवैयाकरणमूर्धन्येन नागेशभट्टेन विरचितेषु ग्रन्थेषु शेखरो, मञ्जूषा चेति ग्रन्थद्वयं महतीं प्रसिद्धिमवाप्तं विद्योतते। अत एवोक्तं तेन **'शब्देन्दुशेखरः पुत्रो मञ्जूषा चैव कन्यका। स्वमतौ सम्यगुत्पाद्य शिवयोरर्पितौ मया'।।** इति। तत्र च शब्देन्दुशेखरः सिद्धान्तकौमुद्या व्याख्यानतया प्रवृत्तोऽपि महाभाष्यसिद्धान्तान् सम्यग्विवृण्वन् स्वतन्त्रग्रन्थ इव चकास्ति। एतदुत्तरकालिका विद्वांस एनमाकरग्रन्थतया पर्यजीगणन्नित्यपि अस्य ग्रन्थस्य महद्वैशिष्ट्यम्। अद्यत्वे इमं ग्रन्थमनधीत्य न कोऽपि वैयाकरणो भवितुमर्हतीति निश्चप्रचं समेषाम्। अस्य ग्रन्थस्य नैका व्याख्याः समुपलभ्यन्ते। अद्यतनानां सुकुमारमतीनामन्तेवसतां सुलभावबोधाय अस्य ग्रन्थस्य हिन्दीभाषया टीका विदुषा तेजःपालशर्मणा व्यधायीति विदित्वा नितरां मोदामहे। यथासम्प्रदायं गुरुमुखादनेन टीकाकृता व्याकरणशास्त्रमधीतम्। अत एवायं ग्रन्थो विदुषां प्रशंसापात्रं भविता। प्रश्नोत्तररूपतया वर्तमानत्वादयं ग्रन्थः छात्राणां नितरामुपकारको भविष्यति।

श्रीशारदाचन्द्रमौलीश्वरयोरनुकम्पया ग्रन्थोऽयं विशिष्टं प्रचारमेतु, अनुवादकश्च श्रेयःपरम्पराभिस्समेधतामित्याशास्महे।

**इति नारायणस्मरणम्**

शृङ्गगिरिः
वृष-भाद्रपदशुक्ल-त्रयोदशी,
भार्गववासरः
(३१.८.२००१)

# आमोदः

श्रीमतां विद्वत्तल्लजानां सुगृहीतनामधेयानां डॉ. तेज:पालशर्मणां विद्वत्ताया: निकषोपलरूपं शब्देन्दुशेखरस्य कारकप्रकरणस्य हिन्दीभाष्यं मया सुपरिशीलितम्। अनुभूतश्च महान् आनन्द एतेषां महानुभावानां विषयसमालोचनसरणिमवलोक्य। महाभाष्यकारं पतञ्जलिमेव शैल्या अनुकुर्वन्त: शिक्षणपद्धतिषु अग्रगण्यां प्रश्नोत्तरप्रणालीमूरीकृत्य सरलया सहजगम्भीरया च शैल्या व्याख्यां प्रवर्तयन्त एते महानुभावा न केवलं छात्राणाम् उपकारमेव विधास्यन्ति, अपि तु पण्डितानामपि।

अस्ति च इदानीन्तने काले एतादृशानां ग्रन्थरत्नानाम् आवश्यकता शास्त्राध्ययनाय छात्राणाम् आवर्जनाय।

श्रीमन्त: शर्माण: सुगृहीतनामधेयानां प्रात:स्मरणीयानां वैयाकरणकेसरिणां महामहोपाध्यायानां श्रीरामप्रीतिद्विवेदिमहोदयानाम् अन्तेवासिन:, अस्मद्गुरूणां महामहोपाध्यायानां च अनुग्रहपात्रभूता इत्येतदेव एतेषां महानुभावानाम् एतादृशग्रन्थरचनासामर्थ्यं प्रकाशयति।

देवदेवस्य अखिलाण्डकोटिब्रह्माण्डनायकस्य जगन्नाथस्य चरणकमलनिरन्तरसेवा-समासादितवैदुषीविभवा अन्वर्थनामधेया एते एवमेव बहून् दुरधिगमान् शास्त्रीयान् ग्रन्थान् स्वीयया सरलया सरसया व्याख्यया च समलङ्करिष्यन्तीति मे द्रढीयान् विश्वास:।

अनुगृह्णातु भगवान् श्रीनिवास: श्रेय: प्रेयश्च।

*इत्थं,*

बुधजनविधेय:

**आचार्यः के.वि.रामकृष्णमाचार्यः**

व्याकरणविभाग:

राष्ट्रियसंस्कृतविद्यापीठम्

तिरुपति:, आन्ध्रप्रदेश:।

# शुभाशंसा

एतत् सुविदितमेव सर्वेषां संस्कृतज्ञानां कृते यद् व्याकरणशास्त्रं सर्वेषु शास्त्रेषु प्राथम्यं भजते। प्रथमे विद्वांसो वैयाकरणा:, व्याकरणस्य मूलत्वात् सर्वविद्यानाम् इत्याभाणकम्, इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम्, इयं सा मोक्षमाणानामजिह्मा राजपद्धतिरिति कारिका वा व्याकरणस्य प्राथम्यमुद्घोषयति। अनेकेषु व्याकरणेषु सत्स्वपि पाणिनीयव्याकरणं सर्वत्र जगति अतिशेते। विश्लेषणात्मकरीत्या शब्दशास्त्रस्य अध्ययनाय प्रक्रियाग्रन्थानामावश्यकता सर्वै: सुरभारतीसमुपासकै: स्वीकृता वर्त्तते। सत्स्वपि बहुषु सटीकप्रक्रियाग्रन्थेषु नागोजीभट्टकृतो लघुशब्देन्दुशेखर: सर्वग्रन्थशेखरायमाण: शेखरग्रन्थ: प्रसिद्धोऽस्ति। सुकोमलमतीनां व्याकरणाधीतिनां सुखबोधाय दुरूहस्य शेखरस्य हिन्दीभाष्यमिदं सप्रयत्नं प्रस्तूयते मम सुहृद्वरै: तेज:पालशर्मभि:। श्रीजगन्नाथस्य काशीविश्वनाथस्य च कृपाकटाक्षभाज एते महोदया विद्यामन्दिरेऽस्मिन् श्रीजगन्नाथसंस्कृतविश्वविद्यालये श्रीविहारे समुपस्थाय खण्डनमण्डनपरम्परया सिद्धान्तान् उपस्थापयन्ति। विद्यानगरीवास्तव्यानामेतेषां वैयाकरणानां प्रोफेसरशर्मणां वाराणस्याम् अधीतिबोधाचरणाद् अनन्तरं प्रचारणार्थमागतानामेतेषां पुरीप्रान्ते श्रीविहारे अध्यापनकाले छात्रै: सह वार्त्तावेलायामुत्थितानां विद्वच्चर्चागोष्ठीषु शास्त्रार्थसभासु च समुत्थितानां प्रश्नानां मतभेदपरिशीलनपुर:सरं यद् यदुत्तरितं तत्सर्वं सिद्धान्तरूपेण ग्रन्थेऽस्मिन् प्रस्तुतम्। अविच्छिन्नगुरुपरम्पराया: प्रतिनिधित्वं कुर्वाणा कृतिरियं प्रोफेसरशर्ममहोदयानां स्वशास्त्रं प्रति समुचितनिष्ठां प्रदर्शयति इत्यत्र नास्ति सन्देहलेशावसर:। ग्रन्थस्यास्य प्रकाशनेन न तु केवलं छात्रा: अपितु गवेषका अध्यापकाश्च सर्वे संस्कृतविद्वांस उपकृता भविष्यन्ति। गवेषणाविधिमनुसृत्य प्रस्तुतस्यास्य ग्रन्थस्य ग्रन्थकारा: डॉ. शर्ममहाशया अस्माकं सर्वेषामभिनन्दनीया:। तेषाम् एतादृशी सारस्वतसाधना अध्येतृणां कृते अनुकरणीया भवेदिति श्रीजगन्नाथचरणारविन्दद्वन्द्वयो: सविधे कामये।

**प्रो.डॉ. अलेखचन्द्रषडङ्गी**

*कुलपति:*

श्रीजगन्नाथसंस्कृतविश्वविद्यालय:

श्रीविहार:, पुरी (उड़ीसा)

# शुभाशंसा

लघुशेखर-ग्रन्थ, पाणिनीय-व्याकरण के अन्तिम परिष्कर्ता, नवनवोन्मेष-शालिनी-प्रतिभा-भासुर, वैयाकरणकेसरी भट्ट श्रीनागेश की परमतविदारण-स्वमत-मण्डन-प्रवणा, अल्पाक्षरा किन्तु अर्थविपुला विद्वन्निवहसमादृता सर्वातिशायिनी अलौकिक कृति है।

वाराणसी में नव्यन्यायभाषा-परिष्कार-प्रणाली द्वारा इस लघुशब्देन्दुशेखर महाग्रन्थ के अध्ययनाध्यापन की परम्परा अतिप्राचीन है।

यद्यपि इस विलक्षण ग्रन्थ के निगूढ़ अभिधेयार्थों के प्रकाशन हेतु समय-समय पर अनेकों वैदुष्यूपर्ण संस्कृत टीकाएँ लिखी गईं, तथापि विपश्चिन्निकरसम्मत्यनुसार यह ग्रन्थ आज भी अनुद्घाटितसकलमर्म ही है।

वर्तमान युग राष्ट्र-भाषा हिन्दी में लिखी गई टीकाओं का है। इस जटिल ग्रन्थ की उत्तम हिन्दी टीका अभी तक कोई उपलब्ध नहीं थी। पण्डित-प्रवर आचार्य श्री तेजपाल शर्मा ने वाराणसेयी पाठन-परम्परा-मुकुरभूता एक टीका सरल-सरस-मनोहारिणी हिन्दी-भाषा में लिखकर इस न्यूनता का उचित परिहार करते हुए अध्यापकों, शोधकर्ताओं एवं पिपठिषु परिश्रमी छात्रों का महान् उपकार किया है।

प्रश्नोत्तररूप में कठिनतम पदार्थों व सूक्ष्म-शेमुषी-समधिगम्य उद्भट परिष्कारों का सर्वजनवेद्य विपुल विशद व्याख्यान इस टीका का अन्यत्र अप्राप्य वैशिष्ट्य है। श्री शर्मा जी अपने इस महनीय प्रयास के लिए धन्यवाद के उत्कृष्ट पात्र हैं।

हम इस महत्त्वपूर्ण हिन्दी-भाष्य-टीका के सर्वदिक् प्रचार व प्रसार की मंगलमय कामना करते हैं।

सीताराम शास्त्री

**श्री सीताराम शास्त्री**

पुरुषोत्तम-आश्विन-शुक्ल-पञ्चमी
२०५८, जय संवत्सर

।।श्रीहरिः।।

# आत्मनिवेदनम्

भजेऽहं पितरौ पूज्यौ भजे शम्भोः पदाब्जयोः ।
आश्रये वैष्णवक्षेत्रमुदरापूर्त्तिहेतवे ।।१।।
सर्वं तत्त्वं गुरोरेव प्रसादाधिगतं मया ।
तस्य प्रकाशनं कर्त्तुं ग्रन्थरत्नं विधीयते ।।२।।
गुरोरुक्तिश्चिरात् पूर्वमासीन्मे श्रुतिगोचरा ।
पुनस्तच्चिन्तनं कृत्वा प्रबन्धेऽस्मिन्निधीयते ।।३।।
यत् तत्त्वं ग्राह्यमत्रास्ते ज्ञातव्यं तद् गुरोर्वचः ।
यदग्राह्यं च तत्सर्वं स्मृतिभ्रंशाद् भवेन्मम ।।४।।
त्रुटिश्चेल्लक्ष्यते काचिद् विद्वद्भिः सूक्ष्मदर्शिभिः ।
दयालुभिरनुग्राह्यः तन्निदर्शनतत्परैः ।।५।।
तेनाहं पुनरावृत्तौ शोधयिष्ये प्रयत्नतः ।
विदुषाम्पुरतो नित्यं राजतां मम प्रार्थना ।।६।।
इदं गुरुपदप्रान्ते ग्रन्थपुष्पं समर्प्यते ।
गृह्णातु कृपया देव! आशीर्वादं तनोतु च ।।७।।

श्रीगुरुचरणकमलपरागचञ्चरीकः
**तेजःपालः**

।।श्रीहरिः।।

# सम्पादकीयम्

**आसीना कमले करैर्जपवटीं पद्मद्वयं पुस्तकं**
**विभ्राणा तरुणेन्दुबद्धमुकुटा मुक्तेन्दुकुन्दप्रभा।**
**भालोन्मीलितलोचना कुचभरक्लान्ता भवद्भूतये**
**भूयाद् वागधिदेवता मुनिवरैरासेव्यमानाऽनिशम्।।**

**चत्वारिशृङ्गा त्रयोऽस्य पादा द्वे शीर्षे सप्तहस्तासोऽस्य।**
**त्रिधा बद्धो वृषभो रोरवीति महोदेवो मर्त्यां आ विवेश।।**

सप्तहस्तासोऽस्य। सप्तविभक्तयः। मनुजो यथा हस्तादीन्द्रियमन्तरेण लेखनार्चनाद्वारा वागधिष्ठात्रीं समुपासितुं सर्वथाऽसमर्थो भवति तथैवास्य महादेवस्य सप्तविभक्तिमन्तरेण कारकत्वन्निहन्यते। अत एव सप्तविभक्तिविधायकसूत्राणां प्रकरणमिदं कारकनाम्नाऽभिधीयते। उक्तञ्च— **'सर्वोपकारकं ज्ञेयं कारकं सर्वकारकम्'** इति।

**करोति विग्रहं कृत्वा ण्वुल्प्रत्ययो विधीयते।**
**क्रियायाः जनकं तस्मात् कारकमभिधीयते।।**

**'क्रियाजनकत्वं कारकत्वम्'** अर्थात् क्रियानिष्ठजन्यतानिरूपितजनकतावत्त्वं कारकत्वम्। **'कर्तृकर्मादिव्यपदेशान् करोतीति कारकम्'** इति विवक्षायां कारकशब्दः क्रियापरः, जनकमित्यध्याह्रियते, सप्तम्यर्थो निरूपितत्वम्, तस्य जनकशब्दार्थैकदेशजनकतायामन्वयः। एतेनापि क्रियाजनकत्वं कारकत्वमित्येव प्रसिद्ध्यति। क्रियाजनकत्वस्य च जन्यजनकभावघटितक्रियाकारकभावसम्बन्धेन क्रियान्वयित्वमर्थः। सर्वेषां च कारकाणां स्वस्वावान्तरक्रियाद्वारा प्रधानक्रियानिष्पादकत्वात्। सर्वस्मिन्नेव कारकत्वेनाभिप्रेतेऽर्थे फलानुकूला क्रिया प्रसिद्ध्यति। एतावानेव विशेषः 'यन्निष्ठक्रियायाः प्राधान्येन धातुवाच्यत्वविवक्षा तदा तस्य कर्तृत्वम्, यदा तु तन्निष्ठव्यापारस्य प्राधान्येन धातुवाच्यत्वविवक्षा न भवति तदा तस्य न कर्तृत्वमपितु करणत्वादिकमेव'। उक्तञ्च भर्तृहरिणा—

**वस्तुतस्तदनिर्देश्यं नहि वस्तु व्यवस्थितम्।**
**स्थाल्या पच्यते इत्येषा व्यवस्था दृश्यते यतः।।**

असन्निहितसम्प्रदानस्यापि दातृबुद्धिस्थत्वावश्यकत्वेन स्वज्ञानपूर्वकालत्वेनैव जनकत्वं प्रसिद्ध्यति इति नागेशः। यद्यप्ययं पक्षः प्रथमतः शब्दरत्ने प्रतिपादितस्तथापि शब्दरत्नं विरचय्य स्वगुरुनाम्ना प्रचारितमित्याभाणकस्य वैयाकरणनिकाये सुप्रसिद्धत्वात् पक्षोऽयं नागेशस्यैवेति प्रतीयते। अत एव 'कारकाणां भावनान्वयः' इति वाक्यस्य क्रियान्वयिनां क्रियान्वय इत्यर्थप्रतिपादकत्वाद् असामञ्जस्यं स्यादिति नाशङ्कितम्। न चान्तरेण साधनं क्रियायाः प्रवृत्तिर्भवतीति भाष्योक्त्यापि क्रियाजनकत्वस्यैव कारकत्वं प्रसिद्ध्यति। सप्तमीपञ्चम्यौ कारकमध्ये (पा.सू. २.३.७) इति सूत्रे तु कर्तृत्वादिशक्तिरेव कारकम्, सा च क्रियाभेदेन भिद्यते इत्यूरीकृतम्। कर्मादीनामन्वर्थसंज्ञात्वेन अशब्दसंज्ञाशब्दे षष्ठीतत्पुरुषं प्रत्याख्याय उपपदसमासप्रतिपादनाद् यद्यप्यस्य कारकप्रकरणस्य अर्थपक्षेण सह सम्बद्धत्वाच्छब्दपक्षान्तर्गतं निरूपणं न संगच्छते, तथापि कारकाणां सप्तविभक्तिभिः सह सम्बन्धस्यातिसामीप्यात् कारकं शब्दप्रकरणे निरूपितम्। अतः 'स्वौजसमौट्' (पा.सू. ४.१.२) इति विहितस्वादीनामर्थविशेषव्यवस्थां दर्शयितुमिति प्रतिज्ञावाक्येन कारकप्रकरणं समारब्धं ग्रन्थकारेण।

शेखराद्यनेकग्रन्थकर्त्ता नव्यन्यायसरणिमाधृत्य व्याकरणतत्त्वपरिष्कर्त्ता प्रायः सर्वशास्त्रविषयकप्रबन्धप्रणेता महामहोपाध्यायोऽयं नागेशः प्रयागादुत्तरं स्थितस्य सिग्रौरनाम्ना अधुनाप्रसिद्धस्य पुराणवर्णितस्य शृङ्गवेरपुरस्य अधीशाच्छ्रीरामनाम्नो लब्धजीविक आसीदिति सर्वं शेखरारम्भे स्वत एव निरूपितम्—

**याचकानां कल्पतरोररिकक्षहुताशनात्।**
**शृङ्गवेरपुराधीशाद् रामतो लब्धजीविकः।।**इति।।

शृङ्गवेरपुरस्य स्थितिः प्रयागादुत्तरमस्तीति अध्यात्मरामायणम्—

**रामः सीता च सौमित्रिर्मयानीता रथेन ते।**
**शृङ्गवेरपुराभ्यासे गङ्गाकूले व्यवस्थिताः।।**

इत्यादिभिः श्लोकैः स्फुटं प्रतिपादयति। अरिकक्षहुताशनात् शृङ्गवेरपुराधीशाद् वृत्तिं पुरस्कृत्य पतिव्रताशिरोरत्नभूतया धर्मपत्न्या दुर्गादेव्या सह काशीमधिवसन् शास्त्रप्रचारप्रसाराय सपरिश्रमं सश्रद्धं च लेखनाध्यापनकार्यमकरोत्। वागीश्वरीप्रसादाल्लब्धसकलशास्त्रविलक्षणपाण्डित्येन परमां प्रसिद्धिं च लब्धवान्।

'श्रीमदुपाध्यायोपनामकशिवभट्टसतीगर्भजनागेशभट्टकृते शब्देन्दुशेखराख्ये सिद्धान्तकौमुदीव्याख्याने उत्तरार्द्धमिति 'शेखरोक्त्या ज्ञायते यदस्य अध्यापनकौशलेन प्रभाविता पण्डितमण्डली एनमुपाध्यायोपनाम्नापि अजीज्ञपत्। अथवाऽस्य अध्यापने सर्वशास्त्रावगाहनपरिष्कृतं वाग्वैदग्ध्यं शास्त्रार्थसभासु च अकाट्यकोटिकल्पनासामर्थ्यं दर्शं दर्शं काशीविद्वत्परिषदैव ससम्मानमुपाध्यायोपाधिनायं संविभूषितः। 'कालोपनामकशिवभट्टसुतसतीदेवीगर्भजनागेशभट्टकृते सिद्धान्तकौमुदीव्याख्याने पूर्वार्द्धं समाप्तमि'त्युक्त्या चास्य कालेत्यपि उपनामाऽऽसीदिति विज्ञायते। अनेन कालेत्युपनाम्ना तथ्यमिदं समायाति यदयं शास्त्रार्थसभासु स्वकीयाभिरकाट्यकोटिकल्पनाभिः प्रतिपक्षिणां विद्याबुद्धिकौशलं वाचं च कीलयति स्म, अत एवैनं पण्डिताः कालोपनाम्ना व्याहरन्। अथवा दुर्दैववशान्मध्येजीवनं समापतितस्य अल्पायुष्कारकत्वस्यापि कालस्य उपासनादिना अनेन अपसारणं कृतम्, अत एव कालस्याप्ययं काल इत्यर्थबोधनाय कालेत्युपनाम्ना व्यवहरन्ति स्म एनं सामान्या अपि जनाः। 'काले' इत्युपनाम्नो महाराष्ट्रियब्राह्मणेषु प्रसिद्धत्वान्महाराष्ट्रियब्राह्मणकुलेऽयमजायतेति निश्चीयते। महाराष्ट्रियब्राह्मणानामृग्वेदि-नामुत्तमे कुलेऽयं शिवभट्टात् सतीदेवीकुक्षौ कदा जनिं लेभे, सतीदेवी चैनं कस्मिन् सुमुहूर्त्तेऽजीजनदिति तिथि-वार-नक्षत्रादयो न ज्ञायन्ते, तथापि समुपलब्धप्रमाणैस्तज्जीवनवृत्तान्तमिदमित्थमिति कृत्वा समुपस्थापयन्ति इतिहासतत्त्वविचक्षणाः—

जयपुरनिवासिना महामहोपाध्यायदुर्गाप्रसादशर्मणा सम्पादिते ग्रन्थे भूमिकायां ताम्रलेखादीन् आधृत्य जयपुराधीश्वराः श्रीजयसिंहवर्माणः १७७१ तमे वैक्रमाब्दे समनुष्ठीयमाने अश्वमेधयज्ञे पण्डितराजं नागेशभट्टमपि जयपुरागमनाय निमन्त्रयामासुः, तस्योत्तरे नागेशेन—'काश्यां गृहीतक्षेत्रसंन्यासोऽस्मि, अतो विश्वेश्वरपुरीं परित्यज्याऽन्यत्र गन्तुं न शक्नोमी'ति पङ्क्तिरलेखि। पण्डितराजजगन्नाथप्रणीतरसगङ्गाधरं निजनिर्मितटीकयाऽलञ्चक्रे नागेशः। पण्डितराजजगन्नाथश्च शाहजहाँनाम्नो दिल्लीश्वरस्य सभां स्वसाहित्यरसेन रञ्जयामासेतीतिहासप्रसिद्धम्। तथा चानेन प्रतिपादितेन साक्ष्येण पण्डितराजादूर्ध्वं जयपुराधीशश्रीजयसिंहवर्मानुष्ठिताश्वमेधयागसमकालोऽस्य वार्धक्यकाल इति निर्णीयते, क्षेत्रसंन्यासकथया च वार्धक्यकालोऽयं नागेशस्येत्येवानुमीयते।

प्राचामसदुक्तिखण्डनाय वैयाकरणसिद्धान्तकौमुदीप्रचारप्रसारप्रतिबन्धक-विघ्नापनोदनाय च श्रीमद्भट्टोजिदीक्षितः प्रौढमनोरमानाम्नीं टीकां व्यरचयत्। निजनिर्मिते प्रौढमनोरमाख्ये सिद्धान्तकौमुदीव्याख्याने 'यत्तु प्राचा—यदपि प्रसादकृता'

इत्यादिना तत्तन्मतानि उपस्थाप्य यत् खण्डनमण्डनप्रक्रियाबीजं भट्टोजिदीक्षितेन संस्थापितम्, तस्य पत्र-पुष्प-शाखा-प्रशाखाभिः सम्यक् पल्लवनं कृतं नागेशेन। हरिदीक्षितशिष्येणानेन नागेशभट्टविदुषा यत्तु-अन्ये त्वित्यादिना तत्तन्मतानि उपादाय सुस्पष्टं च व्याख्याय मर्मग्राहिकया व्यङ्ग्यमर्यादया अतिसूक्ष्मेक्षया च खण्डनं कृत्वा भाष्याविरुद्धं स्वमतं प्रायः 'परे तु' इत्युक्त्या विदुषामन्तःकरणोल्लासकेऽस्मिन् सिद्धान्तकौमुदीव्याख्याने शब्देन्दुशेखरे व्यवस्थापितम्।

वैयाकरणसिद्धान्तकौमुदीप्रणेता श्रीमद्भट्टोजिदीक्षितः ऋग्वेदाश्वलाय-सूत्रशाकलशाखाध्यायी दाक्षिणात्य इति जगत्प्रसिद्धम्। तत्पुत्रो भानुदीक्षितो वीरेश्वरशास्त्रीत्यपरनामधेयः अमरकोशस्य रामाश्रमीटीकायाः कर्त्ता भट्टोजिदीक्षितस्य प्रधानशिष्यः संबभूव। भानुदीक्षितस्य च हरिदीक्षितः पुत्रः प्रधानशिष्यश्चासीत्—

**गूढोक्तिग्रथितां पितामहकृतां विद्वत्प्रमोदप्रदां**
**भक्त्याधीत्य मनोरमां निरुपमाद् रामाश्रमात् सद्गुरोः।**
**तत्त्वज्ञानवशात् परेण कलितान् दोषान् समुन्मूलयन्**
**व्याचष्टे हरिरेष तां फणिमतान्यालोच्य वैरेश्वरिः।।**

ततो हरिदीक्षितशिष्येण नागोजीभट्टेन पातञ्जले महाभाष्ये कृतभूरिपरिश्रमेण महाभाष्यमुन्मथ्योन्मथ्य षोडशकलापरिपूर्णमिन्दुमिव शब्देन्दुं समुद्धृत्य परात्परगुरुप्रणीतायाः कौमुद्याः सिद्धान्ताः परमप्रकाशमुपानीताः। अत एव ग्रन्थारम्भे मनोरमोमार्द्धदेहमिति प्रतिज्ञामकार्षीद् ग्रन्थकारः। 'कैटलाग-कैटलोगरम्' मध्ये नागेशभट्टविरचितानां सप्तचत्वारिंशद्ग्रन्थानामुल्लेखो व्यधायि आफ्रेख्टमहोदयेन। तन्मध्ये योग-तन्त्र-काव्य-पुराण-ज्योतिष-मीमांसा-धर्मशास्त्र-व्याकरणसम्बन्धिनां ग्रन्थानां परिगणनात् सर्वशास्त्रविशारदोऽयमित्यनुमीयते। प्रणीतेषु सकलेष्वपि शास्त्रेषु लघुशब्देन्दुशेखरमेव पुत्रत्वेन कलयामास नागेशः। अत एव—

**लघुशब्देन्दुशेखरं पुत्रं मञ्जूषां चैव कन्यकाम्।**
**स्वमतं सम्यगुपपाद्य शिवयोरर्पितौ मया।।** इत्युक्तं सङ्गच्छते।

श्रीनागेशभट्टस्य प्रधानशिष्यः श्रीवैद्यनाथपायगुण्डे आसीत्। नागेशग्रन्थहृदयग्रन्थीनयं सम्यग् जानाति स्म। १७५० तमवैक्रमाब्दात् १८२५ तमवैक्रमाब्दं यावदस्य कालः स्वीक्रियते। श्रीवैद्यनाथपायगुण्डेविदुषो मन्नुदेवः प्रधानशिष्यो बभूव। वैद्यनाथपुत्रेण बालशर्मणा १८४० तः १८७० वैक्रमाब्दमध्ये कोलम्ब्रकाज्ञया मन्नुदेवमहादेवयोः

सहयोगेन धर्मशास्त्रसङ्ग्रहः सङ्कल्पितः। मन्नुदेवस्य काशीनाथो जातः शिष्यो महान्। काशीनाथस्य च बालशास्त्री तर्जनीगणनामियात्। श्रीबालशास्त्रिणस्त्रयः शिष्याः शिवकुमारशास्त्रितात्याशास्त्रिदामोदरशास्त्रिणः परमां प्रसिद्धिमलभन्। त्रयोऽपि काशीमधिवसन्तः पाठयामासुः।

**माता श्रीगोपिकाख्या स्म भवति जनकः श्रीमहादेवशर्मा**
**पूज्यः श्रीबालशास्त्री विबुधनृपनुतोऽभूद् गुरुर्यस्य मुख्यः।**
**तात्येत्याख्या द्वितीया सकलजनमता यज्जनिः काशिकायां**
**सोऽयं श्रीरामकृष्णो गुरुजनदयया पूजितोऽभूद् बुधेषु।।**

नागोजीभट्टविरचितपरिभाषेन्दुशेखरभूतिटीकाकारस्य श्रीतात्याशास्त्रिणो महाशयोपनामा श्रीरामयशस्त्रिपाठी काशीं मण्डयमानः शिष्यः अध्यापने परां ख्यातिमवाप। एषामेव चरणकमलप्रसादादस्मद्गुरवः श्रीरामप्रीतद्विवेदिनो व्याकरणशास्त्राध्ययनं चक्रुः। श्रीशिवकुमारशास्त्रिशिष्यश्रीहाराणचन्द्रभट्टाचार्याऽन्तेवासित्वेन चाचार्योपाधिं लब्धवन्तः।

**तेषां गुरुमहेशानां स्थित्वा पादतले सदा।**
**शब्दशास्त्रं मयाऽधीतं तेजःपालेन शर्मणा।।**

महाभाष्यगूढार्थप्रकाशकस्यास्य व्याकरणशास्त्रशेखरायमाणस्य लघुशब्देन्दुशेखरस्य भट्टी-विषमी-शांकरी-श्रीधरी-चन्द्रकला-वरवर्णिनी-नागेशोक्तिप्रकाशिकाख्याः पाण्डित्य-प्रचुराष्टीकाः सन्ति। यत्र शेखरकारस्य मण्डनं खण्डनञ्चापि महत्समारोहेण समुपलभ्यते। तेषां दुरूहतां वीक्ष्य पण्डितप्रवरेण श्रीब्रह्मदत्तद्विवेदिना सरलया सरसया च भाषया राधिकानाम्नी टीका व्यरचि, किन्तु पञ्चसन्ध्यन्तमेव सा। अतोऽग्रेऽपि सरलया सरसया च टीकया लघुशब्देन्दुशेखरं समलङ्कर्त्तुकामस्तत्रोपवर्णितान् दुरधिगमानपि व्याकरणशास्त्रसिद्धान्तान् अयं तेजःपालशर्मा प्रश्नोत्तरप्रणालीमूरीकृत्य सहजावगमशैल्या संस्कृतशब्दप्रोतया च भाषया हिन्दीभाष्यं तनुते, येनास्य ग्रन्थस्य करालेऽप्यस्मिन् कलिकाले मूलं संरक्षितं यथा स्यात्। यद्यप्यस्य व्याख्यानस्य शैली सरला, तथापि मध्येगङ्गं प्रवहमानकठिनकाष्ठमिव किञ्चित् काठिन्यं विषयवस्तुनो गाम्भीर्याच्छास्त्रप्रकृत्यनुरूपाच्च व्याख्यानेऽपि समागतम्।

**'ग्रन्थावबोधिकां युक्तिं भैरवी तनुते सदा'** इति गुरोरुक्तिं मनसि निधाय श्रीभैरवमिश्रविरचितया भैरवीटीकया सहैव हिन्दीभाष्योपेतलघुशब्देन्दुकारकं समलङ्कृतम्। श्रीभैरवमिश्रपरिचयस्तु—

**आसीदृषिवरः श्रीमानगस्त्यः कुम्भसम्भवः।**
**स्फीते तस्य कुले जातो जगदीशस्तदात्मजः।।**
**वन्दिमिश्र इति ख्यातो यस्येयं कुलसन्ततिः।**
**श्रीभवानीवरेणास्मिंल्लोके विख्यातिमागता।।**
**तदात्मजो लक्ष्मणोऽभूदद्वितीयस्तदात्मजः।**
**भवदेवाभिधः श्रीमान् विद्वद्वर उदारधीः।।**
**तत्सूनुर्भैरवः काश्यां जातो मिश्रोपनामकः।।**इति।।

कृतेऽपि प्रयत्ने गच्छतः स्खलनमिति न्यायान्मतिमान्द्यादिभिर्जातं स्खलनं समुपेक्ष्य हंसक्षीरन्यायेन सफलयन्तु मत्परिश्रमं गुणैकपक्षपातिनः प्राज्ञवरा इति भूयो भूयो निवेदयन्नस्ति।

**सम्पादकः**

# उपोद्घातः

श्रीगुरुचरणों की परमानुकम्पा से महामहोपाध्यायश्रीनागेशभट्टविरचित लघुशब्देन्दुशेखरग्रन्थ के अध्ययन करने का परमसौभाग्य समुपलब्ध हुआ था। ग्रन्थाध्ययनकाल में अभ्यागत आचार्यश्रीरवीन्द्रनाथपन्त (प्रधानाचार्य, एकरसानन्द, मैनपुरी) एवं ज्येष्ठभ्राता श्रीचन्द्रभानुशर्मा (उपाचार्य, व्याकरणविभाग, का.हि.वि.वि., वाराणसी) के मध्य वार्त्तालापप्रसङ्ग में श्रीपन्तद्वारा समुपदिष्ट 'यदि लघुशब्देन्दुशेखर की हिन्दी-टीका होती तो छात्रों का महान् उपकार होता' वाक्य ने हृदय में हिन्दी-टीका करने की सदिच्छा को समुत्पन्न कर दिया। वार्त्तासमुद्भूत-सदिच्छा ने चिरकालोपरान्त श्रीजगन्नाथविश्वनाथोभयकृपाकटाक्षजन्यसामर्थ्य से प्रकाशनपरिधानोपलब्धि का अवसर पाया। मनोरथ सफल हुआ, मनोरथसाफल्योपलब्धि के निमित्त कृतपरिश्रम के मूल्याङ्कनहेतु एवं विद्वज्जनोपभोग के लिये इसका परिवेषण आवश्यक था। परिवेषणार्थवस्तुप्रकाश के लिये निदेशक, प्रकाशन-संस्थान, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी की अधमर्णता हृदय से स्वीकार करता हूँ, यथा—भक्तनिष्ठभक्तिसमुद्भूतप्रीत्याश्रय श्रीहरि भक्त के अधमर्ण हैं, तथैव प्रकाशनस्वीकृतिजन्यहर्षाश्रय मेरी अधमर्णता स्वभावसिद्धा है। काशीप्राप्ति के फलस्वरूप प्रस्तुतविचारपरिमलपरिपूर्णशब्दसरोरुह से प्रात:स्मरणीयश्रीगुरुचरणसमर्चना का स्वर्णावसर समुपलब्ध हुआ, इसके लिए ज्येष्ठभ्राता श्रीचन्द्रभानुशर्मा के प्रति मेरी अधमर्णता व्यवहारसिद्धा तथा हेतुसिद्धा भी है। 'मूलं नास्ति कुत: शाखा' श्रीगुरुचरणों के प्रति मन्निष्ठा मूलरूपा अधमर्णता तो सदा-सर्वदा रहेगी ही, यतो हि विना मूल के पत्र-शाखा-प्रशाखा और पुष्पादि की कल्पना ही गगनारविन्दवन्निरर्थिका है। महाप्रलयोपरान्त समग्र-सामग्री-समवधान होने पर भी यथा 'बहु स्याम्' इत्याकारिकेच्छासमुत्पादक अनुकूलकाल की समुपस्थिति होने पर ही ईश्वर सृष्टि-समुत्पादन में सक्षम होते हैं, तथैव मल्लेखनसृष्टिप्रकाशानुकूलकालस्वरूप प्रोफेसर श्रीराममूर्त्तिशर्मा का सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय के कुलपतिपद पर आगमनकाल सिद्ध हुआ।

प्रकृतव्याख्याप्रकाशकामना की प्रपूर्त्ति हेतु श्रीजगन्नाथमहाप्रभु के चरणकमलों में निवेदन किया था, परन्तु श्रीविश्वनाथकृपाकटाक्षजन्यलेखापरिधानोपलब्धि सुनिश्चित होने के कारण महाप्रभु ने प्रकाशनकार्यभार श्रीविश्वनाथ जी के हाथों

में सौंप दिया। विषयवस्तुप्रकाशननिमित्तपरिकल्पितप्रस्तुतटीका जिसका 'हिन्दीभाष्यम्' नामकरणोपकल्पित हुआ है। अन्तर्गर्भित तत्त्वपरिपूर्णविषयवस्तु की गम्भीरता को ध्यान में न रखकर टूटी-फूटी भाषा में विषयवस्तु का वर्णन करने पर प्रयुक्त 'अरे! इन्होंने तो कोरा भाष्य ही कर दिया' वाक्योपदिष्ट भाष्यशब्दवत् प्रकृतभाष्यशब्द का प्रयोग है, अथवा सूत्रशैलीसमुपदिष्टविषयवस्तुप्रकाशक अव्याप्त्यतिव्याप्त्यसंभवदोषत्रयविरहितविवरण के निमित्त प्रयुक्त भाष्यशब्दवत् प्रकृत भाष्यशब्द का प्रयोग है। इसका निर्णय तो 'आपरितोषाद् विदुषां न साधु मन्ये प्रयोगविज्ञानम्' के आधार पर ही होना है, तथापि मन्मनोजन्यभावनानुसार प्रकृतव्याख्याप्रक्रिया अध्येतृहृदय में अवशिष्टग्रन्थावबोधन की क्षमता समुत्पन्न करने में सहायिका का कार्य करती है। व्याख्यान्तर्गतसमाश्रितविभिन्नमतभेदपरिशीलन-पूर्वकसिद्धान्तस्थापनप्रक्रिया शोधार्थियों के लिए अमृतासव है। हृदय में विषयावधानपुरःसर उचितानुचितनिर्णयक्षमता की संवर्धिका शङ्खपुष्पी है। प्रस्तुत व्याख्या का सम्पूर्ण कलेवर प्रश्नोत्तररूप से परिकल्पित होने के कारण अविच्छिन्नगुरुशिष्यपरम्पराध्ययनप्रक्रिया का प्रस्तुत व्याख्या प्रतिनिधित्व करती है। सम्पूर्ण-व्याख्या की प्रश्नोत्तररूप से परिकल्पना होने के कारण अध्येता परस्परवाग्विनोदद्वारा पूर्वाचार्यपरिकल्पितशास्त्रार्थशैली का संरक्षण करने में अपना योगदान कर सकते हैं। वर्त्तमान उपयोगितावादी संस्कृति में उपबृंहित अपनी तर्कणाशक्ति से इन ग्रन्थों की उपयोगिता का प्रतिपादन करने में पूर्णतया सक्षम सिद्ध हो सकते हैं। प्रकृतव्याख्या में परिष्कारशैली में वर्णित गूढतम-विषयों को सरलभाषा के माध्यम से सहजबोधगम्य बनाने का यथाशक्ति प्रयास किया गया है। सूत्रशैलीसमुपदिष्टविषयों का प्रस्तुत-व्याख्या में विशद-विवेचन प्रस्तुत किया गया है, जिससे ग्रन्थग्रन्थिशिथिलीकरण की प्रक्रिया का अध्येता के मनोमस्तिष्क में सहज ही परिप्रकाश हो जाता है। प्रकृतव्याख्या ने मनःसमाकर्षणशैलीद्वारा नाना-शास्त्रीय-विषयों का निरूपण करने में अपना पूर्णयोगदान किया है, अत एव दुरूहविषयावबोधजन्य अजीर्णता एवं विषयवैराग्य जैसे दोषों का अपनोदन करने के लिए लवणभास्कर का भी कार्य प्रकृत-व्याख्या करती है। फलविक्रेता तो अपने कटु-कषाय-रसपरिपूरितफलों की मिष्टता का यथाशक्ति प्रतिपादन करता ही रहता है। वास्तविक रस-रहस्य का सच्चा-सच्चा परिज्ञान तो आस्वादकवृत्तिव्यापारजन्य आस्वादपरिपूर्णवर्णन से ही होता है, अतः समास्वादन के लिए विषयवस्तु विद्वच्चरणों में समर्पित है।

**व्याख्या का कलेवर प्रश्नोत्तररूप से परिकल्पित होने के कारण प्रस्तुत व्याख्या अविच्छिन्नगुरुशिष्यपरम्परा का प्रतिनिधित्व करती है, तद्यथा–स्वौजसमौट्. इति विहितस्वादीनामर्थविशेषव्यवस्थां दर्शयितुमाह–प्रातिपदिकार्थेति।**

प्र.— स्वादि समस्त-विभक्तियों का एकत्व, द्वित्व अथवा बहुत्व अर्थ होने के कारण 'द्व्येकयोर्द्विवचनैकवचने' 'बहुषु बहुवचनम्' शास्त्रद्वारा ही इनका विधान संभव है, अत: 'प्रातिपदिकार्थ.' इत्यादि शास्त्रोपदेश व्यर्थ है?

उ.— स्वादि समस्तविभक्तियों का एकत्व, द्वित्व अथवा बहुत्वेति सामान्यार्थप्रतिपादन है, इनके विशेषार्थपरिज्ञान के लिए अर्थात् जिस अर्थ का प्रतिपादन करने में विभक्त्यन्तर सक्षम नहीं है, तदर्थप्रतिपादनार्थ प्रातिपदिकार्थेत्यादि-शास्त्रोपदेश परमावश्यक है।

※ ※ ※

प्र.— क्रियानिरूपित ही कर्मादिकारक होते हैं। तद्यथा—'रामं पश्य' स्थल में दर्शनक्रिया का कर्म है राम, 'रामेण कृतम्' में उत्पत्तिक्रिया का कर्त्ता है राम, अर्थात् कर्म-करण-सम्प्रदानादि क्रिया के ही होते हैं। 'राम:' पद का तो विना क्रिया के भी प्रयोग होता ही है, अत: प्रथमा कारक-विभक्ति नहीं है?

उ.— **इदमपि सूत्रं क्रियायोगे एव प्रवर्त्तते, अन्ततोऽस्तिक्रियाया: सर्वत्र सत्त्वात्**। प्रथमाविभक्ति भी क्रिया के योग में ही आती है, अत: यह भी कारकविभक्ति है। राम:, श्याम: इत्यादिपदोपदेश करने पर आकाङ्क्षा बनी ही रहती है, कि राम: क्या है? अस्ति, भवति या गच्छति, इसीलिए भाष्यकार ने कहा—**अस्तिभवतिपर: प्रयुज्यत एव**।

प्र.— क्रिया में जिसका अन्वय होता है उसे **कारकविभक्ति** कहते हैं। 'राम: गच्छति' वाक्य से रामाभिन्नैककर्तृवृत्ति: संयोगानुकूलो वर्त्तमानकालो व्यापार:' अर्थबोध होता है। अत्र आख्यातार्थ कर्त्ता का व्यापार में=क्रिया में अन्वय है, प्रथमान्तार्थ का आख्यातार्थ कर्त्ता के साथ अभेदसम्बन्ध से अन्वय होता है, तथा च प्रथमान्तार्थ का क्रिया में अन्वय न होने से प्रथमा कारकविभक्ति नहीं है?

उ.— **आख्यातार्थकर्त्रादिनाऽभेदान्वयेन तद्द्वारक: क्रियान्वयो बोध्य:**। प्रथमान्तार्थ का आख्यातार्थ कर्त्ता के साथ अभेदसम्बन्ध से अन्वय होता है, अथ

च आख्यातार्थ कर्त्ता का वृत्तित्वसम्बन्ध से क्रिया में अन्वय होता है, तथा च प्रथमान्तार्थ का भी परम्परया क्रिया में अन्वय होने से प्रथमा भी **कारकविभक्ति** कहलाती है। प्रथमा कारकविभक्ति है, इसमें **'सहयुक्तेऽप्रधाने'** सूत्र का भाष्य भी प्रमाण है। 'सहयुक्तेऽप्रधाने' शास्त्र में 'अप्रधाने' पदोपदेश क्यों किया? इत्याशङ्का का समाधान करते हुए **भाष्यकार** ने कहा कि—**'अप्रधाने पदोपदेशाभावे–'पुत्रेण सहागतः पिता'** वाक्यघटक पितृ और पुत्र उभयप्रातिपदिकों से तृतीयाविधान प्राप्त होगा। सहयोग में प्रधान से तृतीयावारण करने के **'अप्रधाने'** पदोपदेश आवश्यक है। **पुनरपि भाष्यकार बोले**—सहपद के योग में विधीयमानतृतीया उपपदविभक्ति है, अथ च प्रथमा कारकविभक्ति, अत एव **'उपपदविभक्तेः कारकविभक्तिर्बलीयसी'** नियमबल से प्रथमा तृतीया का बाध कर देगी। प्रकृत-प्रसङ्ग में भाष्यकार ने प्रथमा को मुक्तकण्ठ से **कारकविभक्ति** स्वीकार किया है। यद्यपि **'पुत्रेण सहागतः पिता'** वाक्यद्वारा आर्थिकप्राधान्य पुत्र का अवगत होता है, अर्थात् पुत्र न आता तो उसके साथ आनेवाले पिता का आगमन कैसे होता? तथापि व्याकरणशास्त्र में आर्थिकप्राधान्य और **शाब्दिकप्राधान्य** के मध्य शाब्दिकप्राधान्य का ग्रहण होने से व्याकरणसिद्धान्तानुसार व्यापारमुख्यविशेष्यकशाब्दबोधप्रक्रिया में व्यापारान्वयी पिता का प्राधान्य स्वीकार किया जाता है। **'क्रियाजनकत्वं कारकत्वम्'** इस पक्ष में भी 'रामः गच्छति' तथा 'रामः अस्ति' वाक्यों से गमन और स्थिति क्रियाओं के जनक प्रथमान्तार्थ राम का ही बोध होता है, अत एव प्रथमा **कारक-विभक्ति** कहलाती है।।इत्यादि।

❊ ❊ ❊

**इसी प्रकार 'इहोक्तार्थत्वादिति–उक्तार्थानामप्रयोगात्' इति शेखरोक्ति-व्याख्यानप्रसङ्ग में—**

प्र.— एकप्रातिपदिक का एक, एकत्व और समवाय अर्थ है, द्विप्रातिपदिक का द्वि, द्वित्व और समवाय तथा बहुप्रातिपदिक का बहु, बहुत्व और समवाय अर्थ है। एकत्व, द्वित्व और बहुत्व अर्थों की क्रमशः एक, द्वि और बहु प्रातिपदिकों से नियत उपस्थिति होने के कारण इनको प्रातिपदिकार्थ कहते हैं, तथा च एक, द्वि एवं बहु प्रातिपदिकों से

**प्रातिपदिकार्थमात्रे प्रथमा** का विधान संभव है, अत: प्रकृतशास्त्र में **वचनशब्दोपदेश** व्यर्थ है?

उ.— **उक्तार्थानामप्रयोगात्**—लोक में सकृद् घटानयन के उद्देश्य से यथा 'घटमानय' कहने के अनन्तर 'कलशमानय' वाक्य का प्रयोग नहीं होता है, तथैव शास्त्र में **'उक्तार्थानामप्रयोग:'** न्यायानुसार शब्दान्तरोक्तार्थ-प्रतिपादक शब्दान्तर का प्रयोग नहीं होता है, अत एव एक, द्वि और बहु प्रातिपादिकों से एकत्व, द्वित्व और बहुत्व संख्यारूप अर्थ समुक्त होने के कारण एकप्रातिपदिक से सुप्रत्यय, द्विप्रातिपदिक से औप्रत्यय और बहुप्रातिपदिक से जस्प्रत्यय की अप्राप्ति होती है। संख्यावाचक एक, द्वि और बहुप्रातिपदिकों से स्वादिविधान करने के लिए प्रकृतशास्त्र में **वचनशब्दोपदेश** किया है।

प्र.— प्रकृतशास्त्र में वचनशब्दोपदेश करने के अनन्तर भी **'उक्तार्थानामप्रयोग:'** न्यायानुसार संख्यावाचक एक, द्वि और बहुप्रातिपदिकों से क्रमश: सु, औ और जस् प्रत्यय नहीं आने चाहिए।

उ.— प्रकृतशास्त्र में **वचनशब्दोपदेश** करने के अनन्तर भी संख्यावाचक एक, द्वि और बहुप्रातिपदिकों से सु, औ तथा जस् प्रत्ययों का विधान नहीं होगा, अत एव वचनशब्दोपदेश व्यर्थीभूय ज्ञापन करता है कि प्रातिपदिकार्थ. सूत्र में **'उक्तार्थानामप्रयोग:'** न्यायाश्रयण नहीं होता है।

प्र.— **'शब्दान्तरोक्तार्थप्रतिपादकशब्दानन्तर का प्रयोग नहीं होता है'** न्यायानुसार एकत्व, द्वित्व एवं बहुत्व संख्याबोधक एक, द्वि और बहुशब्दों से क्रमश: सु, औ एवं जस् प्रत्यय का विधान प्राप्त नहीं होता है। **'वचनमात्रे प्रथमा'** कथनसामर्थ्यात् 'उक्तार्थानामप्रयोग:' न्याय की प्रवृत्ति न होने से एकप्रातिपदिक से सुप्रत्यय, द्विप्रातिपदिक से औप्रत्यय और बहुप्रातिपदिक से जस्प्रत्यय का विधान हुआ, यह कथन असंगत है। प्रकृतस्थल में एकत्वसंख्याबोधक एकप्रातिपदिक से औप्रत्यय का द्वित्वसंख्याबोधक द्विप्रातिपदिक से जस्प्रत्यय का एवं बहुत्वसंख्याबोधक बहुशब्द से सुप्रत्यय का विधान करने पर **'उक्तार्थानामप्रयोग:'** न्याय की विषयता ही नहीं रहती है। अत एव **वचनशब्दोपदेशसामर्थ्यात्** न्याय की अप्रवृत्तिकल्पना करना सर्वथा असंगत है?

उ.— **प्रातिपदिकप्रतिपादितसंख्याविशिष्टे संख्यान्तराभावाच्च तदप्राप्तिः।** 'प्रकृत्यर्थानुवादिका विभक्ति के विधान की संभावना होने पर अनन्वितार्थकविभक्तिकल्पना करना अन्याय्य है' इत्यर्थक **'अनन्वितार्थक-विभक्तिकल्पनापेक्षया अनुवादकविभक्तेरेव न्याय्यत्वम्'** इति सिद्धान्तानुसार एकत्वविशिष्टार्थबोधक एकप्रातिपादिक से द्वित्वार्थबोधिका औविभक्ति का विधान असंभव है, अथ च **'उक्तार्थानामप्रयोगः'** न्यायानुसार एकत्वसंख्यावाचक एकशब्द से सुप्रत्यय की अप्राप्ति होती है, अत एव एकत्वसंख्याबोधक एकप्रातिपदिक से सुप्रत्यय का, द्वित्वसंख्याबोधक द्विप्रातिपदिक से औप्रत्यय का एवं बहुत्वसंख्याबोधक बहुप्रातिपदिक से जस्प्रत्यय का विधान करने के लिए **वचनशब्दोपदेश** आवश्यक है।

**इसी प्रकार द्रोणप्रातिपदिक से परिमाण अर्थ में प्रथमाविधानप्रसङ्ग में—**

प्र.— द्रोणप्रातिपदिक से परिमाण अर्थ में प्रथमा का विधान होकर 'द्रोणः' पदोपपत्ति होती है, तथा च 'द्रोणः' पद से ही द्रोणपरिमाण अर्थ की प्रतीति संभव है, अतः द्रोणपरिमाण अर्थबोधनेच्छा से **'द्रोणः परिमाणम्'** वाक्योपदेश असंगत है?

उ.— यथा—**'ब्राह्मणौ'** पदोपदेशमात्र से ही 'दो ब्राह्मण' अर्थ की प्रतीति होने पर भी लोक में **'द्वौ ब्राह्मणौ'** प्रयोग होता है, तथैव **'द्रोणः'** पदोपदेशमात्र से द्रोणपरिमाण अर्थ की प्रतीति होने पर भी **'द्रोणः परिमाणम्'** वाक्य का प्रयोग होता है। अथवा द्रोणशब्द अनेकार्थक है, यथा—

**केशवं पतितं दृष्ट्वा द्रोणो हर्षमुपागतः।**
**रूदन्ति कौरवाः सर्वे हा हा केशव केशव।।**

इस प्रकार इतरव्यावर्त्तनार्थ **'द्रोणः'** पद के साथ **'परिमाणम्'** पद का प्रयोग किया गया है।

❊ ❊ ❊

**'कर्त्तुरीप्सिततमं कर्म' इति सूत्रव्याख्याप्रसङ्ग में—**

प्र.— क्रिया के नियतपूर्व **कारक की सत्ता** रहती है। **'स्तोकं पचति'** इत्यादि स्थल में स्तोक तो फल है, यह तो पाकक्रिया के अनन्तर ही समुत्पन्न होता है, क्रिया के पूर्व स्तोक की वृत्तिता सर्वथा असंभव है, तथा च **'स्तोकम्'** कर्मकारक कैसे कहलाता है?

उ.— प्रथमत: फलज्ञान, तत: फलप्राप्ति की इच्छा, तदनन्तर फलप्राप्त्युपायान्वेषण, एतादृशोपाय में साध्यताविषयकज्ञान होने पर ही प्रवृत्ति होती है। **प्रकृत बौद्धक्रम में स्तोकरूप फल की क्रिया के पूर्व में वृत्तिता सिद्ध होने से 'स्तोकम्' कारक** कहलाता है।

※ ※ ※

**इसी प्रकार 'कर्तुरीप्सिततमं कर्म' इति शास्त्रज कर्तृवृत्तिव्यापारविशिष्ट-फलाश्रय की कर्मसञ्ज्ञा होती है, अर्थान्तर्गत व्यापार का फल में सम्बन्धद्वय से अन्वयप्रसङ्ग में—**

प्र.— व्यापार का फल में **स्वप्रयोज्यत्वसम्बन्ध** से वैशिष्ट्य स्वीकार करने मात्र से ही **'देवदत्तः ग्रामं गच्छति'** इत्यादि स्थल में प्रकृतवाक्योच्चरित-गम्-धातूपात्तप्रधानीभूतव्यापाराश्रयाऽभिन्नाश्रयवृत्तिगमनव्यापारप्रयोज्यसंयोग-रूपफल के आश्रय ग्रामादि की **कर्मसञ्ज्ञा** संभव है, अत: **स्ववाचकधातु-वाच्यत्वेति द्वितीयसम्बन्ध** से व्यापार का फल में वैशिष्ट्य स्वीकार करने की क्या आवश्यकता है?

उ.— व्यापार का फल में **'स्ववाचकधातुवाच्यत्वसम्बन्ध'** से वैशिष्ट्य स्वीकार न करने पर **'प्रयागात् काशीं गच्छति'** वाक्यघटक प्रयाग की भी कर्मसंज्ञा हो जावेगी, यतो हि प्रकृत स्थल में कर्तृवृत्तिगमनव्यापार से **विभाग एवं संयोग** दो फल समुत्पन्न होते हैं। विभाग का आश्रय प्रयाग है, तथा संयोग का आश्रय काशी है। प्रयाग की कर्मसंज्ञा का वारण करने के लिए **स्ववाचकधातुवाच्यत्वसम्बन्ध** का निवेश करना आवश्यक है। गम्धातु का संयोगानुकूलव्यापार अर्थ है, अर्थात् विभागरूपफल गम्धातुवाच्य नहीं है, अत एव **विभागाश्रय प्रयाग की कर्मसंज्ञा** नहीं होती है।

※ ※ ※

## ध्रुवमपायेऽपादानम् ।।१.४.२४।।

प्र.— 'विभागजनकव्यापारनिष्पादन में कारक की अपादानसंज्ञा होती है' इत्येतदर्थक **'अपायेऽपादानम्'** सूत्रोपदेश करने से ही 'ग्रामादायाति' इत्यादि प्रयोगोपपति संभव है, प्रकृतसूत्र में **'ध्रुवम्'** पदोपदेश क्यों किया है?

उ.— 'विभागजनकव्यापारनिष्पादन में कारक की अपादानसंज्ञा होती है' इत्येतदर्थक 'अपायेऽपादानम्' शास्त्रोपदेश करने पर विभागजनकव्यापाराश्रय की भी अपादानसंज्ञा होने लगेगी, अत एव विभागजनकव्यापारनिष्पादन में विभागजनकव्यापाराश्रय की अपादानसंज्ञावारण करने के लिए **'ध्रुवम्'** पदोपदेश किया है।

प्र.— **'अपायेऽपादानम्'** सूत्रोपदेश करने पर विभागजनकव्यापाराश्रयत्वेन अपादानसंज्ञा प्राप्त है, अथ च **'स्वतन्त्रः कर्त्ता'** सूत्रद्वारा कर्तृसंज्ञा प्राप्त है। कर्तृसंज्ञा अपादानसंज्ञा से पर है। अतः **परत्वात्** हेतु से ही विभागजनकव्यापाराश्रय की अपादानसंज्ञा का वारण संभव है, **'ध्रुवम्'** पदोपदेश व्यर्थ है?

उ.— **'ध्रुवम्'** पदोपदेश न करने पर विभागजनकव्यापारनिष्पादन में विभागजनकव्यापाराश्रय की **अपादानसंज्ञा** और **कर्तृसंज्ञा** दोनों प्राप्त होती हैं। **'देवदत्तः पचति'** इत्यादि स्थल में जहाँ विभागजनकव्यापार नहीं है, **कर्तृसंज्ञा** चरितार्थ है, अत एव विभागजनकव्यापारनिष्पादनस्थल में विभागजनकव्यापाराश्रय की प्राप्त कर्तृसंज्ञा का अपादानसंज्ञाद्वारा **अपवादत्वहेतु** से बाध हो जावेगा, इसलिए विभागजनकव्यापाराश्रय की अपादानसंज्ञा का वारण करने के लिये **'ध्रुवम्'** पदोपदेश आवश्यक है।

प्र.— यदि विभागजनकव्यापारनिष्पादन में **ध्रुव** की अपादानसंज्ञा अभीष्ट है, तर्हि **'धावतोऽश्वात् पतति'** स्थल में दौड़ते हुए अश्व के अध्रुव होने पर **'अश्व'** की अपादानसंज्ञा कैसे?

उ.— अध्रुव अश्व में **ध्रौव्यारोपपूर्वक** अश्व की अपादानसंज्ञा होती है। भाष्यकार ने भी अध्रुव में ध्रौव्यारोपपूर्वक ही **'धावतोऽश्वात् पतति'** इत्यादि प्रयोगों की साधुता स्वीकार की है।

※ ※ ※

**सम्पूर्ण व्याख्या ही प्रश्नोत्तररूप से कल्पित है, जिससे अध्येता परस्पर वाग्विनोदद्वारा हमारे पूर्वाचार्यों की शास्त्रार्थ-शैली का संरक्षण करने में अपना योगदान कर सकते हैं। साथ ही साथ इस उपयोगितावादी संस्कृति में इन ग्रन्थों के परमोपयोगी होने की बात का भी अपनी उपबृंहित तर्कणाशक्तिद्वारा प्रतिपादन करने में पूर्णतया सक्षम सिद्ध हो सकते हैं। प्रकृत-व्याख्या में परिष्कारशैली में वर्णित विषयों का एवं दुरूह विषयों का सरलभाषा के माध्यम से परिप्रकाशपूर्वक सहजबोधगम्य बनाने का पूरा-पूरा प्रयास किया गया है।**

**तद्यथा—'कर्त्तुरीप्सिततमं कर्म'** इति शास्त्रघटक **ईप्सितशब्द** यौगिक है। **ईप्सितशब्द** में आप्धातु है, सन्, क्त एवं तमप् तीन प्रत्यय हैं। आप्धातु का व्यापारविशिष्टफलाश्रयत्वरूपसम्बन्ध अर्थ है। सन्प्रत्यय का इच्छा अर्थ है, क्तप्रत्यय का विषयताश्रय अर्थ है। तमप्प्रत्ययसामर्थ्यात् स्वप्रयोज्यत्वसम्बन्ध का निवेश होता है। आप्धात्वर्थव्यापारविशिष्टफलाश्रयत्व का सन्नर्थेच्छा में स्वप्रकारकत्वसम्बन्ध से, सन्नर्थेच्छा का क्तप्रत्ययार्थ विषयताश्रय के एकदेश विषयता में स्वनिरूपितत्वसम्बन्ध से अन्वय होकर 'ईप्सित' शब्द से **'व्यापारविशिष्टफलाश्रयत्वप्रकारिका या इच्छा तादृशेच्छानिरूपिता या विषयता तादृशविषयताश्रयः'** अर्थ की उपस्थिति होती है। 'कर्त्तुः' पद में 'कर्तृ' प्रकृति है, ङस् प्रत्यय है। 'क्तस्य च वर्त्तमाने' सूत्रद्वारा कर्त्ता अर्थ में षष्ठीविभक्ति का विधान हुआ है, अत एव प्रकृत्यर्थ भी व्यापाराश्रय एवं प्रत्ययार्थ भी व्यापाराश्रय होता है, तथा च प्रत्ययार्थ का प्रकृत्यर्थ के साथ 'घटो घटः' की भाँति परस्पर अन्वय असंभव होने के कारण प्रत्ययार्थगत व्यापारांश की अविवक्षा कर देते हैं। यथा—'घटमानय' कहने के अनन्तर, कैसा घट लावें? जिज्ञासोपशमन के लिए आचार्य 'नीलघटम्' पदोपदेश करते हैं, अर्थात् 'नीलघटविशिष्ट घट लाओ'। **विधेयांश में अधिकावगाहिशाब्दबोध होता है'**। नियमद्वारा यथा—नीलघट का घट के साथ अभेदसम्बन्ध से अन्वय होता है, तथैव प्रत्ययार्थ आश्रय का प्रकृत्यर्थ व्यापाराश्रय के साथ अभेदसम्बन्ध से अन्वय होकर 'कर्त्तुः' पद से **'व्यापाराश्रयाभिन्नाश्रय'** अर्थ की उपस्थिति होती है। व्यापाराश्रयाभिन्नाश्रय का स्ववृत्तित्वसम्बन्ध से आप्धात्वर्थव्यापारविशिष्टफलाश्रयत्व के एकदेश व्यापार में अन्वय होता है। व्यापाराश्रयाऽभिन्नाश्रय का तात्पर्य कर्त्ता ही है। कौन-सा कर्त्ता

लें? इत्याकाङ्क्षा में **उपस्थिततत्वात्** एवं **'प्रधानाऽप्रधानयोः प्रधाने कार्यसम्प्रत्ययः'** नियमानुसार प्रकृतधातूपात्तप्रधानीभूतव्यापाराश्रय कर्त्ता का ग्रहण होता है, तथा च **'कर्त्तुरीप्सिततमं कर्म'** सूत्रद्वारा **प्रकृत-धातूपात्तप्रधानीभूतव्यापाराश्रयाभिन्नाश्रयवृत्तिव्यापारविशिष्टफलाश्रयत्व-प्रकारिकेच्छीयोद्देश्यताश्रय** की कर्मसंज्ञा का विधान होता है। व्यापार का फल में **स्वप्रयोज्यत्व** एवं **स्ववाचकधातुवाच्यत्व** उभयसम्बन्ध से वैशिष्ट्य स्वीकार करते हैं। स्ववाचकधातुवाच्यत्वसम्बन्ध का निवेश करने से **'प्रयागात् काशीं गच्छति'** वाक्यघटक प्रयाग की कर्मसंज्ञा नहीं होती है, यतो हि गम्धातु का संयोगानुकूलव्यापार अर्थ है। विभागरूपफल गम्धातुवाच्य न होने के कारण विभागाश्रय प्रयाग की कर्मसंज्ञा नहीं होती है। **'अग्नेर्माणवकं वारयति'** वाक्यघटक माणवक की अपादानसंज्ञा का वारण करने के लिए **'स्वप्रयोज्यत्व'** सम्बन्ध का निवेश भी आवश्यक है। व्यापार का फल में स्ववाचकधातुवाच्यत्वसम्बन्ध से ही वैशिष्ट्य स्वीकार करने पर **'अग्नेर्माणवकं वारयति'** वाक्यघटक माणवक की अपादानसंज्ञापत्ति होती है, यतो हि वारिधातु का संयोगानुकूलव्यापारा-भावानुकूलव्यापार अर्थ है, संयोगरूपफल का आश्रय अग्नि है और संयोगानुकूलव्यापाराभावरूपफल का आश्रय माणवक है। माणवक के लिए अग्नि ईप्सित है और भृत्य के लिए माणवक ईप्सित है, अत एव वारिधातु के योग में अग्नि और माणवक दोनों की **'वारणार्थानामीप्सितः'** सूत्रद्वारा अपादानसंज्ञा प्राप्त होती है, अथ च कर्तृवृत्तिव्यापारजन्यफलाश्रयतया अग्नि और माणवक दोनों की कर्मसंज्ञा भी प्राप्त है। अन्यधातुओं के योग में **'कर्त्तुरीप्सिततमं कर्म'** सूत्र चरितार्थ है, अत एव **अपवादत्वात्** **'कर्त्तुरीप्सिततमं कर्म'** सूत्र को बाँधकर **'वारणार्थानामीप्सितः'** सूत्रद्वारा माणवक की अपादानसंज्ञा होने लगेगी। **स्वप्रयोज्यत्वसम्बन्ध** का निवेश करने पर **प्रधानीभूतव्यापारप्रयोज्यसंयोगानुकूलव्यापाराभावरूपफल** के आश्रय माणवक की ही कर्मसंज्ञा प्राप्त होती है; संयोगाश्रय अग्नि की नहीं, यतो हि प्रधानीभूतव्यापारप्रयोज्यफल संयोगानुकूलव्यापाराभावरूप-फल है; न कि संयोग, क्योंकि भृत्यादि के व्यापार से माणवक अग्निसंयोग से बच जाता है। तथा च **स्वप्रयोज्यत्वसम्बन्ध** का निवेश करने से **'वाराणार्थानामीप्सितः'** सूत्र **चरितार्थ** हो जाता है, इसीलिए माणवक की अपादानसंज्ञा नहीं होती है। स्वप्रयोज्यत्वसम्बन्ध के स्थान पर

स्वजन्यत्वसम्बन्ध का निवेश नहीं किया, यतो हि **स्वजन्यत्वसम्बन्ध** का निवेश करने पर साक्षात् और परम्परा के मध्य साक्षाज्जन्य फल का ही ग्रहण होगा, तथा च **'गां दोग्धि पयः'** वाक्यघटक गो की कर्मसंज्ञा असंभव है, यतो हि गोपनिष्ठव्यापार से जन्यक्षरणव्यापारद्वारा दुग्ध का गो से विभाग हो रहा है। **'वारणार्थानामीप्सितः'** सूत्रद्वारा वारणार्थकधातु के योग में ईप्सित=धात्वर्थफलाश्रय की अपादानसंज्ञा होती है। प्रवृत्ति को रोक देना ही **'वारण'** कहलाता है, यथा— माणवक अग्निस्पर्श करने जा रहा था, कि भृत्य उसकी प्रवृत्ति को रोक देता है **(अग्नेर्माणवकं वारयति)**। यवभक्षण के लिए प्रवृत्त गौ को रोकता है **(यवेभ्यो गां वारयति)**। 'अग्नेर्माणवकं वारयति' वाक्यघटक **वारिधातु** का **संयोगानुकूलव्यापाराभावानुकूलव्यापार** अर्थ है; 'यवेभ्यो गां वारयति' वाक्यघटक **वारिधातु** का **भक्षणानुकूलव्यापाराभावानुकूलव्यापार** अर्थ है। इसीलिए शेखरकार ने प्रवृत्तिविघात का **भक्षण-संयोगादिफलजनक-व्यापाराभावानुकूलव्यापार** अर्थ किया है।

❊ ❊ ❊

**अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते।।२.३.२९।।**

अन्यशब्द का अर्थ है भेदवान्। भेदवान् पद में दो भाग हैं—१.भेद, २. वान्। अतः **'पटादन्यो घटः'** कहने पर **'पटात् + भेद + वान् + घटः'** रूप से व्यवस्थिति स्वीकार करते हैं। प्रकृतस्थल में पट का भेद में **स्वप्रतियोगिकत्वसम्बन्ध** से अन्वय होता है, अथ च (वान्) मतुप्प्रत्ययार्थ का स्वरूपसम्बन्ध से घट में अन्वय होता है। भेद का घट में अन्वय होने के कारण घट भेद का अनुयोगी कहलाता है, अत एव घट का भेद में **स्वानुयोगिकत्वसम्बन्ध** से अन्वय होता है, इस प्रकार **'पटादन्यो घटः'** वाक्य से **'घटप्रतियोगिकभेदानुयोगिकघटः'** अर्थ की उपस्थिति होती है।

**परे तु** से ग्रन्थकार स्वमतोपस्थापन करते हुए कहते हैं, कि अन्यशब्द का **'भेदविशिष्ट'** अर्थ न होकर **भेद** अर्थ है। भेदशब्द में भिद्धातु है, भेदन-क्रिया है, इसकी कोई न कोई अवधि अवश्य होगी। **क्रिया के प्रति अवधिभूत को ध्रुव कहते हैं**, तथा च भिन्नशब्द के योग में

**'ध्रुवमपायेऽपादानम्'** सूत्रद्वारा ही अपादानसंज्ञा होकर पञ्चमीविभक्ति का विधान संभव है, अतः प्रकृतसूत्रोपदिष्ट अन्यशब्द को अन्यार्थक स्वीकार करने की कोई आवश्यकता नहीं है। अन्य तो क्रिया नहीं है, अतः अन्यशब्द के योग में **'ध्रुवमपायेऽपादानम्'** सूत्रद्वारा अपादानसंज्ञा असंभव है। इस प्रकार **'अन्यारादितरर्त्ते'** सूत्रद्वारा अन्यशब्द के योग में पञ्चमीविभक्ति का विधान करना, अथ च इतरशब्द का ग्रहण करना चरितार्थ होता है, प्रपञ्चार्थक नहीं कहलाता। इसीलिए शेखरकार लिखते हैं, कि 'ध्रुवमपायेऽपादानम्' शास्त्रोक्त **अपायशब्द** से विश्लेषजनक=भेद करनारूप व्यापार भी लिया जाता है। **'पञ्चमी विभक्ते'** शास्त्र में भी **'विभागो विभक्तम्'** कहकर विभागार्थक भेदशब्द का भेद अर्थ किया है। 'भेदज्ञान के विषय को **विदारण** कहते हैं, अर्थात् 'अलग करना' भेद कहलाता है। भेदशब्द का विश्लेषजनकक्रिया अर्थ होने से भेदशब्द के योग में **'ध्रुवमपायेऽपादानम्'** सूत्रद्वारा अपादानसंज्ञा संभव है। एकत्वेन गृहीतविषय में भेदबुद्धि करने पर भेदस्थल में **बौद्धिकविदारण** की सिद्धि होती है। भेदशब्द का विश्लेषजनकव्यापार अर्थ है, अर्थात् भेदशब्द को क्रियार्थक स्वीकार करने से ही **'घटाद् भेदः'** स्थल में पञ्चमीविभक्ति की उपपत्ति होती है। अन्यशब्द को अन्यार्थक स्वीकार करने पर भी **'घटाद् भेदः'** स्थल में पञ्चमीविभक्ति का विधान असंभव है, यतो हि अन्यशब्द का भेदवान् अर्थ है, भेदमात्र अर्थ नहीं है। भेदवान् की सम्बन्धतया विवक्षा करने पर **'घटीयो भेदः'** प्रयोग भी होता है। अन्यशब्द क्रियार्थक नहीं है, अत एव अन्यशब्द के योग में अप्राप्तपञ्चमीविभक्ति का विधान **'अन्यारादितरर्त्ते'** सूत्रद्वारा होता है। अन्यारादितरर्त्ते सूत्र अन्यशब्द के योग में पञ्चमीविभक्ति करता है, अन्यार्थकशब्द के योग में नहीं, इसीलिए **'घटो न पटः'** स्थल में पञ्चमीविभक्ति नहीं होती है, अन्यथा 'अन्यारादितरर्त्ते.' सूत्रद्वारा अन्यार्थकशब्द के योग में पञ्चमीविधान स्वीकार करने पर यथा **'घटाद् भिन्नः पटः'** स्थल में पञ्चमीविभक्ति होती है, तथैव नञ् का भी भिन्न अर्थ है, अतः अन्यार्थक नञ् के योग में भी **'घटो न पटः'** स्थल में प्रकृतसूत्रद्वारा पञ्चमीविभक्ति होनी चाहिए। यथा अन्यशब्द क्रियाबोधक नहीं है, तथैव नञ् भी क्रियावाचक नहीं है, अथ च 'अन्यारादितरर्त्ते.' सूत्रद्वारा अन्यशब्द के योग में पञ्चमीविभक्ति होती है, अन्यार्थकशब्दों के योग में नहीं, अतः

**'घटो न पटः'** स्थल में अपादानसंज्ञाविधानपूर्वक अथवा प्रकृतसूत्रद्वारा पञ्चमीविभक्ति नहीं होती है। इसीलिए **'घटादेकः'** प्रयोग के असाधुत्व का प्रतिपादन नागेश ने कर दिया, अन्यथा अन्यशब्द को अन्यार्थक स्वीकार करने पर **'एकोऽन्यार्थे प्रधाने च'** इति कोशबल से अन्यार्थक एकशब्द के योग में पञ्चमीविभक्ति के विधान के असाधुत्व का प्रतिपादन असंभव था।।

※ ※ ※

प्र.— अन्यारादितरर्ते. शास्त्रद्वारा दिग्वाचक शब्द के योग में पञ्चमीविभक्ति का विधान होता है, अत एव 'चैत्र से पूर्वकाल में फाल्गुन मास की सत्ता है' इत्यर्थवाग्विवक्षा में प्रयुक्त **'चैत्रात् पूर्वः फाल्गुनः'** वाक्यघटक **कालवाचक पूर्वशब्द** के योग में पञ्चमीविभक्ति का विधान नहीं होना चाहिए?

उ.— अन्यारादितरर्ते. शास्त्र में 'दिक्' पद का उपदेश न कर 'दिक्छब्द' इत्याकारिका आनुपूर्वी का उपदेश किया है। 'दिशि दृष्टः शब्दः' विग्रहपूर्वक **'दिक्छब्द'** इत्यानुपूर्वी उपपन्न होती है, अत एव दिशाशब्द के अर्थ में देखे गये शब्द के योग में भी प्रकृतशास्त्रद्वारा पञ्चमीविभक्ति का विधान सिद्ध होता है, तथा च **'चैत्रात् पूर्वः फाल्गुनः'** वाक्यघटक पूर्वशब्द की कालवाचकता होने पर भी दिगर्थ में पूर्वशब्द की वृत्तिता दृष्टपूर्व होने के कारण पूर्वशब्द के योग में प्रकृतशास्त्रद्वारा पञ्चमीविभक्ति होती है। प्रकृतसूत्रसमुपदिष्ट **'दिक्छब्दयोगे पञ्चमी'** वाक्य की **व्याख्यानसामर्थ्य** से **'दिशा अर्थ में रूढ एवं दिशा अर्थ में दृष्टपूर्व शब्दों के योग में पञ्चमीविभक्ति होती है'** इत्यर्थोपपत्ति स्वीकार करने से ऐन्द्री एवं ककुप् शब्दों के योग में प्रकृतशास्त्रद्वारा पञ्चमीविभक्ति का विधान नहीं होता है, यतो हि ऐन्द्री और ककुप् आदि शब्द दिगर्थवाचक होने पर भी दिशा अर्थ में रूढ नहीं हैं। **'तस्य परमाम्रेडितम्'** पा.सू. ८.१.२ इति सूत्रनिर्देश से दिशा अर्थ में दृष्टपूर्वशब्द की अवयव अर्थ में वृत्तिता होने पर अवयविवाचक शब्द से पञ्चमीविभक्ति नहीं होती है। **'तस्य परमाम्रेडितम्'** शास्त्रद्वारा द्विरुक्तसमुदायघटक उत्तरावयव की आम्रेडितसंज्ञा का विधान होता है। प्रकृतशास्त्रोपदिष्ट दिशा अर्थ में दृष्टपूर्व अवयववाचक

परशब्द का योग होने पर भी तद् शब्द से पञ्चमीविभक्ति का विधान सूत्रकार ने नहीं किया है। **'ज्ञापक सजातीयापेक्ष होते हैं'** अत एव दिशा अर्थ में दृष्टपूर्व अवयववाचक शब्दों के योग में अवयविवाचक शब्द से ही पञ्चमीविभक्ति के विधान का अभाव होता है। इसीलिए **'पूर्वं कायस्य'** स्थल में पञ्चमीविभक्ति नहीं होती है। प्रकृतवाक्यघटक पूर्वशब्द अवयववाचक होते हुए दिशा अर्थ में दृष्टपूर्व है, अथ च कायशब्द अवयविवाचक है। **'ज्ञापक सजातीयापेक्ष होते हैं'** अत एव अवयविवाचक शब्द से ही पञ्चमीविभक्ति का निषेध होता है। इसीलिए **'पर अवयव की अपेक्षा यह अवयव प्रथमकाल में उत्पन्न हुआ'** इत्यर्थवाग्विवक्षा में प्रयुक्त **'अस्मादयं पूर्वो भागः'** प्रयोगोपपत्ति होती है। प्रकृत स्थल में उत्पत्तिकाल को लेकर अवयवों में पूर्वत्व और परत्व का व्यवहार हुआ है। अञ्चूत्तरपद के योग में भी प्रकृतशास्त्रद्वारा पञ्चमीविभक्ति का विधान होता है, यथा—**'प्राक् प्रत्यक् वा ग्रामात्' अञ्चूत्तरपदस्य तु दिक्छब्दत्वेऽपि 'षष्ठ्यतसर्थ'** पा.सू. २.३.३०' **इति षष्ठीं बाधितुं पृथग्ग्रहणम्,** अर्थात् 'प्राक् प्रत्यग्वा ग्रामात्' स्थल में प्राक् एवं प्रत्यक् दोनों शब्दों के दिग्वाचक होने से **दिक्छब्दयोगेऽपि पञ्चमी** कथन से ही पञ्चमीविभक्ति का विधान संभव है; किन्तु अस्तातिप्रत्ययविधानपूर्वक **'अञ्चेर्लुक्'** (पा.सू. ५.३.३०) सूत्रद्वारा अस्तातिप्रत्यय का लुक् होकर निष्पन्न होनेवाले प्राक् और प्रत्यक् शब्द अस्तातिप्रत्ययान्त न होने पर भी **'यः शिष्यते स लुप्यमानार्थाभिधायी'** नियमानुसार अस्तातिप्रत्ययार्थ-बोधक हैं। अस्तातिप्रत्यय से लेकर आहिप्रत्ययपर्यन्त दिग्देशकालवाचक शब्दों से स्वार्थ में प्रत्ययों का विधान होता है, अत एव **'दक्षिणोत्तराभ्यामतसुच्'** सूत्रविहित अतसुच्प्रत्यय का दिग्, देश और काल अर्थ कहलाता है। दिग्देशकाल अर्थ में होनेवाले प्रत्यय **अतसर्थप्रत्यय** कहलाते हैं। **षष्ठ्यतसर्थप्रत्ययेन** (पा.सू. २.३.३०) सूत्र के स्थान में **'षष्ठ्यतसर्थेन'** मात्र सूत्रोपदेश करने पर भी 'अतसर्थप्रत्ययान्त के योग में षष्ठीविधान सम्भव है। अतसर्थप्रत्यय से भिन्न **अतसर्थ** नामक कोई वस्त्वन्तर न होने के कारण अतसर्थशब्द का ही अतसर्थप्रत्यय अर्थ होगा। तथा च प्रत्ययशब्दोपदेश के विना भी **प्रत्यय** अर्थ का लाभ स्वतः सम्भव होने से 'षष्ठ्यतसर्थप्रत्ययेन' शास्त्रघटक **प्रत्ययशब्दोपदेश** व्यर्थ होकर ज्ञापन करता है, कि—**प्रकृतसूत्रद्वारा अतसर्थप्रत्यय के योग**

च इन्द्राणी पद से इन्द्र, इन्द्रत्व, समवाय और स्त्रीत्व अर्थ की प्रतीति होती है। स्त्रीत्व अर्थ तो नियतोपस्थिति का विषय नहीं, अतः इन्द्राणीशब्द से प्रातिपदिकार्थे प्रथमा कैसे?

उ.— "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्" परिभाषाद्वारा इन्द्रवृत्ति प्रातिपदिकत्वधर्म का अतिदेश करने से "इन्द्राणी" इति ङ्यन्तसमुदाय भी प्रातिपदिक कहलाता है। अथ च इन्द्राणीप्रातिपदिकोच्चारण करने के बाद सदा इन्द्राणी, इन्द्राणीत्व, समवाय और स्त्रीत्व अर्थ की ही प्रतीति होती है। अत एव इन्द्राणी प्रातिपदिक से प्रातिपदिकार्थमात्रे प्रथमा का विधान होता है।

प्र.— "प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा" सूत्रद्वारा परिमाणवाचक प्रातिपदिकों से परिमाणमात्रे प्रथमा का विधान होता है। अथ च—

**ऊर्ध्वमानं किलोन्मानं परिमाणन्तु सर्वतः।**
**आयामस्तु प्रमाणं स्यात् संख्या सर्वस्य भेदिका।।**

इति कोशद्वारा हम जानते हैं कि तराजू से तौलने को उन्मान, नपनाविशेष से तौलने को परिमाण कहते हैं, अथ च लम्बाई, चौड़ाई और ऊँचाई नापने को प्रमाण कहते हैं। संख्या सबकी विशेषण होती है। प्रकृतशास्त्र द्वारा "परिमाणमात्रे प्रथमा" का विधान किया जाता है, अत एव नपनेविशेषद्वारा तौलवाचक प्रातिपदिकों से ही परिमाणमात्रे प्रथमा का विधान होना चाहिए। ऊर्ध्वमानबोधक पलादिप्रातिपदिकों से प्रथमा का विधान कैसे?

**उ.शे.– परिमाणशब्दश्च परिच्छेदकपर इत्युन्मानादिष्वपि प्रथमासिद्धिरिति बोध्यम्।**

**भैरवी– उन्मानादिष्वपीति-पलम्-सुवर्णमित्यादौ।**

**"प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा" सूत्रोक्त परिमाणशब्द परिच्छेदसामान्य का बोधक है, अत एव पलादिशब्दों से भी प्रकृतशास्त्रद्वारा परिमाणमात्रे प्रथमा का विधान होता ही है।**

**भैरवी– न च प्रातिपदिकेन स्वार्थस्योक्तत्वात्तत्र कथम्प्रथमेति वाच्यम्? प्रातिपदिकार्थे प्रथमाविधानसामर्थ्येन तत्रोक्तार्थानामिति न्यायाऽप्रवृत्तेः। यथा पञ्चकं प्रातिपदिकार्थः इति पक्षे कारकस्य प्रातिपदिकार्थत्वेऽपि तत्र द्वितीयादीनां विधानम्, अन्यथा विभक्तिरहितस्य प्रयोगः स्यात्।**

स च न केवलेत्यादिवचनबाधितो नापि तेभ्यः कर्मादिप्रतीतिः कस्यापि भवति तथा प्रातिपदिकेन तदर्थे प्रतिपादितेऽपि प्रथमा भवतीति प्राचीनमतनिगर्वः।

''पञ्चकं प्रातिपदिकार्थः'' स्वीकार करने पर लिङ्ग भी प्रातिपदिकार्थ कहलाता है, इत्थञ्च ''प्रातिपदिकार्थमात्रे प्रथमा'' कहने से लिङ्ग अर्थ में भी प्रथमा का विधान संभव है। ''लिङ्गमात्रे प्रथमा'' उपदेश व्यर्थीभूय ''नियतोपस्थितिकः प्रातिपदिकार्थः'' पक्ष स्वीकार किया जाता है। जिसके उच्चैः, नीचैः, कृष्णः, श्रीः और ज्ञानम् उदाहरण हैं।

शे.– परे तु–अत्र सूत्रे प्रातिपदिकार्थशब्देन प्रवृत्तिनिमित्तं तदाश्रयश्च। स च मुख्य इवाऽऽरोपिततदाश्रयोऽपि। अत एव गोपीत्यादौ स्वादिप्रकृतेर्लाक्षणिकत्वेऽपि न दोषः।

भैरवी– स्वसिद्धान्तमाह–परे त्विति। प्रवृत्तिनिमित्तमिति यस्माच्छब्दात्प्रथमाविधानं तत्तच्छब्दप्रवृत्तिनिमित्तमित्यर्थः। स च तदाश्रयश्च। आरोपिततदाश्रयः। प्रवृत्तिनिमित्तप्रकारकारोपविशेष्य इत्यर्थः। अत एव। आरोपित-तदाश्रयग्रहणादेव। लाक्षणिकत्वेऽपि। गोपत्वप्रकारकारोप-विशेष्यार्थबोधकत्वेऽपि।।

अत्र शास्त्रे ''नियतोपस्थितिकः प्रातिपदिकार्थः'' नहीं, अपि तु प्रवृत्तिनिमित्त तदाश्रय इति ''द्विकं प्रातिपदिकार्थः'' स्वीकार किया जाता है। ''द्विकं प्रातिपदिकार्थः'' इत्यत्रापि प्रातिपदिकार्थसूत्रोक्त लिङ्गग्रहण ही प्रमाण है। यतो हि ''पञ्चकं प्रातिपदिकार्थः'' स्वीकार करने पर लिङ्गग्रहण व्यर्थीभूय ''द्विकं प्रातिपदिकार्थः'' का ज्ञापन करता है।

एक प्रवृत्तिनिमित्त तदाश्रय मुख्य होता है और एक प्रवृत्तिनिमित्त तदाश्रय गौण होता है। यथा सिंहः पदोपदेश करने पर जिस सिंहत्व और तदाश्रय सिंह का बोध होता है, यह मुख्य प्रवृत्तिनिमित्त और तदाश्रय है। ''सिंहो माणवकः'' कहने पर माणवक तो सिंह हो नहीं सकता, अतोऽत्र माणवक में सिंहत्व का आरोप किया जाता है, यह गौण प्रवृत्तिनिमित्त तदाश्रय है। प्रकृतसूत्र में मुख्य प्रवृत्तिनिमित्त तदाश्रय की भाँति आरोपित प्रवृत्तिनिमित्त तदाश्रय का भी ग्रहण होता

है, इसीलिये गोपीशब्द से प्रातिपदिकार्थमात्रे प्रथमा का विधान होता है। गोपीशब्दोपपत्ति दो प्रकार से होती है। एक तो गोपशब्द से ''गोपस्य स्त्री'' विग्रह में ''पुंयोगादाख्यायाम्'' सूत्रद्वारा ङीष् प्रत्ययविधान करने से गोपी शब्द बनता है, और दूसरा ''गोपत्वजातिविशिष्टा स्त्री'' विग्रह में ''जातेरस्त्रीविषयादयोपधात्'' सूत्रद्वारा ङीष् प्रत्ययविधानपूर्वक गोपीशब्द बनता है। ''पुंयोगादाख्यायाम्'' शास्त्रनिष्पन्न गोपी गोपजाति की नहीं है, अपि तु जात्यन्तर की है, उसमें गोप के सम्पर्क से गोपत्व का आरोप किया गया है। यह गौण प्रवृत्तिनिमित्त तदाश्रय है। शक्यतावच्छेदक के आरोप को लक्षणा कहते हैं, अतः जिस गोपी में आरोपित गोपत्व है, वह लाक्षणिक होने पर भी गोपीशब्द-बोध्य गोपत्व और तदाश्रय प्रातिपदिकार्थ कहलाता है, अत एव गोपीशब्द से प्रातिपदिकार्थमात्र में प्रथमा सिद्ध होती है।

शे.– अत एव लिङ्गग्रहणं सार्थकम्, अन्यथा ''स्वमोर्नपुंसकात्– पा.सू. ७.१.२३'' इत्यादिशास्त्रप्रामाण्येन लिङ्गस्यापि प्रातिपदिकार्थतया तद्वैयर्थ्यं स्पष्टमेव। अत एव ''स्त्रियाम्–पा.सू. ४.१.३'' इति सूत्रे स्त्रीत्वे द्योत्ये इत्यर्थ इति भाष्ये सिद्धान्तितम्।

भैरवी– अत एव–प्रवृत्तिनिमित्ततदाश्रययोरेव प्रातिपदिकार्थपदेन ग्रहणादेव। प्रातिपदिकार्थतया-प्रातिपदिकपदजन्योपस्थितिविषयार्थतया। तद्वैयर्थ्यम्-लिङ्गग्रहणवैयर्थ्यम्। अत एव लिङ्गस्य प्रातिपदिकार्थत्वादेव। सिद्धान्तितमिति–स्त्रीत्वस्य प्रातिपदिकवाच्यत्वे हि स्त्रीप्रत्ययस्य तद्द्योतकत्वे युज्यते।

प्रातिपदिकार्थ. सूत्र में ''द्विकं प्रातिपदिकार्थः'' लिया जाता है, अत एव लिङ्गग्रहण का सार्थक्य होता है, अन्यथा ''पञ्चकं प्रातिपदिकार्थः'' पक्ष में लिङ्ग भी प्रातिपदिकार्थ हो जाता है। लिङ्ग भी प्रातिपदिकार्थ है, इसमें ''स्वमोर्नपुंसकात्–पा.सू. ७.१.२३'' सूत्र प्रमाण है, यतो हि प्रकृतसूत्रद्वारा नपुंसकलिङ्गवृत्तिप्रातिपदिक से परे सु और अम् का लोप होता है। लिङ्ग प्रातिपदिकार्थ है, इसमें ''स्त्रियाम्–पा.सू. ४.१.३'' सूत्र भी प्रमाण है। प्रकृतशास्त्रद्वारा अजादिगणपठित प्रातिपदिकों का और अदन्त प्रातिपदिकों का स्त्रीत्व अर्थ वाच्य होने

**पर, स्त्रीत्वार्थद्योतन करने के लिये टाप्प्रत्यय होता है। यही अर्थ भाष्याभिमत है, अर्थात् टाप्प्रत्यय स्त्रीत्व अर्थ का द्योतक है और प्रातिपदिक स्त्रीत्व अर्थ का वाचक है। इत्थञ्च प्रातिपदिक का ही लिङ्ग अर्थ है।**

प्र.— "तस्माच्छसो नः पुंसि" पा.सू. ६.१.३ सूत्रद्वारा कृतपूर्वसवर्णदीर्घ से परे पुल्लिङ्ग में वर्त्तमान शस् के सकार को नकारादेश होता है। इससे तो सिद्ध होता है, कि लिङ्ग प्रत्यय का अर्थ है, न कि प्रातिपदिक का?

**उ.शे.– "तस्माच्छसः" इत्यत्र पुंसीत्यस्य पुंशब्दस्य प्रकृतित्वे इत्येवार्थः।**

**भैरवी– पुंशब्दस्य प्रकृतित्व इति–पुंवाचकशब्दस्य प्रकृतित्व इत्यर्थः। एतेन पुंसि विद्यमानस्य शस इति नार्थ इति सूचितम्।**

**स्वमोर्नपुंसकात् और स्त्रियाम् इन दोनों सूत्रों से निश्चय होता है, कि लिङ्ग प्रातिपदिक का अर्थ है, अत एव सूत्रद्वय से एकवाक्यता-विधानाय "तस्माच्छसो नः पुंसि" सूत्र का "पुंलिङ्ग में वर्त्तमान प्रातिपदिक से एवं कृतपूर्वसवर्णदीर्घ से परे शस् के सकार को नकार होता है" इत्यर्थ स्वीकार करने पर सिद्ध होता है कि लिङ्ग प्रातिपदिकार्थ है।**

प्र.— कर्त्ता, कर्म, करण, सम्प्रदान, अपादान और अधिकरण कारक तिङादि के द्वारा उक्त होने पर उक्त कर्त्रादि अर्थों में "अभिहिते प्रथमा" वार्त्तिक-द्वारा प्रथमाविभक्ति होती है। यदि कर्त्रादिकारक प्रातिपदिकार्थ होते, तो प्रत्ययद्वारा उनकी उक्तता असंभव थी। "अभिहिते प्रथमा" विधान करने से सिद्ध होता है कि कारक प्रत्ययार्थ हैं, किन्तु आप "पञ्चकं प्रातिपदिकार्थः" से कारक को प्रातिपदिकार्थ स्वीकार करते हैं, इत्थञ्च परस्पर विरोध समापतित होता है।

**उ.शे.– "अभिहिते प्रथमा" इति वार्त्तिकस्य तत्तत्प्रातिपदिकार्थगतकारक-शक्तावन्येनाभिहितायां स्वार्थे प्रातिपदिकात्प्रथमेत्यर्थ इति न तद्विरोधः। एतेन तन्नये कारकस्य प्रत्ययार्थत्वम्, तव तु तन्नेति विरोधः, इत्यपास्तम्।**

**भैरवी– वार्त्तिकविरोधशङ्कां वारयति-अभिहित इति। एतेन उक्तव्याख्यानेन, तन्नये-वार्त्तिककारमते।**

विरोध नहीं है, अपि तु "अभिहिते प्रथमा" का तात्पर्य ही यह है, कि कर्तृत्वादिप्रातिपदिकार्थ तिङादिप्रत्ययद्वारा अभिहित=द्योतित होने पर प्रथमा होती है, अर्थात् कारक मुख्यतया प्रातिपदिक का ही अर्थ है। इस प्रकार "पञ्चकं प्रातिपदिकार्थः" एवम् "अभिहिते प्रथमा" में परस्पर विरोध प्रतिपादन करनेवाला परास्त होता है।

प्र.— तटादिशब्द से लिङ्ग अर्थ में प्रथमा का विधान करने से तो यही आता है, कि लिङ्ग प्रत्यय (प्रथमा) का अर्थ है?

**उ.शे.– तटादिशब्दानामपि लिङ्गं वाच्यमेव। द्योतकास्तु विसर्गादयः। पूर्वं तत्तल्लिङ्गं बुद्धिस्थीकृत्वैव तस्य तस्य विसर्गादेः साधुत्वान्वाख्यानम्। नियमांशनिवेशे तु न मानम्, इदमेवाभिप्रेत्य वृत्तौ प्रातिपदिकार्थः सत्ता इत्युक्तम्।**

भैरवी– लिङ्गग्रहणस्य सार्थक्याय भूमिकामारचयति तटादिशब्दानामपीति। यदि प्रातिपदिकजन्योपस्थितिविषयस्यैव प्रातिपदिकपदेन ग्रहणं स्यात्तदा लिङ्गस्यापि तटादिशब्दजन्योपस्थितिविषयतया प्रातिपदिकार्थपदेन तेभ्यः प्रथमासिद्धौ लिङ्गग्रहणं व्यर्थं स्यादिति भावः। ननु लिङ्गन्न ततो नियतोपस्थितिकमत आह– नियमांशनिवेशे त्विति।

अत एव अलिङ्गाः लिङ्गप्रवृत्तिनिमित्तकाश्च प्रातिपदिकार्थमात्रे इत्येतदुदाहरणत्वेन प्रातिपदिकार्थे किमुदाहरणमिति प्रश्ने स्त्री पुमान्नपुंसकमित्येते दर्शिताः। अन्ये लिङ्गाधिक्ये इत्यस्य। अत्रैवार्थे वृत्तिकारसम्मतिमप्याह-इदमेवेति।

तटशब्द से लिङ्ग अर्थ में प्रथमा आई, ऐसा नहीं, अपितु तटशब्दका ही लिङ्ग अर्थ है, प्रथमाविभक्ति इसकी भासिका अर्थात् द्योतिका है। यथा अन्धकारस्थित घट का दीपक भासक है, घट तो पहले से ही विद्यमान था। दीपक लाने से घट आया, ऐसी बात नहीं है। तथैव विसर्ग के समभिव्याहार से पुंस्त्व अर्थ का, ङीबादि के समभिव्याहार से स्त्रीत्व अर्थ का और अम् के समभिव्याहार से नपुंसकत्व अर्थ का आभास होता है। प्रकृतशास्त्र में नियतोपस्थितिकः प्रातिपदिकार्थः" नियमस्वीकृतिविषयक कोई प्रमाण नहीं है। अत्र "द्विकं प्रातिपदिकार्थः" लिया जाता है, इसीलिये काशिकावृत्ति में "प्रातिपदिकार्थः सत्ता" स्वीकार किया है।

प्र.— "सत्ता" अर्थात् प्रवृत्तिनिमित्त। इत्थञ्च "प्रातिपदिकार्थः सत्ता" इस वृत्तिग्रन्थ से तो प्रवृत्तिनिमित्त प्रातिपदिकार्थ है, इतना ही आता है। आप "द्विकं प्रातिपदिकार्थः" स्वीकार कैसे करते हैं?

**उ.शे.– सत्तेति प्रवृत्तिनिमित्तोपलक्षणम्, आश्रयस्तु तदाक्षिप्तत्वान्न पृथगुक्तः। एवञ्च प्रातिपदिकार्थ इत्यस्यालिङ्गाः प्रवृत्तिनिमित्तकाश्चाव्ययपुमादय उदाहरणम्।**

**भैरवी– प्रवृत्तिनिमित्ततदाश्रययोरेव प्रातिपदिकार्थपदेन ग्रहणस्याभिप्रेतत्वादेव। अव्ययपुमादय इति अव्ययस्य प्रातिपदिकार्थ इत्येतदुदाहरणे प्रमाणन्तु प्रातिपदिकग्रहणं किमर्थम्? उच्चैर्नीचैरित्यत्रापि यथा स्यादिति भाष्यमेव।**

**प्रवृत्तिनिमित्त विना आश्रय के रहता ही नहीं है, अतः प्रवृत्तिनिमित्त को प्रातिपदिकार्थ स्वीकार करने पर आश्रय का आक्षेप से लाभ हो जाता है। इससे सिद्ध होता है कि "प्रातिपदिकार्थः सत्ता" कथन का तात्पर्य भी "द्विकं प्रातिपदिकार्थः" में ही है। "द्विकं प्रातिपदिकार्थः" इति पक्षे प्रातिपदिकार्थे प्रथमा विधान के उच्चैः, नीचैः आदि अव्यय और स्त्री, पुमान्, नपुंसक उदाहरण हैं।**

प्र.— प्रवृत्तिनिमित्त तदाश्रय इति द्विकं प्रातिपदिकार्थःपक्षाश्रयण करने पर स्त्रीशब्द से प्रातिपदिकार्थे प्रथमा का विधान कैसे? यतो हि प्रातिपदिकार्थ. सूत्रद्वारा प्रातिपदिकार्थे वर्त्तमानात् प्रातिपदिकात् प्रथमा होती है, स्त्रीशब्द तो प्रातिपदिक ही नहीं है?

**शे.उ.– लिङ्गविशिष्टपरिभाषया स्त्रीशब्दोऽप्यस्यैवोदाहरणम्।**

यद्यपि शब्दसंघातार्थक √स्त्यै धातु से "स्त्यायतेर्ड्रट्" इत्युणादिसूत्रद्वारा ड्रट्प्रत्यय, टिलोप, यलोपविधानोपपन्न "स्त्र" प्रातिपदिक है, तथापि लिङ्गविशिष्टपरिभाषाद्वारा "स्त्रसमुदाय" में वर्त्तमान प्रातिपदिकत्वधर्म का लिङ्गबोधकप्रत्ययविशिष्ट स्त्रीसमुदाय में अतिदेश करने से स्त्रीशब्द से "प्रातिपदिकार्थे प्रथमा" सिद्ध होती है।

**शे.– अन्ये सर्वे लिङ्गाधिक्ये इत्यस्य। द्रोणत्वादिप्रवृत्तिनिमित्तकानां द्रोणादिशब्दानां परिमाणत्वेन परिमाणमपि लिङ्गवद्विशेष्यान्वय्यर्थः। एवञ्च तस्य लिङ्गवत्प्रातिपदिकार्थत्वाभावात्परिमाणग्रहणम्।**

**भैरवी– अन्ये सर्व इति– कृष्णादयः। तत्र लिङ्गप्रतीतेराधिक्यात्। एवं खट्वादिशब्दानामपि लिङ्गप्रवृत्तिनिमित्तकत्वाऽभावेन लिङ्गाधिक्ये**

इत्येतदुदाहरणत्वमेव। न च मृडानी, हिमानीत्यादौ पुंयोगमहत्वादेरधिकस्य भानेन प्रथमा न स्यादिति वाच्यम्, मृडानीत्यादावारोपितमृडत्वं मृडसम्बन्धश्च प्रवृत्तिनिमित्तमस्य भानसत्त्वे। यदि त्वस्य न भानन्तदा त्वारोपितमृडस्वरूपप्रवृत्तिनिमित्तमेव प्रतीयत इति न मात्रपदेन व्यावृत्तिः। एवं "हिमानी" इत्यत्र महत्त्वविशिष्टहिमत्त्वं प्रवृत्तिनिमित्तमिति स्वीकारात्। परिमाणग्रहणचारितार्थ्यमाह द्रोणत्वादिप्रवृत्तीति। लिङ्गवदिति– यथा कृष्णादिशब्दजन्यप्रतीतिविषयस्य लिङ्गस्य विशेषणतया भानन्तथा 'द्रोणः', 'खारी', 'आढकम्' इत्यादिशब्दे यः "परिमाणाभिन्नो द्रोणः" इत्याद्याकारो बोधो भवतीति द्रोणादिशब्दजन्यप्रतीतौ परिमाणस्याधिकस्य भानमतः परिमाणग्रहणमिति भावो द्रोणत्वादिकमखण्डोपाधिर्जातिविशेषो वा। तच्चोयत्तावशेषावच्छिन्नपलादिपरिच्छिन्नधान्यादिपरिच्छेदकत्व-समानाधिकरणम्। काकादिवाचकस्य तु लिङ्गाधिक्य इत्येतदुदाहरणत्वमेव।

"द्विकं प्रातिपदिकार्थः" इति पक्षे कृष्णः, श्रीः, ज्ञानम् भी लिङ्गमात्रे प्रथमा के उदाहरण हैं। "द्विकं प्रातिपदिकार्थः" इति नवीनमतानुसार भी द्रोणप्रातिपदिक से परिमाण अर्थ में ही प्रथमाविभक्ति का विधान होता है। तटीशब्द का स्त्रीत्ववत्तटी अर्थ है, अत्र लिङ्ग का विशेष्य में अन्वय होने के कारण तटादिशब्दों से "प्रातिपदिकार्थ में प्रथमा" नहीं होती है। तथैव द्रोणः पद से "परिमाणवान् द्रोण" अर्थबोध होता है, इत्थञ्च द्रोणप्रातिपदिक से "प्रातिपदिकार्थे प्रथमा" असंभव होने के कारण प्रातिपदिकार्थ. सूत्र में पृथक् परिमाणग्रहण किया गया है।

भैरवी– ननु परिमाणमपि यदि द्रोणादिशब्दार्थस्तदा "द्रोणः परिमाणमिति" सहप्रयोगानुपपत्तिः? अर्थात् द्रोणप्रातिपदिक से परिमाणार्थे प्रथमा होकर द्रोणः पदोपपत्ति होती है, इत्थञ्च द्रोणः पद से ही द्रोणपरिमाण अर्थबोध संभव है, "द्रोणः परिमाणम्" वाक्योपदेश असंगत है?

उ.शे.– द्रोणः परिमाणमित्येष तु "द्वौ ब्राह्मणौ" इतिवत्प्रयोगः द्रोणशब्दस्यानेकार्थत्वाद्वा।

भैरवी– द्रोणः परिमाणमिति-सम्भेदेनान्यतरवैयर्थ्यमिति न्यायात्। अभ्युपेत्य-वादोऽयम्। वस्तुतः सन्देहनिवृत्त्यर्थन्तथा प्रयोग इत्याशयेनाह- द्रोणशब्दस्येति।

यथा "ब्राह्मणौ" इति पदोपदेश करने मात्र से ही "दो ब्राह्मण" अर्थप्रतीति होने पर भी लोक में "द्वौ ब्राह्मणौ" प्रयोग देखा जाता है, तथैव "द्रोणः परिमाणम्" प्रयोग की अवगति समझनी चाहिए। अथवा द्रोणशब्द अनेकार्थक है, यथा–

केशवं पतितं दृष्ट्वा द्रोणो हर्षमुपागतः।
रुदन्ति कौरवाः सर्वे हा हा केशव केशव।।

इति श्लोकोक्त द्रोणशब्द का काक अर्थ है। द्रोणः पद का द्रोणपरिमाण अर्थ है, इति बोधनाय अर्थात् इतरार्थव्यावर्त्तन के लिये "द्रोणः परिमाणम्" कहा है।

शे.– मूलोक्तं तु न युक्तम्। "द्रोणो व्रीहिमानय" इत्यस्यापत्तेः।

भैरवी– मूलोक्तरीत्या परिमाणग्रहणस्य सार्थक्यं खण्डयति मूलोक्तमिति।

"नियतोपस्थितिकः प्रातिपदिकार्थः" स्वीकार करने पर "परिमाणमात्रे प्रथमा" विधान का "द्रोणो व्रीहिः" उदाहरण देना असंगत है। यतो हि द्रोण का व्रीहि पदार्थ के साथ परिच्छेद्यपरिच्छेदकभावरूप भेदसम्बन्ध से अन्वय करने के लिये द्रोणशब्द से परिमाण अर्थ में प्रथमा का विधान करते हैं। भेदसम्बन्धेन अन्वयस्थल में उभयपद समानविभक्त्यन्त नहीं होते, यथा "राज्ञः पुरुषम्" प्रयोग होता है, तथैव "द्रोणो व्रीहिम्" प्रयोगापत्ति आती है।

भैरवी– न च "तिङ्समानाधिकरणे प्रथमा" इति वार्त्तिकसम्मत्या समानाधिकरण-नामान्तरान्वये एव परिमाणमात्रे प्रथमा इति प्रागुक्तत्वात् तद्रीत्या नायं दोष इति वाच्यम्। यत्र द्रोणादिपदार्थस्य न समानाधिकरण-नामान्तरार्थेऽन्वयविवक्षा किन्तु तदर्थस्य सत्त्वमात्रप्रतिपिपादयिषा तत्र प्रथमानापत्तेरुक्तनियमस्वीकारात्। यदि कल्पनाऽतिप्रसङ्गभङ्गाय तादृशी क्रियते तदाप्याह–

शे.– किञ्च "तिङ्समानाधिकरणे प्रथमा" इति वार्तिकैकवाक्यतया भेदान्वये "द्रोणो व्रीहिः" इत्यनिष्टम्।

भैरवी– तिङ्सामानाधिकरण्यं हि तिङर्थाभिन्नार्थाभिधायकत्वम्, तच्च मूलोक्त-रीत्या नास्तीति भावः। प्रत्युत तिङर्थेऽन्वय एव साधुत्वमिति

**वार्त्तिकाल्लभ्यते मूलोक्तरीत्याऽन्वये तु असाधुत्वमस्य स्यादित्यपि बोध्यम्।**

प्र.— यदि आप द्रोणपदार्थ का व्रीहिपदार्थ के साथ भेदसम्बन्ध से अन्वय होने के कारण "द्रोणो व्रीहिम्" जैसे प्रयोगों में अनिष्टापत्ति स्वीकार न कर इष्टापत्ति (अर्थात् द्रोणो व्रीहिम् प्रयोग बनता है) स्वीकार करते हैं?

उ.— इत्थञ्च "द्रोणो व्रीहिः" इत्यत्र द्रोणपदार्थ का व्रीहिपदार्थ के साथ भेदेन अन्वय होता है। व्रीहिगतकर्तृत्व तिङ्प्रत्यय से उक्त होने के कारण "व्रीहिः" इत्यत्र प्रथमाविधान उपपन्न हो गया, किन्तु द्रोणगतकर्तृत्व तिङ् से उक्त न होने के कारण "तिङ्समानाधिकरणे प्रथमा" नियमानुसार द्रोणप्रातिपदिक से प्रथमाविधान असंभव होगा, तथा च "द्रोणो व्रीहिः" प्रयोगोपपत्ति असंभव है।

**प्र.शे.– न च यद् "परिमेये द्रोणादीनां वृत्तिस्तदा तस्यानेकत्वेन परिमाणमात्रपरत्वे तद्बोधेन च व्यभिचारान्मेयस्य नियतोपस्थितिकत्वाऽभावेनाप्रातिपदिकार्थत्वादसिद्धौ कर्मव्युत्पत्त्या प्रमेयार्थकं परिमाणग्रहणम्" इति कैयटोक्तं युक्तमिति वाच्यम्?**

**भैरवी– कैयटोक्तम्परिमाणग्रहणसार्थक्यन्दूषयति-न चेत्यादिना। मेये = परिच्छेद्ये। कर्मव्युत्पत्त्या-परिमीयते यत्तत्परिमाणमिति रीत्या।**

**यदा "परिमीयते यत् तत्" इति विग्रहे कर्मणि ल्युट् प्रत्ययविधानपूर्वक परिमाण शब्दोपपत्ति स्वीकार करते हैं, तदा परिमाणशब्द का परिमेय अर्थ होता है। परिमेय = चना, जौ, मटर इत्यादि रूपेण नाना सिद्ध होते हैं। इत्थञ्च परिमेयबोधक द्रोणादिशब्दोपस्थित अर्थ की नियतोपस्थिति न होने से द्रोणादि शब्दों से प्रातिपदिकार्थ में प्रथमाविधान संभव नहीं है, अत एव परिमेयबोधक द्रोणादि शब्दों से प्रथमाविधान करने के लिये प्रातिपदिकार्थ. सूत्र में परिमाणग्रहण किया है?**

**शे.– "सिंहो माणवकः" इत्यस्यासिद्ध्यापत्तेः।**

**भैरवी– असिद्ध्यापत्तेरिति– अत्र सिंहशब्दस्य सिंहसदृशप्रतिपादकतया कस्यापि सदृशस्य निरुक्तम्प्रातिपदिकार्थत्वन्नास्ति।**

प्र.— "नियतोपस्थितिकः प्रातिपदिकार्थः" स्वीकार करने पर तो "सिंहो माणवकः" वाक्यघटक सिंहः पद में प्रातिपदिकार्थे प्रथमा विधान असंभव

है, यतो हि "सिंहो माणवकः" इत्यत्र माणवक देवदत्त, यज्ञदत्त, भगदत्त भेद से सिंहसदृश नाना अर्थों की उपस्थिति होने के कारण "सिंहो माणवकः" वाक्यघटक सिंहशब्द नियतोपस्थितिक नहीं है?

उ.— सिंहो माणवकः इत्यत्र सिंह, सिंहत्व, समवाय और पुंस्त्व रूप नियतोपस्थितिक अर्थ को आधार मानकर अन्तरङ्गत्वात् प्रातिपदिकार्थ में प्रथमा-विधानानन्तर माणवकः पद के साथ योग करने पर सिंहः पद की सिंहसदृश अर्थ में लक्षणा होती है।

**शे.– तद्वदस्यापि सिद्धेश्च।**

**भैरवी– तद्वदिति– पदे एव लक्षणेति प्रागुक्तरीत्या स्वार्थमात्रे सिंहे तस्य साधुत्वमिति रीत्या यदि "सिंहो माणवकः" इति वाक्यं साध्विति ब्रूषे तदा द्रोण इत्यादीनामपि साधुत्वं तथैव भविष्यतीति भावः। न च परिमाणमात्रविषयकप्रतीतिजनकात् प्रथमेत्यस्य "द्रोणः, खारी" इत्याद्युदाहरणमिति कथं लिङ्गस्याप्येतेभ्यः प्रतीतेरिति वाच्यम्। परिमाणभिन्नत्वे सति प्रातिपदिकार्थलिङ्गान्यतरभिन्नो यस्तदविषयकत्वस्य प्रतीतिविशेषणत्वात्।**

**यथा "सिंहो माणवकः" वाक्यघटक सिंहप्रातिपदिक से नियतोपस्थितिक रूप प्रातिपदिकार्थ को आधार मानकर अन्तरङ्गत्वात् प्रथमाविधानानन्तर तत्सदृशार्थ में लक्षणा करते हैं, तथैव "द्रोणो व्रीहिः" इत्यत्रापि द्रोणप्रातिपदिक से नियतोपस्थितिकार्थरूप प्रातिपदिकार्थ को आधार मानकर अन्तरङ्गत्वात् प्रथमा का विधान करने के अनन्तर विभिन्न परिमेय अर्थ का बोध करेंगे।**

**शे.– नियमांशनिवेशे मानाभावाच्च।**

वस्तुतस्तु यह कैयटोक्ति चिन्त्य है, यतो हि प्रकृतसूत्र में "नियतोपस्थितिकः प्रातिपदिकार्थः" नियमाश्रयण ही नहीं करते हैं।

प्र.— नियतोपस्थिति के विषय को प्रातिपदिकार्थ कहते है, एक प्रातिपदिक से एक, एकत्व और समवाय की नियतोपस्थिति होती है, अत एव एक प्रातिपदिक से प्रातिपदिकार्थ में प्रथमा का विधान संभव है, प्रकृतशास्त्र में वचनग्रहण व्यर्थ है?

उ.शे.– **एकः, द्वौ इत्यादिसिद्धये तु वचनग्रहणम्।** यद्यपि एक प्रातिपदिक से एक, एकत्व और समवाय की नियतोपस्थिति होने के कारण एक प्रातिपदिक से प्रातिपदिकार्थे प्रथमा का विधान संभव है, किन्तु एकत्वसंख्या एक प्रातिपदिक से उक्त होने के कारण "उक्तार्थानामप्रयोग:" इति न्यायेन एक प्रातिपदिक से प्रातिपदिकार्थे प्रथमा अप्राप्त है, इसीलिए प्रकृतशास्त्र में वचनग्रहण किया है।

भैरवी– **ननु प्रातिपदिकेन प्रातिपदिकार्थस्योक्तत्वेऽपि प्रातिपदिकार्थे प्रथमेति वचनसामर्थ्यात्तदर्थगतसंख्याया अनभिहितत्वमादाय प्रथमा, एकादिशब्दस्थले तु संख्याप्यभिहितेति प्रथमा न स्यात्। यदि न केवलेति समयपरिपालनायाव्ययेभ्य इव प्रथमेति ब्रूषे, तदैकादिशब्देभ्यो द्विवचनबहुवचनयोरप्यापत्तिरत आह– एको द्वाविति।**

प्र.— वचनग्रहण करने पर भी एक प्रातिपदिक से ही एकत्वसंख्या उक्त होने के कारण "उक्तार्थानामप्रयोग:" इति न्यायेन संख्यावाचक एकद्व्यादिप्रातिपदिकों से संख्या अर्थ में प्रथमाविभक्ति का विधान असंभव है?

उ.शे.– **अन्यथैतत्सूत्रोपस्थितस्य अनभिहिते (पा.सू. ४।३।१) इत्यस्यात्र फलाभावादेतदेकवाक्यतापन्नसंख्यावाक्यान्वयित्वेन तदप्राप्तेः।**

भैरवी– *संख्यावाक्यान्वयित्वेन*— **प्रातिपदिकार्थस्यानभिहितत्वे इत्यर्थस्तु पूर्वोक्तरीत्या वक्तुमशक्यः, किन्तु तदर्थगतसंख्यायामनभिहितायामित्येव वाच्यम्, एवं सति तादृशवाक्यस्यान्यत्र चरितार्थत्वादेको, द्वौ, त्रयः, इत्यत्र न स्यादिति भावः।**

उ.शे.—वचनग्रहण करने पर भी "उक्तार्थानामप्रयोग:" न्यायेन संख्यावाचक एकद्व्यादिप्रातिपदिकों से प्रथमा का विधान न हो, तदा वचनग्रहण पुनः व्यर्थ होगा, तस्मात् वचनग्रहणसामर्थ्यात् संख्यावाचक प्रातिपदिकों से संख्यामात्रे प्रथमाविधानाय "उक्तार्थानामप्रयोग:" न्याय की प्रवृत्ति नहीं होती है, अत एव संख्यावाचक प्रातिपदिकों से संख्यामात्रे प्रथमा की सिद्धि होती है।

भैरवी– **नन्वेवं रामावित्यादौ प्रथमा न स्यात्तेषु लिङ्गाधिक्येऽपि तन्मात्राधिक्याऽभावादत आह रामावित्यादौ संख्याधिक्यविवक्षायामित्यर्थः। लिङ्गमात्राधिक्येऽपि प्रातिपदिकार्थगतद्वित्वादौ विवक्षिते इत्यर्थः। न**

**च 'रामः' इत्यत्र संख्याधिक्यसत्त्वात् प्रथमा न स्यादित्येव एकवचनान्तस्य पुरःस्फूर्तिकत्वात् कुतो न शङ्का कृतेति वाच्यम्? द्व्येकयोरितिसूत्रस्थैकशब्दस्य प्रत्याख्यानेनादोषात्।**

प्र.— "नियतोपस्थितिक: प्रातिपदिकार्थ:" इति नियमपक्षे रामादिप्रातिपदिकों से प्रातिपदिकार्थमात्रे प्रथमा का विधान असंभव है, यतो हि प्रातिपदिक से संख्या अर्थ का भान नियतोपस्थितिक नहीं है, कदाचित् एकत्व का, कदाचित् द्वित्व का और कदाचित् बहुत्व का भान होता है, तस्मात् संख्याविषयक भान नियतोपस्थितिक न होने से प्रातिपदिकार्थ नहीं है। अथवा 'द्विकं प्रातिपदिकार्थ:' इति पक्षेऽपि प्रातिपदिकार्थेतर लिङ्गमात्र की आधिक्येन प्रतीति होने के कारण लिङ्गमात्रे प्रथमा संभव है, किन्तु प्रकृतस्थल में प्रातिपदिकार्थेतरलिङ्गेतरसंख्या अर्थ की भी प्रतीति होने के कारण लिङ्गमात्र में भी प्रथमा का विधान असंभव है?

उ.शे.– **"रामौ" इत्यादौ संख्याधिक्ये प्रथमा तु "द्व्येकयो." (पा.सू. १।४।२२) इत्याद्येकवाक्यतयेति बोध्यम्।** यद्यपि संख्या प्रातिपदिकार्थ नहीं है, तथापि "अनभिहिते, द्व्येकयो., बहुषु बहुवचनम्" इति शास्त्रैकवाक्यतया "प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा" शास्त्र की "प्रातिपदिकार्थ उक्त हो एवं प्रातिपदिकार्थगत एकत्वादिसंख्या अनुक्त हो, तदा प्रथमाविभक्ति का एकवचनादि होता है" इत्यर्थोपपत्ति होती है। इत्थञ्च संख्या अर्थ का अधिक भान होने पर भी एकवाक्यतासामर्थ्य से प्रथमाविभक्ति का विधान होकर 'रामौ, रामा:' इत्यादि प्रयोगों की उपपत्ति होती है।

प्र.— प्रातिपदिकार्थ. शास्त्रोक्त मात्रशब्द एवार्थक है। यथा स्वौजसमौट्. शास्त्रद्वारा द्वितीयाविभक्ति का विधान संभव है, "कर्मणि द्वितीया" इति शास्त्रोपदेश व्यर्थीभूय "कर्मण्येव द्वितीया" नियम करता है, तथैव स्वौजसमौट्. शास्त्रद्वारा प्रथमाविभक्ति का भी विधान संभव था, प्रातिपदिकार्थेति सूत्रोपदेश को व्यर्थीभूय नियमाश्रयण करने से ही एवकार की उपलब्धि संभव है, अत एव प्रकृतशास्त्र में मात्रपदोपदेश व्यर्थ है?

उ.शे.– **मात्रग्रहणाऽभावे तु यथा "कर्मणि द्वितीया" (पा.सू. २।२।२) इति नियमेन कर्मत्वाज्ञानसमानकालिकार्थान्तरस्यैव व्यावृत्तिः, न तु तज्ज्ञानसमानकालिकार्थान्तरस्य। अत एव "गां दोग्धि पयः"**

इत्यादावपादानत्वादिबोधेऽपि द्वितीया। एवञ्च कर्मणि सत्येव द्वितीया, न तु तदसत्त्वे, इति नियमाकारः।

भैरवी– सौत्रमात्रग्रहणप्रयोजनमाह– मात्रग्रहणन्त्विति। मात्रग्रहणाऽभावे त्विति पाठः। अस्य नियमः स्यादित्यनेनान्वयः। कर्मण्येव द्वितीयेत्येवंविध-नियमेन यत्र कर्मत्वाज्ञानन्तत्रैव द्वितीया व्यावर्त्यत इत्यभिप्रायेणाह– यथा कर्मणीत्यादि। कर्मत्वाज्ञानसमानकालिकस्य। कर्मत्वाभाव-समानाधिकरणस्य। अर्थान्तरस्य। तृतीयादिप्रयोजककरणत्वादेः। अपादानत्वादिबोधेऽपीति। 'गां दोग्धि पयः' इत्यत्रान्तःस्थितद्रव-द्रव्यवृत्तिविभागानुकूलव्यापारानुकूलव्यापारोऽर्थ इति स्वीकारे तद्योगेऽपादानसंज्ञाकर्मसंज्ञयोः प्राप्तौ "अपादानमुत्तराणि कारकाणि बाधन्ते" इत्याकडारेतिसूत्रस्थभाष्योक्तरीत्या स्थितकर्मत्वमादाय द्वितीया यथा भवतीति भावः।

स्वौजसमौट्. सूत्रद्वारा द्वितीयाविभक्ति (अम्, औट्, शस्) का भी विधान संभव था, "कर्मणि द्वितीया" इति शास्त्रोपदेश व्यर्थीभूय "कर्मण्येव द्वितीया" यह नियम करता है। "यत एवकारस्ततोऽन्यत्र नियमः" सिद्धान्तानुसार द्वितीयाविभक्ति अर्थात् कर्म को द्वितीयाविभक्ति ही मिलती है। इस प्रकार कर्मत्व अर्थ अवश्य रहना चाहिए, अर्थान्तर रहे चाहे न रहे, प्रकृतनियम के द्वारा कर्मत्वसमानाधिकरण अर्थान्तर की व्यावृत्ति नहीं होती; अपि तु कर्मत्वाऽभावसमानाधिकरण अर्थान्तर में द्वितीया की व्यावृत्ति होती है। इसीलिये कर्मत्व अर्थ के साथ-साथ अपादानत्वादि अर्थ के रहने पर भी अविवक्षित अपादानक प्रातिपदिक से द्वितीयाविभक्ति होकर "गां दोग्धि पयः" प्रयोगोपपत्ति होती है। अविवक्षा करने से अपादानत्वादिप्रयुक्त पञ्चम्यादि विभक्तियाँ नहीं होतीं; किन्तु अपादानत्वादि अर्थ तो रहता ही है।

शे.– तथाऽनेनापि प्रातिपदिकार्थसत्त्वे एव प्रथमा, न तु तदसत्त्वे, इत्येव नियमः स्यात्।

भैरवी– दार्ष्टान्तिके योजयति-तथाऽनेनापीति। प्रातिपदिकार्थ इति सूत्रेणापीत्यर्थः। प्रातिपदिकार्थसत्त्व एव प्रथमा न तु तदसत्त्व इत्यस्य प्रातिपदिकार्थ-सत्त्वाऽभावविशिष्टशब्दव्यावर्त्तकता स्यादिति भावः।

तथैव ''प्रातिपदिकार्थ. शास्त्रद्वारा नियमलब्ध एवकार से ''प्रातिपदिकार्थ में प्रथमा ही होती है, प्रथमेतरविभक्ति नहीं'' इस अर्थ का लाभ होता है।

शे.– एवञ्चानर्थकनिपातेभ्यः प्रथमा नैव स्यात्।

भैरवी– अनर्थकनिपातेभ्यः। पादपूरणार्थेभ्यः। तेषाम्प्रवृत्तिनिमित्ततदाश्रयरूप-प्रातिपदिकार्थाभाववत्वात्।

इत्थञ्च प्रातिपदिकार्थत्व यत्र नहीं रहेगा, तत्र प्रथमा भी नहीं होगी। 'अवद्यति, पर्यागच्छति' इत्यादि प्रयोगघटक अनर्थक निपातों से प्रथमाविभक्ति नहीं आवेगी। प्रातिपदिकार्थ. सूत्र में मात्रपदोपदेशसामर्थ्यात् एवकार का प्रकृतशास्त्र में अयोगव्यवच्छेद (अयोग = प्रातिपदिकार्थ के सम्बन्ध के अभाव का व्यवच्छेद = अभाव) अर्थ न होकर, अन्ययोगव्यवच्छेद अर्थ स्वीकार किया जाता है, अर्थात् ''प्रातिपदिकार्थ रहे अथवा न रहे किन्तु प्रातिपदिकार्थ से इतर अर्थ न रहे, तत्र प्रथमा होती है''। इत्थञ्च अनर्थक निपात से भी प्रथमाविभक्ति की सिद्धि होती है। मात्रग्रहणसामर्थ्यात् ''प्रातिपदिकार्थे प्रथमैव'' नियम होता है, इसी को अर्थनियम कहते हैं। प्रकृतनियमद्वारा कर्मत्वादियोग्यार्थक जो प्रातिपदिक उनसे प्रातिपदिकार्थ में प्रथमा का विधान होता है। जो कर्मत्वादियोग्यार्थक प्रातिपदिक नहीं हैं, उनके लिये नियम नहीं लगता है।

शे.– एवञ्च तत्समभिव्याहारे ''सपूर्वायाः प्रथमा'' (पा.सू. ८.२.२७) इत्यादिशास्त्रप्रवृत्तिर्न स्यात्। तत्सत्त्वे कर्मादियोग्यार्थक-प्रातिपदिकाच्चेत्तद्रहितस्वार्थे इत्यर्थान्न दोषः। इदमेव मात्रग्रहणं ''कर्मणि द्वितीया'' (पा.सू. १.३.२) इत्यादेर्मदुक्ताकारनियमत्वे मानम्। मात्रग्रहणाच्च सूत्रकारस्य प्रत्ययनियमपक्ष एवाभिमत इति गम्यते। तदकरणलाघवेन तु ''कर्मणि द्वितीयैव'' इत्यर्थनियम उक्तो भाष्यादौ। स्पष्टञ्चेदं सर्वं भाष्ये इति भाष्यप्रदीपोद्योते निरूपितमित्याहुः।।

भैरवी– इष्टापत्तावाह–एवञ्च तत्समभिव्याहार इति। अनर्थकनिपातसमभिहार इत्यर्थः ''घटः पटो वै मम स्वम्, घटः पटो वै मे स्वम्'' इत्यादौ। तत्सत्त्व इति-मात्रपदसत्त्व इत्यर्थः। कर्मत्वादियोग्यार्थकेति-कर्म-

त्वाद्याधिक्ये प्रथमाव्यावृत्त्यर्थं हि मात्रग्रहणं तेन पर्युदासन्यायेनैतल्लाभः। न चानर्थकनिपातेभ्यो मात्रग्रहणाभावे पूर्वोक्तरीत्या यदि प्रथमा न भवेत्तदाऽनर्थकस्य निपातस्य प्रातिपदिकसञ्ज्ञेति वार्त्तिकवैयर्थ्यमिति वाच्यम्। स्वरार्थन्तत् स्यात्। न च ''निपाता आद्युदात्ता'' इत्यनेन स्वरो भविष्यतीति वाच्यम्? अव्ययेभ्यः सप्तानामपि विभक्तीनामेकवचनानीति पक्षे द्वितीयाद्यर्थं तदित्याशयात्। कर्मत्वयोग्यार्थकेति निवेशयित्वा यदि नियमस्तदाऽनर्थकनिपातेभ्यः प्रथमा सुतरां सिध्यतीति भावः। ननु भवदुक्तनियमे किम्मानमत आह–इदमेवेति। तदकरणलाघवेनेति-मात्रग्रहणाकरणलाघवेनेत्यर्थः। स्पष्टञ्चेदम्भाष्य इति–तत्र हि शङ्कासमाधानाभ्यामेवमुक्तम्। अथ मात्रग्रहणं किमर्थम्? एतन्मात्र एव प्रथमा यथा स्यात्। कर्मादिविशिष्टे मा भूदिति। अत्र कर्मादिशब्दस्तच्छक्तिपरः कटं करोति। नैतदस्ति प्रयोजनम्। कर्मादिषु द्वितीयादयो या। विभक्तयस्ताः कर्मादिविशिष्टबाधिका भविष्यन्ति। अथ- वाऽऽचार्यप्रवृत्तिर्ज्ञापयति न कर्मादिविशिष्टे प्रथमा भवति। यदयं सम्बोधने प्रथमां शास्ति। अधिकस्यार्थस्य सद्भावेऽपि प्रातिपदिकार्थसद्भावनिमित्ताश्रयेण चेत्प्रथमा तदा सम्बोधनाधिक्येऽप्येवमेव प्रथमा भविष्यति पुनस्तत्किमर्थमिति भावः। नैतदस्ति ज्ञापकम्। अस्ति ह्यन्यदेतस्य वचने प्रयोजनम्। किमामन्त्रितमिति वक्ष्यामीति। यत्तर्हि योगविभागं करोति। इतरथा सम्बोधने आमन्त्रितमित्येव ब्रूयाद् इति। भाष्यप्रदीपोद्योते निरूपितमिति–शेखरोक्तरीत्यैव निरूपितम्। द्वितीयादयो या विभक्तय इति– ''कर्मणि द्वितीया'' इत्येवमर्थनियमपक्षे द्वितीयादीनां स्वस्वविषये प्रथमाबाधकतया कर्माद्याधिक्ये प्रथमाया अप्राप्त्या मात्रग्रहणन्न कार्यमिति सूचितम्। यदि मात्रग्रहणन्न क्रियते तदा ''सम्बोधने च'' इति सूत्रं लिङ्गादिग्रहणं च न कार्यमित्यपि ध्वनितम्।

मात्रग्रहणसामर्थ्यात् अत्र एवकार का अन्ययोगव्यवच्छेद अर्थ लिया जाता है, अर्थात् प्रातिपदिकार्थ रहे अथवा न रहे प्रातिपदिकार्थ से जो इतर अर्थ उसके सम्बन्ध का अभाव होने पर प्रथमा होती है। इस प्रकार ''प्रातिपदिकार्थप्रतियोगिकभेदप्रतियोगिकसम्बन्धाऽभाववतः प्रातिपदिकात् प्रथमा भवति'' अर्थ स्वीकार करने से ''सपूर्वायाः

प्रथमा'' (पा.सू. ८.१.२७) सूत्रद्वारा ''घटः पटो वै मे स्वम् '' इत्यत्र 'मे' आदेश की उपपत्ति होती है। ''सपूर्वायाः प्रथमा'' शास्त्र का ''विद्यमान है पूर्व में जिसके, ऐसा जो प्रथमान्त पद उससे परे युष्मद् और अस्मद् शब्दों को त्व, म और ते, मे आदेश होते हैं'' अर्थ है। अनर्थक निपात से यदि प्रथमा नहीं आवेगी तर्हि ''वै'' इति प्रथमान्त पद नहीं कहलावेगा, तथा च ''घटः पटो वै मम स्वम्'' इत्यत्र मे आदेश होकर ''घटः पटो वै मे स्वम्'' इति वाक्योपपत्ति असंभव है। वै अत्र पादपूर्त्यर्थक होने से निरर्थक है।

प्र.– ''वै'' शब्द निरर्थक कैसे? कोई अर्थ नहीं, इति पक्षेऽपि ''वै'' शब्द से वै और वैत्व की नियतोपस्थिति तो है ही।

उ.– यद्यपि वै शब्द से वै और वैत्व की नियतोपस्थिति है, तथापि पादपूर्त्यर्थक ''वै'' निपात से निश्चय अर्थ की प्रतीति न होने से निरर्थक कहलाता है। इस प्रकार मात्रग्रहण से प्रकृतशास्त्रद्वारा ''प्रातिपदिकार्थाऽन्ययोगव्यवच्छेदवाले प्रातिपदिक से प्रथमा का विधान होता है'' इत्येवं अर्थनियम सिद्ध होता है। ''कर्मणि द्वितीया'' इत्यादि उत्तरसूत्रों में भी यदि अर्थनियम स्वीकार करें तदा ''कर्मणि द्वितीया'' की भाँति प्रातिपदिकार्थ. सूत्रद्वारा भी अर्थनियम ही होगा। इस पक्ष में–अत्र केचित् ''प्रातिपदिकेत्यादिसूत्राणि अर्थविधायकानि स्वादिसूत्रेणैकवाक्यतया प्रातिपदिकार्थादिषु प्रथमाविधायकानीत्येकः पक्षः, स्वादिसूत्रेण विहितानां नियामकानीत्यपरः पक्षः। तत्रापि द्वौ पन्थानौ-अर्थनियमः प्रत्ययनियमश्च। तत्र प्रातिपदिकार्थ एव प्रथमा, कर्मण्येव द्वितीयेति प्रत्ययनियमः। यत एवकारस्ततोऽन्यत्र नियमः, इत्यभियुक्ताः। प्रातिपदिकार्थे प्रथमैवेत्यादिरर्थनियमः। उक्तयुक्तेः। तत्र प्रातिपदिकार्थ एव प्रथमेति प्रत्ययनियमपक्षे मात्रग्रहणं व्यर्थम्, नियमशरीरेणैव मात्रशब्दार्थलाभात्। अर्थनियमपक्षेऽपि मात्रग्रहणं व्यर्थम्, कर्मणि द्वितीयैवेत्यादिनियमेन कर्मत्वाद्याधिक्येन प्रथमाया व्यावृत्तिसिद्धेरित्याहुः। मात्रग्रहण व्यर्थ है, अर्थात् मात्रपदोपदेश नहीं करना चाहिए, यह बात भाष्यप्रदीपोद्योत में निरूपित है।

सम्बोधने च ।।२.३.४७।।

शे.– तत्र वर्त्तमानादित्यर्थः।

**भैरवी–** सम्बोधने चेति सूत्रं व्याचष्टे - तत्र वर्त्तमानादिति। प्रातिपदिकाद् इत्यधिकारतो लब्धम्। सूत्रकारमते मात्रग्रहणम्प्रातिपदिकार्थेति सूत्रेऽस्तीत्यस्यारम्भः।

प्रातिपदिकार्थ. सूत्रद्वारा प्रातिपदिकार्थमात्र, लिङ्गमात्र, परिमाणमात्र और संख्यामात्र में प्रथमा का विधान होता है। सम्बोधन अर्थ कभी भासता है, कभी नहीं, अर्थात् नियतोपस्थितिकत्वाऽभावात् सम्बोधन प्रातिपदिकार्थ नहीं, लिङ्ग नहीं, परिमाण नहीं, वचन नहीं, तस्मादत्र सम्बोधन अर्थ में अप्राप्त प्रथमा का ''सम्बोधने च'' शास्त्रद्वारा विधान होता है।

प्र.— सम्बोधन क्या है? जो प्रातिपदिकार्थ से अधिक हो गया?

**उ.शे.–** सम्बोधनमभिमुखीकरणम्। तत्फलं प्रवृत्तिनिवृत्ती। सम्बोध्यतावच्छेदकरूपेण सम्बोद्ध्यस्य सिद्धिं विना तत्त्वासम्भवादनुवाद्ये एवैषा विभक्तिः। अत एव विधेयभूतक्रियायामेवैतदर्थान्वय उद्देश्यतया। अत एव ''राजा भव युद्ध्यस्व'' ''राजन् युद्ध्यस्व'' इत्यनयोर्व्यवस्थयैव प्रयोगः। 'राम मां पाही'त्यादौ चाभिमुखीभवद् रामाद्युद्देश्यकप्रवर्त्तनाविषयो रक्षणमिति बोधः।

**भैरवी–** अभिमुखीकरणमिति– स्वोच्चारितशब्दबोध्यो योऽज्ञातार्थस्तद्बोधानुकूल-व्यापारानुकूलो व्यापार इत्यर्थः। सम्बोध्यश्च स्वव्यापारप्रयोज्यो यस्तादृशार्थबोधानुकूलव्यापारस्तदाश्रय उच्यते। 'राम माम्पाही'त्यादौ तादृशेऽज्ञातार्थबोधे प्रकृत्यर्थस्य समवेतत्वसम्बन्धेनान्वयः। तत्रैव विषयभूतार्थेऽभेदसम्बन्धेन प्रेरणाविषयमत्कर्मकरक्षणस्यान्वयः सम्बोध्यतावच्छेदकत्वेन यो ज्ञातः स एवोच्चारयित्राऽभिमुखीक्रियते तेन रूपेण। अत एव ब्राह्मणत्वेन यो ज्ञातः, स एव हे३ ब्राह्मण अत्रागच्छेत्येवमभिमुखीकृत्योच्यते, न तु हे३ क्षत्रियेति। एवञ्च रामसमवेतो यो मत्कर्मप्रेरणाविषयरक्षणाभिन्नार्थबोधस्तदनुकूलव्यापारानुकूलो व्यापार इत्याकारकः शाब्दबोधः।

तत्फलम्प्रवृत्तिनिवृत्ती इति। हे देवदत्त, तत्र गत्वा जलन्तत आनीयताम् इति वाक्यप्रयोगो यत्र कृतो मैत्रेण, तत्र देवदत्तस्य देवदत्तसमवेततद्देशाधिकरणकगमनविशिष्टजलकर्मकतद्देशापादानकप्रेरणा-विषयानयनाभिन्नार्थबोधानुकूलव्यापारानुकूलो व्यापार इत्याकारकः शाब्दबोधो जायते, तदनन्तरन्देवदत्तस्य प्रवृत्तिर्भवति। यत्र तु देवदत्त,

तत्रारण्ये व्याघ्रादिसेविते न गन्तव्यमिति यज्ञदत्तेनोक्तन्तत्र देवदत्तस्य प्रेरणाविषयतद्देशाधिकरणकगमनाभावाभिन्नार्थविषयकदेवदत्तसमवेत-बोधानुकूलव्यापारानुकूलो व्यापार इत्याकारकशाब्दबोधे जाते तदनन्तरन्तद्देशाधिकरणकं गमनमनिष्टसाधनमिति मानसबोधे सति गमनान्निवृत्तिः। एवं यत्र प्रवृत्तिस्तत्र तादृशशाब्दबोधानन्तरप्रेरणाविषयत्वेन ज्ञातक्रियायामिष्टसाधनताज्ञानमनन्तरम्प्रवृत्तिरित्यूहनीयम्।

तत्त्वासम्भवादिति-तेन रूपेण सम्बोध्यत्वासम्भवादित्यर्थः। एतेन सम्बोध्यस्योद्देश्यत्वे बीजन्दर्शितम्। सिद्धं हि लोके उद्देश्यं भवति। अत एव—अस्यानुवाद्यविषयत्वादेव। एतदर्थान्वयः—उद्देश्यस्य सम्बोधनान्तार्थतया तस्य क्रियायां विधेयभूतायामन्वयः। सम्बोधनपदस्य कारकवाचित्वव्यवहारोऽप्येतन्मूलक एवाभियुक्तानाम्। ननु पूर्वोक्तरीत्या बोधे सम्बोधनान्तार्थान्वयस्वीकारे ''तिङ्समानाधिकरणे प्रथमा'' इति वार्त्तिकविरोध इति चेत्। एवन्तर्हि सम्बोधनान्तार्थस्य विधेयभूत-क्रियायां विशेषणतापन्नो य आख्यातार्थस्तत्रैवान्वयः स्वीकार्यः। बोधे सम्बोध्यवृत्तित्वस्य तु प्रत्यासत्त्या लाभः, अत एव सम्बोध्यतावच्छेदकरूपेण सम्बोध्यस्य यत्र सिद्धत्वन्तत्रैव सम्बोधनविभक्तिस्वीकारादेव। व्यवस्थयैव प्रयोग इति – यथा रामायणे वाल्मीकीये अयोध्याकाण्डे चित्रकूटे प्रसादनार्थं रामम्प्रति समागतम्भरतं प्रति रामवाक्ये—

त्वं राजा भव भरत स्वयन्नराणां वन्यानामहमपि राजराण्मृगाणाम्।

गच्छ त्वम्पुरवरमद्य सम्प्रहृष्टः संहृष्टस्त्वहमपि दण्डकान् प्रवेक्ष्ये।।

इति पद्ये त्वं राजा भवेति सम्बोधनविभक्त्यन्तभिन्नं प्रागुक्तम्। ''ननु ''इन्द्रशत्रो वर्द्धस्व'' इति भागवते प्रयुज्यमानं सङ्गच्छते कथमिति चेदार्षत्वात्। एवं सति यादृशोऽर्थः फलितस्तमाह-राम माम्पाहीत्यादाविति। एवञ्च यद्रूपावच्छिन्नस्य सम्बोध्यता प्रतीयते तद्रूपावछिन्न एव त्वम्पदस्य यत्र प्रयोगस्तत्र परामृश्यते सम्बोध्यतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नस्य युष्मदर्थत्वात्। अत एव सम्बोधनविभक्त्यन्तसमानवचनकं समानविभक्त्यन्तमेव त्वमित्यादि पदं साधु।

सम्बोधन का अर्थ है अभिमुखीकरण, यथा— हे राम! रक्ष। हे राम! कहते ही राम हमें ताकते हैं। इसका फल है प्रवृत्ति-निवृत्ति। हे राम!

कहने से पूर्वप्रवृत्त कार्य से राम की निवृत्ति हो जाती है और "रक्ष" कहने से रक्षणकार्य में उनकी प्रवृत्ति होती है। राम को तो हम पहले से जानते ही हैं। रामत्वेन रूपेण पहले से ज्ञात को हम रक्षणक्रिया में प्रवृत्त कराते हैं। सम्बोध्यतावच्छेदकरूपेण पहले से सिद्ध व्यक्ति को कहकर ही कोई कार्य कराया जाता है। इस प्रकार पहले से सिद्ध व्यक्ति को उद्देश्य करके ही सम्बोधनविभक्ति आती है। विधेयभूत क्रिया में ही सम्बोधन का उद्देश्यतया अन्वय होता है। पूर्वतःसिद्धव्यक्तिबोधकप्रातिपदिक से ही सम्बोधन में प्रथमा आती है, अत एव "हे राजन्! युध्यस्व" इत्यत्र तो सम्बोधन में प्रथमा आती है; किन्तु "राजा भव युध्यस्व" वाक्य में सम्बोधन में प्रथमा नहीं आती है, यतो हि "राजा भव युध्यस्व" वाक्य में राजा विधेय है, उद्देश्य नहीं है। "हे राम! मां पाहि" वाक्य में राम पहले से सिद्ध हैं, हे राम! कहने पर राम ताकेंगे, अर्थात् राम अभिमुखीभवन् हो गये। मत्कर्मकरक्षण अत्र विधेय है। किसी के पिता कलकत्ता में रहते हैं, उनका पुत्र श्रीजगन्नाथपुरी में बैठकर पिता को सम्बोधन करके कुछ निवेदन करता है। ऐसे स्थल में कल्पिताभिमुखीकरणस्वीकृतिपुरःसर ही सम्बोधनविभक्ति आती है। "हे राम मां पाहि" वाक्य से "अभिमुखीभवद्रामोद्देश्यकप्रवर्त्तनाविषयरक्षणम्" बोध होता है, अर्थात् हम राम की रक्षण में प्रवृत्ति कराते हैं, अत एव प्रवर्त्तना का विषय रक्षण कहलाता है।

प्र.— "व्रजानि देवदत्त!" कहने पर तो देवदत्त की प्रवृत्ति-निवृत्ति होती नहीं, अत्र सम्बोधने प्रथमाविभक्ति कैसे आती है?

उ.शे.— व्रजानि देवदत्त इत्यादावपि "जानीहि" इत्यादिः शेषो बोध्यः।

**भैरवी— यत्र तु विधेयभूतक्रियावाचकन्न श्रूयते तत्र वाक्यार्थपर्यवसानाय यत्किञ्चित्स्थलन्दर्शयति "व्रजानि देवदत्त इत्यादि"। यत्र तु "देवदत्त त्वम्पण्डितः" इत्येवोक्तन्तत्र असीत्यस्याध्याहारः। अत एव विधेय-भूतक्रियावाचकम्पदं लोडाद्यन्तमेव प्रयोक्तव्यमिति न नियम इति दिक्।**

**अत्र "जानीहि" क्रिया का अध्याहार करते हैं। इस प्रकार "व्रजानि, हे देवदत्त! त्वं जानीहि" वाक्य का "मत्कर्तृकं यद् वर्त्तमानकालिकं गमनं तत्कर्मकं त्वत्कर्तृको ज्ञानानुकूलो व्यापारः" अर्थ होता है। इस प्रकार देवदत्त को अपने गमन का ज्ञान कराने से एतद्वाक्यघटक देवदत्त सम्बोधन कहलाता है।**

प्र.— "व्रजानि देवदत्त" वाक्य में "जानीहि" पद का अध्याहार करने से "व्रजानि अहम्, हे देवदत्त! त्वं जानीहि" रूपेण दो वाक्य हो गये, अत एव देवदत्त से परे जानीहि को निघात नहीं होगा, यतो हि समानवाक्य = एक वाक्य में ही निघात और युष्मद् तथा अस्मद् के स्थान में आदेश होते हैं?

**ननु "व्रजानि" इत्यादौ "जानीहि" इत्यादेरध्याहारे "एकतिङ् वाक्यम्" इति लक्षणानाक्रान्तत्वात्तेषु निघातादीनाम्प्रवृत्तिः कथं स्यादित्यत आह–**

**उ.शे.– तत्र व्रजनस्य कर्मत्वाद्देवदत्तस्योद्देश्यत्वादुभयोः समानवाक्यस्थत्वम् । "एकतिङ् वाक्यम्" इत्यस्य च श्रूयमाणैकतिङ् इत्यर्थ इति न दोषः। उद्देश्यविधेयभावो वाक्यार्थः। अभिमुखीभवनानुकूलव्यापारश्च सम्बोधनविभक्त्यन्तशब्दप्रयोगरूपः। व्रजानीति प्राप्तकाले लोट्। अत एव गच्छेत्याद्यध्याहारे "धिङ् मूर्ख" इत्यादौ प्रथमा। अनध्याहारे तु द्वितीयैवेति दिक्।**

**एकतिङिति– श्रूयमाणैकतिङित्यर्थ इत्यत्र बहुव्रीहिः। इदं समाधानम्प्राचीनरीत्या। यदि तु "प्रविश पिण्डीम्" इत्यत्रेव वाक्यैकदेशन्यायेन बोधः स्वीक्रियतेऽध्याहारपदार्थोऽपि स एवाश्रीयते, तदा यथाश्रुतमेव साधु। उद्देश्यविधेयभावस्य कुतो लाभ इत्यत आह– उद्देश्यविधेयभाव इति। अभिमुखीभवनानुकूलव्यापारमाह–अभिमुखीति। अत एव सम्बोधनविभक्त्यन्तस्य विधेयभूतक्रियायामन्वयादेव। यदि धिक्शब्देन योगः स्यात्तदा द्वितीया स्यादिति प्रथमान्तस्याध्याहृतो योऽसीतिशब्दस्तत्प्रतिपाद्यक्रियायामन्वयः। अनध्याहारे-असीति-शब्दानध्याहारे। तदा धिक्शब्देन योगे द्वितीया भवतीति भावः।**

"व्रजानि देवदत्त! जानीहि" वाक्यघटक "व्रजानि" विशेषणीभूतक्रिया है, अथ च "जानीहि" विशेष्यभूता क्रिया। अथ च 'एकतिङ् वाक्यम्' वाक्य का 'एकतिङ्विशेष्यकं वाक्यम्' अर्थ करने से "व्रजानि देवदत्त! जानीहि" वाक्य में एकवाक्यता की उपपत्ति होती है। अथवा "एकतिङ् वाक्यम्" का 'श्रुतैकतिङ्वाक्यम्' अर्थ स्वीकार करते हैं। "जानीहि" तो अध्याहृत पद है, इस प्रकार भी "व्रजानि देवदत्त! जानीहि" वाक्य में एकवाक्यता की उपपत्ति होती है। "व्रजानि देवदत्त! जानीहि" वाक्यद्वारा मत्कर्तृकगमन का उद्देश्य करके त्वत्कर्तृकज्ञान का विधान है।

सम्बोधनविभक्त्यन्त का प्रयोग ही अभमुखीभवनव्यापार कहलाता है। "व्रजानि" पद में प्राप्तकाले लोट् है, अर्थात् मेरे व्रजन का काल प्राप्त है, इसको तुम जानो। सम्बोधनविभक्ति कारकविभक्ति कहलाती है, अथ च सम्बोधनविभक्त्यन्तोपस्थितार्थ का क्रिया में ही अन्वय होता है, अत एव "गच्छ" पद का अध्याहार करने से "धिङ् मूर्ख!" वाक्यघटक मूर्खशब्द से सम्बोधने प्रथमाविभक्ति आती है। "धिङ् मूर्ख! गच्छ" इत्यत्र सम्बोधने प्रथमाविभक्ति प्राप्त है, अथ च 'धिक्' पद के योग में द्वितीयाविभक्ति प्राप्त है। द्वितीया अत्र उपपदविभक्ति है और प्रथमा कारकविभक्ति है, इसलिये "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" इति नियमेन प्रथमाविभक्ति होती है। "धिङ् मूर्ख" में यदि गच्छ का अध्याहार नहीं करेंगे, तदा द्वितीयाविभक्ति होगी।

**।।इति प्रथमा-विभक्तिः।।**

●

# अथ द्वितीया-विभक्तिः

## कारके ।।१.४.२३।। यह अधिकार सूत्र है।

"कर्त्तुरीप्सिततमं कर्म" इत्यादि शास्त्र "कारके" सूत्र के अधिकार में आते हैं। "कारके" इत्यत्र प्रथमार्थे सप्तमी है, अत एव "कर्त्तुरीप्सित." सूत्र का "कर्त्तुः क्रियया आप्तुमिष्यमाणं कारकं सत् कर्मसञ्ज्ञं स्यात्" अर्थ होता है।

**शे.मू.– कारकत्वं क्रियाजनकत्वम्। भाष्ये "करोति क्रियां निर्वर्त्तयति" इति व्युत्पत्तिदर्शनात्। "ब्राह्मणस्य पुत्रं पन्थानं पृच्छति" इत्यादौ ब्राह्मणस्य न कारकत्वम्।**

**भैरवी– "कारके" इत्यधिकृतस्य उत्तरसूत्रैकवाक्यतया बोधकत्वन्तदा स्याद्यदि तदर्थपरिज्ञानं स्यादतस्तस्यार्थमाह-कारकत्वमित्यादिना। कारकशब्दः करोति कर्तृकर्मादिव्यपदेशानिति विवक्षया क्रियापरः जनकमित्यध्याहारः सप्तम्यर्थो निरूपितत्वं तस्य जनकशब्दार्थैकदेशजनकतायामन्वयः। एतेन क्रियाजनकत्वं कारकत्वमित्यर्थादुक्तम्भवति। कारकाधिकारप्रयोजनमाह–ब्राह्मणस्येति। "अकथितञ्च" इति सूत्रमपादानत्वादीनाम्प्रसक्तिपूर्वकविवक्षायां सर्वथा तदविवक्षायाञ्च प्रवर्त्तत इत्यग्रे वक्ष्यते।**

**क्रिया के जनक को कारक कहते हैं। यथा घट को उत्पन्न करनेवाला दण्ड घट का जनक कहलाता है, तथैव क्रिया के उत्पादक को क्रिया का जनक कहते हैं। क्रिया के जनक को कारक कहते हैं, अत एव "ब्राह्मणस्य पुत्रं पन्थानं पृच्छति" वाक्यघटक ब्राह्मण कारक नहीं कहलाता है।**

प्र.— यदि ब्राह्मण नहीं होता, तर्हि पुत्र कहाँ से आता? अर्थात् पुत्रोत्पत्तिक्रिया का ब्राह्मण जनक है, अत एव ब्राह्मण भी कारक है?

उ.मू.— पुत्रेणान्यथासिद्ध्या तत्त्वाभावात्।

**भैरवी– कारकत्वाभावमुपपादयति-पुत्रेणान्यथासिद्ध्येति। जनकत्वस्यानन्यथासिद्धनियतपूर्ववर्त्तित्वरूपतया ब्राह्मणेऽवश्यक्लृप्तनियतपूर्ववर्त्तिन एव कार्यसम्भवे तद्भिन्नमन्यथासिद्धमित्यन्यथासिद्धिसत्त्वेन कारकत्वाभावात्।**

''ब्राह्मणस्य पुत्रं पन्थानं पृच्छति'' इत्यत्र पृच्छाक्रिया के नियतपूर्ववर्त्ती पुत्र को कारक (क्रियाजनक) मान लेने से अनियतपूर्ववर्त्ती ब्राह्मण कारक नहीं कहलाता है। यथा घट के प्रति दण्ड को जनक स्वीकार करने पर दण्ड में रहनेवाले दण्डत्व को कारक नहीं मानते हैं। जिसके विना भी कार्योपपत्ति संभव हो, उसे अन्यथासिद्ध कहते हैं।

शे.मू.—अत एवैषां क्रियायामेवान्वयः।

भैरवी– कारकाणां क्रियाजनकत्वादेव। क्रियाजनकमिति ज्ञाते का सा क्रियेत्याकांक्षोदयेन, क्रियाया जनकाकांक्षया च तत्रैवान्वयस्यौचित्यात्। क्रियाजनक को ''कारक'' कहते हैं। यथा—पुत्रसंज्ञा स्वजनकाकाङ्क्षाश्रित होती है (अर्थात् मैं किसका पुत्र हूँ? इत्याकारिका आकांक्षा होती है) और पितृसंज्ञा स्वजन्याकांक्षित होती है। उसी प्रकार क्रिया को अपने जनक की और कारक को स्वजन्यक्रिया की आकांक्षा बनी रहती है। अत एव कारक का क्रिया में ही अन्वय होता है।

मू.शे.—सर्वेषां च कारकाणां स्वस्वावान्तरक्रियाद्वारा प्रधानक्रियानिष्पादकत्वं बोध्यम्।

भैरवी– स्वस्वावान्तरक्रियाद्वारेति-स्वस्वनिष्ठफलोत्पत्त्यनुकूलक्रियाद्वारेत्यर्थः। सर्वस्मिन्नेव कारकत्वेनाभिप्रेते फलानुकूला क्रियाऽस्त्येव। एतावान् परं विशेषः। यथा यन्निष्ठक्रियायाः प्राधान्येन धातुवाच्यत्वविवक्षा तदा तस्य कर्तृत्वम्। काष्ठम्पचति। स्थाली पचतीति यथा। यदा तु न तन्निष्ठव्यापारस्य प्राधान्येन धातुवाच्यत्वविवक्षा तदा तेषां न कर्तृत्वम्। किन्तु करणत्वादिकम्। तदुक्तं हरिणा–

वस्तुतस्तदनिर्देश्यन्नहि वस्तु व्यवस्थितम्।
स्थाल्या पच्यत इत्येषा व्यवस्था दृश्यते यतः।।इति।

''देवदत्तः मृत्तिकया दण्डेन चक्रे घटं करोति'' वाक्यद्वारा ज्ञात होता है, कि दण्ड भ्रमिक्रियाद्वारा, चक्र धारणक्रियाद्वारा प्रधानीभूत उत्पत्तिक्रिया के जनक हैं, अर्थात् जितने कारक हैं, वे अपनी अवान्तरक्रिया के द्वारा प्रधानीभूतक्रिया के निष्पादक होते हैं। जिस क्रिया के द्वारा फलोत्पत्ति होती है, उसे प्रधानक्रिया कहते हैं।

प्र.— अवान्तरक्रियाओं के द्वारा प्रधानीभूतक्रिया का जन्म होता है, अत एव ''क्रियाजनकत्वं कारकत्वम्'' नियमानुसार अवान्तरक्रियायें भी कारक कहलानी चाहिए?

उ.— भाष्यकार ने "पचति भवति" इत्यादि वाक्य में पच्यादिक्रियाओं को भवति क्रिया का कारक स्वीकार किया ही है। अर्थात् क्रियाजनक क्रियाएँ भी कारक कहलातीं हैं; किन्तु कारकप्रयोज्य प्राप्त स्वादिप्रत्ययों का तिङादि के द्वारा बाध हो जाता है।

**भैरवी–** **ननु यदा सन्निधाने स्थितः सन् मह्यन्द्रविणं देहि इति दातारं याचते, तदनन्तरं स ददातीति तदा सम्प्रदानव्यापारस्य दानक्रियापूर्व-कालिकत्वात्सम्भवति कारकत्वम्। यदा तु सोऽसन्निहितः। अथ च–**

**मनसा पात्रमुद्दिश्य जलमध्ये जलं क्षिपेत्।**
**दाता तत्फलमाप्नोति प्रतिग्राही न दोषभाक्।।**

**इत्युक्तत्वेन तादृशसम्प्रदानमुद्दिष्टन्तदा तद्व्यापारस्य कथं कारकत्वं तस्मिन् व्यापाराभावात्?**

प्र.— कार्य के निश्चयपूर्वक पूर्वकाल में रहनेवाले को जनक (कारण) कहते हैं, अर्थात् कार्यकारणभाव के लिये सामानाधिकरण्य आवश्यक होता है। यथा "देवदत्तः ग्रामं गच्छति" इत्यत्र गमनक्रिया के नियतपूर्ववर्त्ती देवदत्त के साथ गमनक्रिया का सामानाधिकरण्य होने से देवदत्त गमनक्रिया का जनक कहलाता है; किन्तु "देवदत्तः कलकत्तास्थिताय ब्राह्मणाय गां ददाति" वाक्यबोध्य दानक्रिया के साथ कलकत्तास्थित ब्राह्मण का सामानाधिकरण्य न होने से ब्राह्मण सम्प्रदानकारक कैसे?

**मू.शे.– असन्निहितसम्प्रदानस्यापि दातृबुद्धिस्थत्वावश्यकत्वेन स्वज्ञानपूर्वकालत्वेनैव जनकत्वम्।**

**भैरवी–** **स्वज्ञानपूर्वकालत्वेनेति-स्वज्ञानम्पूर्वकालं यस्याः सा स्वज्ञानपूर्वकाला तस्या भावः स्वज्ञानपूर्वकालत्वम्। यथा यागस्य साक्षात् स्वर्गाव्यवहितपूर्ववृत्तित्वाभावेऽपि परमापूर्वद्वारा स्वर्गजनकत्वन्तथा विषयविधयाऽसन्निहितसम्प्रदानजन्यं यत्तद्विषयकं ज्ञानं तज्ज्ञानक्रियाऽव्यवहितपूर्वकालवृत्तीति सम्प्रदानस्यापि क्रियाजनकत्वमस्तीति भावः।**

उ.— यद्यपि दानक्रिया का कलकत्तास्थित ब्राह्मण के साथ दृष्ट सामानाधिकरण्य नहीं है; किन्तु कलकत्तास्थित ब्राह्मण बौद्धप्रत्यय का विषय होने के कारण बौद्धसन्निहितत्व को लेकर दानक्रिया के साथ कलकत्तास्थित ब्राह्मण का

सामानाधिकरण्य है। अत एव दानक्रियानिरूपितसम्प्रदानत्व ब्राह्मण में सिद्ध होता है। अर्थात् बुद्धिस्थत्वात् सम्प्रदान का जो ज्ञान, उसमें ब्राह्मण पूर्वकालवर्त्ती हो गया।

**मू.शे.-** **एवं ''स्तोकं पचति'' इत्यादौ फलस्यापि ''घटं करोति स्मरति'' इत्यादौ बौद्धघटादेः पूर्वकालिकत्वेन स्मृत्यादीनां निष्पादकत्वं बोध्यम्।**

**भैरवी-** **फलस्यापीति-स्वज्ञानद्वारा व्यापारजनकत्वम्। प्रथमम्फलज्ञानन्ततः फलेच्छा ततस्तदुपायान्वेषणं ततस्तदुपाये फलसाधनताज्ञानन्तत उपायेच्छा तत उपायनिष्ठसाध्यत्वाख्यविषयताका प्रवृत्तिरित्येवं क्रमेण फलस्य क्रियाजनकत्वमिति भावः। बौद्धघटादेरिति-बुद्धिसत्तासमाविष्टस्य घटशब्दवाच्यत्वात्। स्मृत्यादीनामिति आदिना घटङ्करोतीत्यादिसङ्ग्रहः।**

प्र.— फलाश्रय को कर्म कहते हैं, यथा - ''तण्डुलं पचतीत्यत्र'' विक्लितिरूपफल के आश्रय तण्डुल की कर्मसञ्ज्ञा होती है। ''स्तोकं पचति'' इत्यत्र स्तोक की कर्मसञ्ज्ञा कैसे होती है? यतो हि स्तोक (अल्प) तो विक्लिति का विशेषण है, अर्थात् स्तोक भी फल है, फल का आश्रय नहीं?

उ.— व्यपदेशिवद्भावेन स्तोकरूप फल को भी फलाश्रय मानकर स्तोक की कर्मसञ्ज्ञा होती है।

प्र.— कार्य के नियतपूर्ववर्त्ती = निश्चय ही पूर्वकाल में रहनेवाले को आप कारक कहते हैं, स्तोक तो फल है, वह तो पाकक्रिया के बाद ही उत्पन्न होगा, पूर्व में तो स्तोक की वृत्तिता संभव नहीं, इत्थञ्च स्तोक कारक कैसे कहलाता है?

उ.— प्रथमतः फलज्ञान, द्वितीयतः फलप्राप्तीच्छा, तदनन्तर फलप्राप्त्युपायान्वेषण, तादृशोपाय में साध्यताविषयक ज्ञान होने पर प्रवृत्ति होती है, इत्थम्प्रकारेण बौद्धक्रम का आश्रयण करने से स्तोकरूप फल की क्रिया के पूर्व में वृत्तिता स्वीकार करते हैं, अत एव स्तोक कारक कहलाता है।

## कर्त्तुरीप्सिततमं कर्म ।।१.४.४९।।

प्रकृतशास्त्र में ''कर्त्तुः, ईप्सिततमम् और कर्म'' तीन पद हैं। ''कर्त्तुरीप्सिततमम्'' का उद्देश्य करके कर्मसञ्ज्ञा का विधान होता है।

प्र.— ईप्सित कहते हैं अभीष्ट को, अत एव इप्सिततमशब्द का अत्यन्ताभीष्ट अर्थ होता है। इस प्रकार ''कर्त्तुरीप्सित'' सूत्रद्वारा अत्यन्त अभीष्ट की

कर्मसञ्ज्ञा होगी, तथा च "ग्रामं गच्छति" वाक्यघटक ग्राम की कर्मसञ्ज्ञा नहीं होनी चाहिए, यतो हि अभीष्ट तो ग्राम में जाकर पुत्र-पौत्रादि को देखना है, खेती को देखना है, ग्राम तो अभीष्ट है नहीं?

**मू.शे.–** **ईप्सितशब्दोऽत्र क्रियापरो नाभिप्रेतपरो रूढः। स्पष्टञ्चेदं "वारणार्थानाम्– पा.सू. १.४.२७" इत्यत्र भाष्यकैयटयोः। कर्त्तुरिति "क्तस्य च वर्त्तमाने–पा.सू. २.३.६७" इति कर्त्तरि षष्ठी। आप्नोतेः सन्नन्तात् "मतिबुद्धि." (पा.सू. ३.२.८८) इति वर्त्तमाने कर्मणि क्तः। मतिः- इच्छा इति तत्राकरः। एवञ्च कर्त्राऽऽप्तुमिष्यमाणं कर्मेत्यर्थः। आप्तिश्चात्र सम्बन्धः। स च कर्तृपदार्थविशेषणीभूतव्यापारद्वारक एव उपस्थितपरित्यागेनानुपस्थितकल्पने मानाभावात्। एवञ्च कर्त्रा स्वनिष्ठव्यापारप्रयोज्यफलेन सम्बन्धुमिष्यमाणमित्यर्थः। यथा– "तण्डुलं पचति" इत्यादौ। फलस्यापि व्यपदेशिवद्भावेन फलसम्बन्धित्वात् कर्मत्वम्। अत एव तत्समानाधिकरणं "स्तोकम्पचति" इत्यादौ कर्मत्वसिद्धिः।**

**भैरवी–** **अत्र क्रियापर इति। इदमुपलक्षणम् "तथायुक्तम्"। "स्पृहेरीप्सितः"। "वारणार्थानाम्" इति सूत्रेष्वप्यारूढ एव। अयम्भावः– कर्त्तुरिति न शेषषष्ठी। "पटो नीलो जायताम्" इतीच्छया नीलकरणे यत्र प्रवृत्तिस्तत्र पटे नीलङ्करोतीति प्रयोगानुपपत्तेः। अधिकरणसञ्ज्ञाम्बाधित्वा पटस्य कर्मत्वं स्यात्; किन्तु कर्त्तुरिति कर्तृषष्ठी। एवं सत्यस्य रूढत्वे कर्तृषष्ठ्यन्तस्यानन्वयापत्तिरतः क्रियाशब्दोऽयम्। न चाक्षिप्तक्रियायामन्वयो भविष्यतीति वाच्यम्, श्रौतक्रियान्वयसम्भवे आक्षिप्तक्रियात्वमादाय कारकषष्ठ्युपपादनन्नोचितमित्याशयात्। स्पष्टञ्चेदमिति– तत्र हि 'किमुदाहरणम्। माषेभ्यो गा वारयति। भवेद्यस्य माषा न गावस्तस्य माषा ईप्सिताः स्युः, यस्य तु खलु गावो न माषाः कथं तस्य माषा ईप्सिताःस्युः', 'अभिप्रेतपर्यायमीप्सितशब्दमन्यत' इति कैयटः। 'तस्यापि माषा एवेप्सिताः। एवकारो भिन्नक्रमः'। माषा ईप्सिता एवेत्यर्थः। 'आतश्चेप्सिता यवेभ्यो गा वारयति'। अत्र कैयटः। 'ईप्सितशब्दः क्रियाशब्द आश्रीयते न तु रूढिशब्दः। तत्र वारणक्रियया परकीया अपि माषा वारयितुमीप्सिता भवन्ति। माऽश्नन्नेते इत्येतेभ्योऽसौ गा वारयति। इह कूपादन्धं वारयतीति कूपेऽपादानसञ्ज्ञा न प्राप्नोति, न**

हि तस्य कूप ईप्सितः। कस्तर्हि? अन्धः। ईप्सितशब्दस्य रूढत्वाभिप्रायेण प्रश्नः। तस्यापि कूप एवेप्सितः पश्यत्ययमन्धः कूपम्मा प्रापद् इति। क्रियाशब्दत्वमेवेप्सितशब्दस्येत्यभिप्रायः' इति। मतिरिच्छेति। पुनर्बुद्धिग्रहणात्। एवं सति यादृशो वाक्यार्थः सम्पन्नस्तमाह-एवञ्चेति। आप्तिशब्दस्य व्याप्तिपरत्वनिरासायाह–आप्तिश्चात्रेति। कर्त्ता च केनाप्तुमिच्छतीत्याकाङ्क्षायाः शान्तये आह– कर्तृपदार्थविशेषणीभूतेति– प्रधानीभूतव्यापारस्यैव कर्तृपदार्थघटकतया तादृशव्यापारेण सम्बन्धस्य च तज्जन्यफलाश्रयत्वरूपस्य प्रकृते ग्रहणमिति भावः। फले व्यापारजन्यता च साक्षात्परम्परासाधारणी। तेन 'तण्डुलम्पचति' इत्यत्र साक्षात्प्रधानीभूत-व्यापारजन्यविक्लित्यादिफलस्य "चैत्रं ग्रामं गमयति विष्णुमित्रः" इत्यत्र परम्परया विष्णुमित्रनिष्ठव्यापारप्रयोज्यस्य संयोगरूपफलस्य च सङ्ग्रहः। फलस्य कर्मत्वमुपपादयति-फलस्यापि। फलसम्बन्धित्वात्फलाश्रयत्वात्। अत एव-फलस्य कर्मत्वादेव। कर्मत्वसिद्धिः। कर्मसमानाधिकरणस्य कर्मत्वं न्याय्यमेवेति भावः। अत्रेदं बोध्यम्। व्यपदेशिवद्भावेन फलाश्रयत्वात्फलस्य कर्मत्वन्न सकर्मकधातुस्थल एव। किन्त्वकर्मकधातूपस्थाप्यफलाश्रयस्यापि 'आस्ते, शेते' इत्यादौ कर्त्तुः कर्त्तृसञ्ज्ञया बाधान्न कर्मत्वम्, व्यपदेशिवद्भावेन फलाश्रयस्य तु भवत्येव। अत एव "ओजःसहोम्भसा वर्तते" इति सूत्राद्वर्त्तत इत्यनुवर्त्तमाने तद्वाच्यक्रियायाः समानाधिकरणङ्कर्मवाचकम् "तत्प्रत्यनुपूर्वमीपलोमकूलम्" इति सूत्रे तदित्युपात्तम्। अत्र फलस्य कर्त्तुरिति सूत्रेण कर्मत्वम्भवत्येव। बाधिकायाः कर्तृसञ्ज्ञाया अप्राप्तेः फलेन कर्मणा सकर्मकत्वव्यवहारस्तु न। एतादृशकर्मणः सर्वत्रैव सम्भवेनाकर्मकत्वव्यवहारस्यैवोच्छेदापत्तेरिति।

"कर्त्तुरीप्सिततमं कर्म" शास्त्रघटक ईप्सिततमशब्द यौगिक है, अर्थात् क्रियाशब्द है, रूढ्यर्थक नहीं है। अत एव ईप्सिततमशब्द का व्यापारविशिष्टफलाश्रय अर्थ होता है। ईप्सिततमशब्द में आप् धातु है, सन्, क्त और तमप् तीन प्रत्यय हैं। आप्धातु का व्यापारविशिष्ट- फलाश्रयत्वरूपसम्बन्ध अर्थ है। सन्प्रत्यय का इच्छा और क्तप्रत्यय का विषयताश्रय अर्थ है। तमप्प्रत्यय का जन्य अर्थात् तमप्प्रत्ययसामर्थ्यात् स्वप्रयोज्यत्वसम्बन्ध का निवेश होता है।

आप्धात्वर्थ व्यापारविशिष्टफलाश्रयत्व का सन्नर्थेच्छा में स्वप्रकारकत्वसम्बन्ध से अन्वय होता है, अथ च सन्नर्थ इच्छा का

**क्तप्रत्ययार्थ विषयताश्रय के एकदेश विषयता में स्वनिरूपितत्वसम्बन्ध से अन्वय होता है। इस प्रकार ईप्सितशब्द का "व्यापारविशिष्ट-फलाश्रयत्वप्रकारिका या इच्छा तादृशेच्छानिरूपिता या विषयता तादृशविषयताश्रयः" अर्थ होता है। 'कर्त्तुः' पद में कर्तृ प्रकृति है, अथ च ङस् प्रत्यय है। "क्तस्य च वर्त्तमाने" शास्त्रद्वारा अत्र षष्ठीविभक्ति आई है। कर्तृप्रकृति का व्यापाराश्रय अर्थ है, अथ च क्तप्रत्ययार्थ का भी व्यापाराश्रय अर्थ है। अतः 'घटो घटः' की तरह प्रकृत्यर्थ व्यापाराश्रय का प्रत्ययार्थ व्यापाराश्रय के साथ परस्पर अन्वय असंभव है। इसलिये प्रकृत में प्रत्ययार्थगतव्यापार की "अनन्यलभ्यो हि शब्दार्थः" न्यायानुसारेण अविवक्षा कर देते हैं। यथा "घटमानय" कहने पर बालक पूछता है, कि कैसा घट लावें? इसके उत्तर में आचार्य निर्देश करते हैं– "नीलघटम्" अर्थात् नीलघटविशिष्ट घट लाओ। प्रकृत में जिस प्रकार नीलघट का घट के साथ अभेदसम्बन्ध से अन्वय होता है। "विधेयांश में अधिकावगाहिशाब्दबोध होता है" इति नियमेन उद्देश्यभूत प्रत्ययार्थ आश्रय का विधेयरूप प्रकृत्यर्थ व्यापाराश्रय के साथ परस्पर अभेदसम्बन्ध से अन्वय होकर "कर्त्तुः" पद का व्यापाराश्रयाभिन्नाऽऽश्रय अर्थ होता है। व्यापाराश्रयाभिन्नाश्रय का स्ववृत्तित्वसम्बन्ध से आप्धात्वर्थ व्यापारविशिष्टफलाश्रयत्व के एकदेश व्यापार में अन्वय होता है। व्यापाराश्रयाभिन्नाश्रय का कर्त्ता अर्थ है। कौन-सा कर्त्ता लें? इत्याकाङ्क्षायाम् उपस्थितत्वात् और "प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः" नियमानुसारेण प्रकृतधातूपात्तप्रधानीभूतव्यापाराश्रय कर्त्ता लिया जाता है। इस प्रकार "कर्त्तुरीप्सिततमं कर्म" शास्त्र का "प्रकृतधातूपात्तप्रधानीभूतव्यापाराश्रयवृत्तिव्यापारविशिष्टफलाश्रयत्व-प्रकारिकेच्छोद्देश्यताश्रयः कर्म" अर्थ होता है। व्यापार का फल में स्वप्रयोज्यत्व और स्ववाचकधातुवाच्यत्व उभयसम्बन्ध से वैशिष्ट्य स्वीकार करते हैं।**

प्र.— व्यापार का फल में स्वप्रयोज्यत्व सम्बन्धमात्र से वैशिष्ट्य स्वीकार करने पर ही "देवदत्तः ग्रामं गच्छति" इत्यादि स्थल में प्रकृतधातूपात्तप्रधानीभूत-व्यापाराश्रयवृत्तिगमनव्यापारप्रयोज्यसंयोगरूप फल के आश्रय ग्रामादि की कर्मसञ्ज्ञा संभव है। "स्ववाचकधातुवाच्यत्व" इति द्वितीय सम्बन्ध से व्यापार का फल में वैशिष्ट्य स्वीकार करने की आवश्यकता क्या है?

उ.— व्यापार का फल में स्ववाचकधातुवाच्यत्व सम्बन्ध से वैशिष्ट्य स्वीकार न करने पर "प्रयागात् काशीं गच्छति" वाक्यघटक प्रयाग की भी कर्मसञ्ज्ञा हो जायेगी, यतो हि कर्तृवृत्तिगमनव्यापार से विभाग एवं संयोग दो फल उत्पन्न होते हैं। विभागरूप फल का आश्रय प्रयाग है और संयोगरूप फल का आश्रय काशी है। प्रयाग की प्राप्तकर्मसञ्ज्ञा का वारण करने के लिये स्ववाचकधातुवाच्यत्वसम्बन्ध का निवेश करते हैं। गम्धातु का संयोगानुकूलव्यापार अर्थ है। विभागरूप फल गम्धातुवाच्य न होने के कारण "स्ववाचकधातुवाच्यत्वसम्बन्धोपादानात्" विभागाश्रय प्रयाग की कर्मसञ्ज्ञा नहीं होती है।

प्र.— "प्रयागात् काशीं गच्छति" वाक्यघटक प्रयाग की कर्मसञ्ज्ञा का वारण करने के लिये "स्ववाचकधातुवाच्यत्व सम्बन्ध का निवेश आवश्यक है। इसलिये व्यापार का फल में स्ववाचकधातुवाच्यत्व सम्बन्धमात्र से ही वैशिष्ट्य स्वीकार कर लें, स्वप्रयोज्यत्वसम्बन्धनिवेश का प्रयोजन क्या है?

उ.— "अग्नेर्माणवकं वारयति" वाक्यघटक माणवक की अपादानसञ्ज्ञा का वारण करने के लिये "स्वप्रयोज्यत्वसम्बन्ध का निवेश भी आवश्यक है। यतो हि व्यापार का फल में स्ववाचकधातुवाच्यत्व सम्बन्धमात्र से ही वैशिष्ट्य स्वीकार करने पर—

वारिधातु का संयोगानुकूलव्यापाराभावानुकूलव्यापार अर्थ है। संयोगरूप फल का आश्रय अग्नि है और संयोगानुकूलव्यापाराभावरूप फल का आश्रय है माणवक। माणवक के लिये अग्नि ईप्सित है और भृत्य के लिये माणवक ईप्सित है, अत एव वारिधातु के योग में अग्नि और माणवक दोनों की ही "वारणार्थानामीप्सित:" शास्त्रद्वारा अपादानसञ्ज्ञा प्राप्त है। अन्यधातुओं के योग में कर्त्तुरीप्सित. सूत्र चरितार्थ है, अत एव अपवादत्वात् "कर्तुरीप्सित." सूत्र को बाधकर "वारणार्थानामीप्सित:" सूत्रद्वारा माणवक की अपादानसञ्ज्ञा होने लगेगी। स्वप्रयोज्यत्व सम्बन्ध का निवेश करने पर तो प्रधानीभूतव्यापारप्रयोज्यसंयोगानुकूलव्यापाराभावरूप फल के आश्रय माणवक की ही कर्मसञ्ज्ञा प्राप्त होती है, संयोगाश्रय अग्नि की नहीं, यतो हि प्रधानीभूतव्यापारप्रयोज्य फल संयोगानुकूलव्यापाराभाव है, न कि संयोग, यतो हि भृत्यादि के व्यापार से माणवक अग्निसंयोग

से बच जाता है। स्वप्रयोज्यत्वसम्बन्धनिवेश करने से "वारणार्थानामीप्सितः" सूत्र चरितार्थ हो जाता है, अत एव माणवक की अपादानसञ्ज्ञा नहीं होती है।

प्र.— स्वप्रयोज्यत्व का तात्पर्य परम्परया जन्य है, अतः स्वप्रयोज्यत्वसम्बन्ध के स्थान पर स्वजन्यत्वसम्बन्ध का ही निवेश करना चाहिए?

उ.— स्वजन्यत्वसम्बन्ध का निवेश करने पर साक्षात् और परम्परा के मध्य साक्षात् जन्य फल ही मुख्यतया लिया जाता है, तथा च "गां दोग्धि पयः" वाक्यघटक गो की **"अकथितञ्च शास्त्रोपदेश अनावश्यक है"** इस पक्ष में कर्मसञ्ज्ञा असंभव है, यतो हि गोपनिष्ठ व्यापार से जन्य क्षरणव्यापार के द्वारा दुग्ध का गौ से विभाग हो रहा है, अर्थात् विभागरूप फल परम्परया जन्य है, साक्षात् जन्य नहीं है, अत एव स्वजन्यत्व न कहकर स्वप्रयोज्यत्व कहा है। फल भी व्यपदेशिवद्भाव से फलाश्रय कहलाता है, अत एव स्तोक की कर्मसञ्ज्ञा होती है। अन्यथा स्तोक तो विक्लित्तिरूप फल है, फलाश्रय तो है नहीं, अतः कर्मसञ्ज्ञा असंभव थी।

प्र.— यदि फल भी व्यपदेशिवद्भावेन फलाश्रय कहलाता है, तब तो विक्लित्ति से भी द्वितीया आनी चाहिए?

उ.— विक्लितिशब्द का "स्तोकम्पचति" वाक्य में उच्चारण न होने से द्वितीया नहीं आई। उच्चारण करने पर तो विक्लित्ति शब्द से भी द्वितीया अवश्यम्भाविनी है ही।

**शे.मू.– क्तप्रत्ययोपात्तवर्त्तमानत्वन्तु न विवक्षितम्। तेन कटं कृतवान्, कटं करिष्यतीत्यादिसिद्धिः।**

यद्यपि ईप्सितशब्द में वर्त्तमानकाल में क्तप्रत्यय का विधान किया गया है; किन्तु यह कोई आवश्यक नहीं है कि विशेषणविधया भासमान समस्तपदार्थ शाब्दबोध के विषय होते ही हैं। क्तप्रत्ययार्थ वर्त्तमानत्व की अविवक्षा होने से "कटं कृतवान्, कटं करिष्यति" इत्यादि स्थल में भूत, भविष्य और वर्तमान तीनों काल की क्रिया के आश्रय कट की कर्मसञ्ज्ञा होती है।

**मू.शे.– कारकं कर्मसञ्ज्ञं स्यादिति। "कारके" इति प्रथमार्थे सौत्री सप्तमी। तेन कारकं सत्कर्मसञ्ज्ञमित्यर्थः। सञ्ज्ञिनः क्रियाजनकत्वन्तु महासंज्ञयाऽऽक्षिप्तम्। यद्वा सप्तमी यथाश्रुतैव। कारकपदञ्च क्रियापरम्,**

**करोति कर्तृकर्मादिव्यपदेशानिति व्युत्पत्तेः। जनकमित्यध्याहारः। विषयत्वं सप्तम्यर्थः। कारकग्रहणे च स्वरितत्वप्रतिज्ञया एतदधिकारोक्त-कर्त्रादिषट्कमेव, तेन ''नटश्रवणम्'' इत्यादौ न कृदुत्तरपदप्रकृतिस्वरः। ''ग्रामे वासः'' इत्यादौ च तत्स्वरसिद्धिरित्यन्यत्र विस्तरः।**

**भैरवी–** **महासञ्ज्ञयाक्षिप्तमिति। करोतीति कारकम्। किं करोति इति प्रश्ने साध्यत्वेन योऽर्थः प्रतीयते तन्निरूपितसाधनत्वमेव गृह्यते। सा च क्रियैव, न तु द्रव्यम्, तत्स्वभावतः सिद्धत्वेनैव भासते। एतत्पक्षे एकसञ्ज्ञाधिकारात्सञ्ज्ञाद्वयविधानेऽपि पर्यायः स्यादिति द्वयोः समावेशसिद्धये कारकं सदित्युक्तम्। ''गतिकारकोपपदात्'' इति सूत्रे कारकशब्देन कारकसञ्ज्ञकस्यैवोपस्थितिः। एवमेवैतदधिकारोक्त-कर्त्रादिसंज्ञासु बोध्यम्। तेन ''ग्रामे वासः'' इत्यादौ कारकत्वात् कृदुत्तरप्रकृतिस्वरः। ''थाथघञ्''ति विहिताधिकरणत्वात् सप्तमी च सिध्यति। भाष्योक्तम्प्रथमपक्षमुक्त्वा द्वितीयपक्षमाह–यद्वेति। तत्र ह्येवमुक्तम्– 'यावद् ब्रूयात् क्रियायामिति तावत् कारके' इति। एवञ्च कृत्वा निर्देश उपपन्नो भवति– कारके इति। कारकशब्दस्य क्रियापरत्वे युक्तिमाह– करोति कर्तृकर्मादिव्यपदेशानिति। कारके इति वैषयिकाधारे सप्तमी, तदाह–विषयत्वमिति। स्वरितत्वमिदन्दोषविशेषरूपङ्कारकशब्दे बोध्यम्। ''स्वरितेनाधिकारः'' इति सूत्रस्य स्वरितेनाधिकङ्कार्यमित्यर्था-देतदधिकारोक्तसञ्ज्ञाविशिष्टस्यैव ग्रहणमित्येव कार्यम्प्रकृते गृह्यते।**

**''कर्त्तुरीप्सिततमं कर्म'' शास्त्र में ''कारके'' शास्त्र की अधिकारतः उपस्थिति होती है। ''कारके'' पद में प्रथमार्थिका सप्तमी है, अर्थात् ''कारके'' पद का ''कारकम्'' अर्थ है। इस प्रकार प्रकृतसूत्र की ''कर्त्ता अपनी क्रिया से जिसका सम्बन्ध करना चाहे (आप्धातोः सम्बन्धोऽर्थः) उसकी कारकसञ्ज्ञा होते हुए कर्मसञ्ज्ञा होती है'' इत्यर्थोपपत्ति होती है।**

प्र.— क्रिया तो समवायसम्बन्ध से कर्त्ता में रहेगी, दूसरे किसी में जायेगी नहीं, इत्थञ्च कर्त्ता अपनी क्रिया से दूसरे के साथ सम्बन्ध कैसे करेगा?

उ.— कर्त्ता स्वनिष्ठक्रियाद्वारा जन्यफल से जिसका सम्बन्ध करना चाहे (आप्धातोः व्यापारविशिष्टफलमर्थः) उसकी कारकसञ्ज्ञा होती हुई कर्मसञ्ज्ञा होती है। क, च, ट, त, प रूपेण लघीयसी सञ्ज्ञा न कर

"कारक" इति महती सञ्ज्ञा करने से "क्रियाजनक की कर्मसञ्ज्ञा होती है" इति अन्वर्थलाभ होता है। इस प्रकार "क्रियाजनक" सञ्ज्ञी और "कारक" सञ्ज्ञा कहलाता है। अथवा "कारके" पद को यथाश्रुत सप्तम्यन्तपद ही स्वीकार करते हैं और कारकशब्द का क्रिया अर्थ स्वीकार करते हैं।

प्र.— आपने "क्रियां निर्वर्त्तयति" विग्रह में कारकशब्दोपपत्ति स्वीकार की है, अत एव 'कारके' पद का 'क्रियायाम्' अर्ध कैसे संभव है?

उ.— 'कारके' पद को यथाश्रुत सप्तम्यन्त स्वीकार करने पर "करोति कर्तृकर्मादिव्यपदेशान्" विग्रह में कारकशब्दोपपत्ति स्वीकार करते हैं, अथ च "जनकम्" पद का अध्याहार करते हैं, इस प्रकार "कर्तृकर्मादिव्यवहार के प्रवर्त्तक को कारक कहते हैं", यथा— पश्यति, गच्छति इत्यादि क्रियायें रामः, श्यामः, घटम्, ग्रामम् व्यवहार को कराती हैं। इसलिये "कारके" पद का "क्रियायाम्" अर्थ है। इस प्रकार "कर्त्तुरीप्सिततमं कर्म" सूत्रद्वारा क्रियानिष्ठजन्यतानिरूपितजनकता की विवक्षा में कर्मसञ्ज्ञा होती है, अर्थात् "क्रिया के योग में कर्मसञ्ज्ञा होती है" इत्यर्थः।

प्र.— यदि 'कारके' पदघटक सप्तमी को प्रथमार्थकसप्तमीस्वीकृतिपुरःसर 'कारके' पद का कारकसञ्ज्ञक अर्थ स्वीकार नहीं करेंगे, तर्हि कारकाद्दत्त० शास्त्रोपदिष्ट कारकशब्द का क्या अर्थ होगा?

उ.— कारकाद्दत्त० शास्त्रघटककारकशब्द में स्वरितत्वप्रतिज्ञास्वीकृतिपूर्वक कारकशब्द का 'कारके' शास्त्राधिकारविहित कर्तृकर्मादिसञ्ज्ञाएँ अर्थ स्वीकार करते हैं। 'कारकाद्दत्त.' शास्त्रघटककारकशब्द का स्वरितत्वप्रतिज्ञाबलात् "कारके" इत्यधिकारोक्त सञ्ज्ञाओं का ग्रहण करने से ही 'नटश्रवणम्' इत्यत्र षष्ठ्यन्त नटशब्द से परे 'श्रवणम्' पद को 'कारकाद्दत्त०' सूत्रद्वारा प्रकृतिस्वर नहीं होता है, अथ च "ग्रामे वासः" प्रयोग में ग्रामे इत्यधिकरणकारक से परे 'वासः' पद को कारकाद्दत्त० सूत्रद्वारा प्रकृतिस्वर की सिद्धि होती है।

**कर्त्तुः किम्? 'माषेष्वश्वं बध्नाति'।**

**मू.शे.– तदभावेऽपि केनाप्तुमित्याकाङ्क्षायां कारकाधिकाराद् व्यापारलाभ इति प्रश्नः। माषेषु प्रसक्तमश्वं माषनाशो मा भूदित्यन्यत्र बध्नातीत्यर्थः। तदाह–कर्मण इति।**

**भैरवी– व्यापारलाभ इति। कारकसञ्ज्ञापक्षेऽन्वर्थसञ्ज्ञाबलात् क्रियापरत्वे तु स्वत एवेति भावः। माषेष्विति। अयम्भावः– कर्तृपदाभावे ईप्सितपदस्य**

**क्रियाशब्दत्वेऽपि कारकवृत्तिव्यापारप्रयोज्यफलाश्रयस्य ग्रहणे कारकवृत्तिव्यापारप्रयोज्यं यत्फलं तत्कालिकतन्माषभक्षणं तदपि प्रकृतधात्वर्थतावच्छेदकं यत्फलं तत्प्रयोज्यम्भवति। बन्धधात्वर्थश्च देशान्तरसंचारविरोधिविलक्षणशङ्कुसंयोगानुकूलव्यापारानुकूलो व्यापारः। एवञ्च धात्वर्थतावच्छेदकं फलं देशान्तरसञ्चारविरोधिविलक्षण-शङ्कुसंयोगानुकूलव्यापाररूपं तत्प्रयोज्यता तादृशभक्षणेऽस्ति। यदा माषक्षेत्रसमीपदेशे निहितशङ्कौ बद्धोऽप्यश्वो रज्जुदीर्घत्वेन माषभक्षणं कृतवान् ततस्तज्ज्ञानानन्तरमन्यत्र बद्धस्तत्र माषाणाम्प्रसक्तिक्रियाधिकरणत्वं प्राप्तम्बाधित्वा परत्वाद् बन्धधात्वर्थतावच्छेदकफलप्रयोज्यफलाश्रयत्वात् कर्मसञ्ज्ञा स्यात्। अधिकरणसञ्ज्ञायास्तु ''कटे आस्ते'' इत्यादौ चारितार्थ्यमस्ति, कर्तृग्रहणसत्त्वे तु कर्तृपदकारकपदलभ्यधात्वर्थयोः प्रत्यासत्त्यैकत्वलाभे प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यं यत्प्रकृतधात्वर्थफलन्तस्य लाभान्नातिप्रसङ्ग इति भावः। तदाह–तदभिप्रायेणाह। कर्मण ईप्सिताः = कर्मवृत्तिव्यापारप्रयोज्यफलाश्रयाः, न कर्त्तुः = न प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यफलाश्रयत्वेनोद्देश्याः। यतस्तादृशफलाश्रयत्वेनोद्देश्यस्य कर्मत्वमतः कर्मकारकस्य फले एवान्वयः।**

प्र.— प्रकृतशास्त्रद्वारा कर्तृवृत्तिव्यापारप्रयोज्य फलाश्रय की कर्मसञ्ज्ञा होती है। 'कर्त्तृ' कारक है, कारकार्थ का लाभ तो 'कारके' इत्यधिकार से ही संभव है, अत एव प्रकृतशास्त्र में 'कर्त्तुः' पदोपदेश अनर्थक है?

उ.— ''कारके'' इत्यधिकारसामर्थ्य से ''कर्त्तुरीप्सित०'' सूत्रद्वारा कारकवृत्तिव्यापारप्रयोज्य फलाश्रय की कर्मसञ्ज्ञा होगी, चाहे वह कारक कर्त्तृकारक हो अथवा कर्मादिकारक। इत्थञ्च 'माषेषु अश्वं बध्नाति' वाक्यघटक अश्वमिति कर्मकारकद्वारा ईप्सित माष की भी कर्मसञ्ज्ञा होने लगेगी; यतो हि गलविलाधःसंयोगानुकूल व्यापार अश्व में है, और अश्ववृत्तिव्यापारप्रयोज्य गलविलाधःसंयोगरूप फल का आश्रय माष है। कर्मादिकारकवृत्ति-व्यापारप्रयोज्यफलाश्रय की कर्मसञ्ज्ञा न हो, इसीलिये प्रकृतसूत्र में 'कर्त्तुः' पदोपदेश किया है। 'कर्त्तुः' पदोपदेशसामर्थ्य से कर्त्तृवृत्तिव्यापारप्रयोज्यफलाश्रय की कर्मसञ्ज्ञा होती है। 'माषेषु अश्वं बध्नाति' वाक्यघटक माष की कर्मवृत्तिव्यापारप्रयोज्यफलाश्रय होने से कर्मसञ्ज्ञा नहीं होती है।

प्र.— 'कर्त्तुरीप्सिततमं कर्म' सूत्र में 'कर्त्तुः' पदोपदेश करने पर भी ''माषेषु अश्वं बध्नाति'' वाक्यघटक माष की कर्मसञ्ज्ञा की व्यावृत्ति संभव नहीं

है, यतो हि 'अश्व' बन्धनक्रिया के प्रति कर्म होने पर भी भक्षणक्रिया के प्रति कर्त्ता ही है। इस प्रकार माष की पुनरपि "कर्तृवृत्तिव्यापारप्रयोज्यफलाश्रय होने से कर्मसञ्ज्ञा होनी चाहिए?

उ.— 'कर्त्तुरीप्सिततमं कर्म' शास्त्रघटक 'कर्त्तुरिति पदोपदेशसामर्थ्य से प्रकृतवाक्योच्चरितधात्वर्थव्यापाराश्रय कर्त्ता लेते हैं, अत एव 'माषेषु अश्वं बध्नाति' वाक्योच्चरितबन्ध्धात्वर्थव्यापाराश्रयदेवदत्तादिकर्तृवृत्तिव्यापार-प्रयोज्यफलाश्रय अश्व की कर्मसञ्ज्ञा होती है, भक्षणव्यापाराश्रय अश्ववृत्तिव्यापारप्रयोज्यफलाश्रय माष की कर्मसंज्ञा नहीं होती, यतो हि भक्षधातु प्रकृतवाक्योच्चरित नहीं है।

"माषेषु अश्वं बध्नाति" वाक्य में दो पक्ष हैं। **प्रथम–** माषेषु प्रसक्तमश्वमन्यत्र बध्नाति और **द्वितीय–** पुष्ट्यर्थं माषेषु अश्वं बध्नाति। "पुष्ट्यर्थं माषेषु अश्वं बध्नाति" यह द्वितीय पक्ष उत्तम है।

**तमब्ग्रहणं किम् – "पयसा ओदनं भुङ्क्ते"।**

**शे.– अवयवद्वारा समुदायस्य प्रश्नः। कर्त्तुरुद्देश्यं कर्मेत्येवास्त्विति भावः। पयसौदनमिति–यदा कृतभोजनोऽपि पयोलाभेनौदनभोजने प्रवर्त्तते तदेदं प्रत्युदाहरणम्। तत्क्रियायाः पय उद्देश्यकत्वात्। ईप्सिततमशब्दस्य तु क्रियाशब्दत्वात् पयसस्तदा फलाश्रयत्वेनाविवक्षणान्न दोष इति भावः। तमस्य फलन्तु 'अग्नेर्माणवकं वारयति' इति। तदभावे हि "वारणार्थानाम्" (पा.सू. १.४.२७) इति सूत्रमस्यापवादः स्यात्। एवञ्च माणवकस्य कर्मत्वन्न स्यात्। न चाग्नौ तच्चरितार्थम्। तस्यापि तदुपस्थाप्यसं-योगरूपफलाश्रयत्वात्। वारयतेश्च संयोगाद्यनुकूलव्यापाराभावानुकूल-व्यापारोऽर्थः। एष एव प्रवृत्तिविघातः। ईप्सितशब्द उभयत्रापि क्रियाशब्द एव। न च संयोगो न तत्कर्तृव्यापारजन्य इति। अत्र कर्मत्वाप्राप्तिरिति वाच्यम्। कर्तृव्यापारवाचकधातूपात्तफलाश्रयत्व-मित्यर्थस्यैव तेन लाभात्। तमब्ग्रहणे त्वीप्सितमात्रे सावकाशस्य परत्वादीप्सिततमेऽनेन बाधः। ईप्सिततमत्वञ्च–प्रकृतधात्वर्थप्रधानी-भूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वम्। तच्च नाग्न्यादौ। फलव्यापारयोः प्रकृतधात्वर्थत्वन्तु प्रत्यासक्तिलभ्यम्, तेन यदा पुष्ट्यर्थं माषभक्षणाय माषक्षेत्रे एवाश्वबन्धनं तदा "माषेष्वश्वं बध्नाति" इत्यादौ माषाणां न कर्मत्वम्। बन्धनप्रयोज्यभक्षणफलाश्रयत्वेऽपि**

भक्षणस्य बध्नात्यर्थत्वाभावात्। प्रयोज्यत्वनिवेशात् ''गां पयो दोग्धि'' इत्यादौ विभागानुकूलव्यापारानुकूलव्यापारार्थकदुहियोगे पयसः कर्मत्वसिद्धिरिति स्पष्टं भाष्ये।

भैरवी– पयोऽग्न्युभयव्यावर्त्तकत्वमेकस्य प्रकर्षस्य न सम्भवतीत्याशयेन मूलोक्तं योजयति–अवयवद्वारेति। कर्त्तुरिति षष्ठ्यर्थप्रतिसम्बन्धिनोऽभावे आकाङ्क्षाशान्तिर्न भवतीति तच्छान्त्यर्थमुद्देश्यपदमध्याहृत्य व्याचष्टे– कर्त्तुरुद्देश्यमिति। पयस उद्देश्यत्वमुपपादयति। यदा कृतभोजन इति। तत्क्रियायाः। भक्षणक्रियायाः। पयोलाभेच्छाप्रयोज्यत्वं तत्क्रियायाः, अतः पय उद्देश्यकत्वमिति भावः। विशिष्टोपादाने तु यथा नातिप्रसङ्गस्तथोपपादयति–ईप्सिततमेति। तदा पयसः संस्कार-कत्वमात्रविवक्षा, न तु प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्य-फलाश्रयत्वविवक्षेति भावः। यदा पयसः संस्कारकत्वेन करणत्वस्य, फलाश्रयत्वकर्मत्वस्य च विवक्षा तदा परत्वात्कर्मत्वमेव भवति। तमस्येति तन्मात्रस्येत्यर्थः। तमग्रहणाभावे कर्तृवृत्तिव्यापारवाचक-धात्वर्थफलाश्रयत्वं यस्य यस्य तस्य सर्वस्य कर्मत्वप्राप्तौ वारणार्थानामित्यनवकाशं सद्वारयतियोगे कर्मसञ्ज्ञाबोधकमेव स्यादित्येतदुपपादयति–तदभावे हीत्यादिना। ननु प्रवृत्तिविघातस्यैव वारयत्यर्थतया संयोगस्य कथं तदुपस्थाप्यत्वमत आह-वारयतेश्चेति। संयोगादीत्यादिपदेन भक्षणादिसङ्ग्रहः। उभयत्र। सूत्रद्वये तमग्रहणे हि यथा माणवकस्य कर्मत्वम्भवति तथाह–तमग्रहण इति। ईप्सितमात्रे-प्रकृतव्यापारवाचकधातूपस्थाप्यफलाश्रये कूपाग्न्यादौ। व्यापारप्रयोज्य-प्रकृतधात्वर्थेति। एवञ्चैतादृशप्रयोज्यत्वलाभफलकन्तमग्रहणमिति भावः। प्रत्यासत्तीति-कर्तृपदार्थतावच्छेदकतया प्रकृतधात्वर्थप्रधानीभूतव्यापारलाभे तत्फलस्य शीघ्रोपस्थितिकत्वात् तत्रापि प्रकृतत्वलाभः। प्रकृतधात्वर्थ-प्रधानीभूतव्यापारजन्येति परित्यज्य प्रयोज्येति यन्निवेशितं तत्प्रयोजनमाह– प्रयोज्यत्वनिवेशादिति।

तमप्ग्रहणं किम् – पयसा ओदनं भुङ्क्ते। किसी व्यक्ति ने भरपेट भात (चावल) खा लिया हो, उस व्यक्ति के प्रति कहा जाय कि– ''आप यदि थोड़ा भात और खा लें, तो ''फ्रिज़ में रखा बकैन भैंस का एक किलो दूध हम आपको दे देंगे'' इत्यर्थवाग्विवक्षा में पयस् तो गलविलाधःसंयोगरूप फल का आश्रय नहीं होता। अतः

**तमप्ग्रहणसामर्थ्य से उद्देश्यभूत पयस् की कर्मसञ्ज्ञा नहीं होती, अपितु हेतुतृतीया आती है। अथ च गलविलाधःसंयोगाश्रय ओदन की कर्मसञ्ज्ञा होती है। यही तमप्ग्रहणका फल है।**

प्र.— तमप्ग्रहण न करने पर भी पयस् की कर्मसंज्ञा नहीं होगी, यतो हि तमप् के अभाव में "कर्त्तुरीप्सितं कर्म" इत्येतावन्मात्र सूत्रोपदेश करने पर भी प्रकृतसूत्रद्वारा कर्तृवृत्तिव्यापारप्रयोज्यफलाश्रय की ही कर्मसञ्ज्ञा होगी "पयस्" तो गलविलाधःसंयोगरूप फल का आश्रय होता नहीं है। इस प्रकार "तमप्ग्रहणं किम्—पयसा ओदनं भुङ्क्ते" फलोपदेश करना असंगत है?

उ.— प्रकृतस्थल में अवयवद्वारा समुदायविषयक प्रश्न है, अर्थात् "कर्त्तुरीप्सिततमं कर्म" शास्त्रोपदेश न कर "कर्त्तुरुद्देश्यं कर्म" एतावन्मात्र शास्त्रोपदेश करें। "कर्त्तुरुद्देश्यं कर्म" शास्त्रोपदेश करने पर "पयसा ओदनं भुङ्क्ते" वाक्यगत उद्देश्यभूत 'पयस्' की कर्मसञ्ज्ञा होने लगेगी, अथ च ओदन की कर्मसञ्ज्ञा नहीं होगी।

प्र.— यदि "कर्त्तुरुद्देश्यं कर्म" शास्त्रोपदेश करने पर दोषापत्ति आती है, तर्हि "कर्त्तुरीप्सितं कर्म" शास्त्रोपदेश कर दें, तमप्ग्रहण क्यों किया, यह इस प्रश्न का आशय है?

उ.— तमप्ग्रहण न कर "कर्त्तुरीप्सतं कर्म" इत्येतावन्मात्र शास्त्रोपदेश करने पर "अग्नेर्माणवकं वारयति" प्रयोगघटक माणवक की भी अपादानसञ्ज्ञा होने लगेगी, यतो हि "कर्त्तुरीप्सितं कर्म" शास्त्रोपदेश करने पर प्रकृतशास्त्र की "कर्त्तृवृत्तिव्यापारवाचकधातुवाच्य फलाश्रय की कर्मसञ्ज्ञा होती है" इत्यर्थोपपत्ति होती है।

वारिधातु का संयोगानुकूलव्यापाराभावानुकूलव्यापार अर्थ है। वारिधातु के योग में "वारणार्थानामीप्सितः" शास्त्रद्वारा कर्त्तृवृत्तिव्यापारप्रयोज्यसंयोगरूप फल के आश्रय अग्नि एवं संयोगानुकूलव्यापाराभावरूप फल के आश्रय माणवक दोनों की अपादानसञ्ज्ञा प्राप्त होगी, अथ च "कर्त्तुरीप्सितं कर्म" इत्येतावन्मात्रशास्त्रोपदेश करने पर अग्नि और माणवक दोनों की कर्मसञ्ज्ञा भी प्राप्त होगी। कर्मसञ्ज्ञा तो **दृश्, गम्** इत्यादि धातुओं के योग में चरितार्थ है, अत एव **वारिधातु के** योग में "वाराणार्थानामीप्सितः"

शास्त्र कर्त्तुरीप्सितं कर्मेति कर्मसञ्ज्ञाविधायक शास्त्र को अपवादत्व हेतु से बाँध लेगा तथा च **वारिधातु** के योग में संयोगरूप फल के आश्रय अग्नि की एवं संयोगानुकूलव्यापाराभावरूप फल के आश्रय माणवक दोनों की अपादानसञ्ज्ञा होने लगेगी। तमप्ग्रहण करने पर स्वप्रयोज्यत्वसम्बन्ध का निवेश होता है, अत एव वारिधात्वर्थप्रधानीभूतव्यापारप्रयोज्यसंयोगानुकूल-व्यापाराभावरूप फल के आश्रय माणवक की 'कर्त्तुरीप्सिततमं कर्म' शास्त्रद्वारा कर्मसञ्ज्ञा होती है। संयोगरूप फल के आश्रय अग्निकी कर्मसञ्ज्ञा प्राप्त ही नहीं होती, यतो हि कर्तृवृत्तिप्रधानीभूतव्यापारप्रयोज्यसंयोगानुकूलव्यापारा-भावरूप फल होता है, न कि संयोगरूप फल। इत्थञ्च संयोगरूप फल के आश्रय अग्नि की अपादानसञ्ज्ञा करके "वारणार्थानामीप्सितः" सूत्र चरितार्थ हो जाता है। इसलिये **वारिधातु के** योग में यद्यपि माणवक की "वारणार्थानामीप्सितः" शास्त्रद्वारा अपादानसञ्ज्ञा और "कर्त्तुरीप्सिततमं कर्म" से कर्मसञ्ज्ञा दोनों सञ्ज्ञाओं की प्राप्ति होती है, तथापि परत्वात् हेतु से अपादानसञ्ज्ञा का बाधपूर्वक कर्मसञ्ज्ञा होने से "अग्नेर्माणवकं वारयति" प्रयोग बनता है।

"तस्यापि तदुपस्थाप्यः" वाक्यघटक उपस्थाप्यशब्द का "बोध्य" अर्थ स्वीकार करते हैं, जन्य अर्थ नहीं। **एष एव प्रवृत्तिविघातः**— माणवक की अग्निस्पर्श में होने वाली प्रवृत्ति को रोकना ही प्रवृत्तिविघात है। ईप्सितशब्द "वारणार्थानामीप्सितः" एवं "कर्त्तुरीप्सिततमं कर्म" उभयत्रापि यौगिक है, रूढ नहीं है।

प्र.— "अग्नेर्माणवकं वारयति" वाक्यान्तर्गत अग्नि की कर्मसञ्ज्ञा प्राप्त ही नहीं है, यतो हि भृत्यनिष्ठव्यापारप्रयोज्य फल का आश्रय 'अग्नि' होता ही नहीं है?

उ.— तमप्ग्रहणसामर्थ्य से ही भृत्यनिष्ठव्यापारप्रयोज्य फलाश्रय माणवक की कर्मसञ्ज्ञा होती है, अन्यथा तमप्ग्रहण न करने पर वारिधातुवाच्यसंयोगरूप फल के आश्रय अग्नि की भी कर्मसञ्ज्ञा हो जाती।

उपस्थितत्वात् प्रकृतधात्वर्थव्यापार लेते हैं, "प्रधानाऽप्रधानयोः प्रधानस्यैव ग्रहणम्" नियमानुसार प्रधानीभूतव्यापार लेते हैं, अथ च तमप्-ग्रहणसामर्थ्य से (प्रयोज्यत्व) प्रकृतधात्वर्थप्रधानीभूतव्यापार से प्रयोज्य फल का आश्रय लेते हैं। इस प्रकार प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्य फल,

अथ च स्ववाचकधातुवाच्य फल के आश्रय को ईप्सिततम कहते हैं। ईप्सिततमत्वञ्च प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफला-श्रयत्वेनोद्देश्यत्वम्। एतादृश ईप्सिततमत्व अग्नि में नहीं है। तमप्ग्रहणसामर्थ्य से "अग्नेर्माणवकं वारयति" वाक्यघटक अग्नि की कर्मसञ्ज्ञा नहीं होती है। उपस्थितत्वात् प्रकृतधातु लेने से "अश्वपुष्ट्यर्थं माषेषु अश्वं बध्नाति" इति वाक्यघटक माष की कर्मसञ्ज्ञा नहीं होती है, यतो हि माष बन्धनप्रयोज्यभक्षणरूप फल का आश्रय होने पर भी प्रकृतधातु = **बन्ध्धातु** से उपस्थाप्य व्यापारप्रयोज्यबन्धनरूप फल का आश्रय "माष" नहीं होता है।

प्र.— स्वप्रयोज्यत्व के स्थान पर स्वजन्यत्व क्यों नहीं दिया?

उ.— यद्यपि प्रयोज्य का भी जन्य ही अर्थ है, तथापि स्वजन्यत्वसम्बन्ध का निवेश नहीं किया, यतो हि स्वजन्यत्वनिवेश करने पर प्रधानीभूतव्यापार से साक्षात् जन्य फल के आश्रय की ही कर्मसञ्ज्ञा होगी, प्रधानीभूतव्यापारद्वारा परम्परया जन्य फल के आश्रय की कर्मसञ्ज्ञा तो होगी नहीं। इस प्रकार स्वजन्यत्वसम्बन्धनिवेश करने पर विभागानुकूल-व्यापारानुकूलव्यापारार्थक दुह्धात्वर्थविभागरूप फल के आश्रय पयस् की "गां पयो दोग्धि" इत्यत्र कर्मसञ्ज्ञा संभव नहीं है, यतो हि दुह्धात्वर्थप्रधानव्यापार गोपनिष्ठ हो, तत्प्रयोज्य विभागानुकूलव्यापार गोनिष्ठ हो, तब गोनिष्ठव्यापारप्रयोज्यविभागरूप फल का आश्रय पयस् होता है। जब गोप बछड़ा खोलेगा, गौस्तन को सहलावेगा, तब पयःक्षरणानुकूलव्यापार गौ में होता है, उसके अनन्तर पयस् विभागरूप फल का आश्रय बनता है। परम्परया जन्य फलाश्रय की भी कर्मसञ्ज्ञाविधान करने के लिये स्वप्रयोज्यत्वसम्बन्ध का निवेश किया है।

**"कर्मेत्यनुवृत्तौ पुनः कर्मग्रहणमाधारनिवृत्त्यर्थम्"।**

**मू.शे.– कर्मेत्यनुवृत्ताविति– "अधिशीङ्स्थासां कर्म" (पा.सू. १.४.४७) इति सूत्रात्। आधारेति कर्त्तृकर्मद्वारा क्रियाश्रयो हि सः। तदाह– गेहमित्यादि।**

**भैरवी– नन्वाधारनिवृत्त्यर्थमित्यनुपपन्नं फलाधारस्यैव कर्मसञ्ज्ञाविधानादत आह– कर्तृकर्मद्वारेति। एवञ्च यस्य कर्तृकर्मद्वारा धात्वर्थाधारत्वं स एवाधार**

**इत्युच्यते। तण्डुलम्पचतीत्यादौ तण्डुलादिकन्तु न तादृशपरम्परया आधार इति भावः।**

प्र.— "कर्त्तुरीप्सिततमं कर्म" शास्त्र में कर्मपदोपदेश करने की कोई आवश्यकता नहीं है, यतो हि प्रकृतशास्त्र में "अधिशीङ्स्थासां कर्म" शास्त्र से ही कर्मपद की अनुवृत्ति संभव है?

उ.— यद्यपि "कर्त्तुरीप्सिततमं कर्म" शास्त्र में "अधिशीङ्स्थासां कर्म" शास्त्र से कर्मपद की अनुवृत्ति तो संभव है, किन्तु "अधिशीङ्स्थासां कर्म" शास्त्रद्वारा अधिपूर्वक शीङ्, स्था और आस् धातुओं के आधार की कर्मसञ्ज्ञा होती है। इस प्रकार "अधिशीङ्स्थासां कर्म" शास्त्र से कर्म पद की अनुवृत्ति करने पर "कर्त्तुरीप्सिततमं कर्म" शास्त्रद्वारा भी कर्तृवृत्तिक्रियानिरूपित आधार की ही कर्मसञ्ज्ञा होगी, तथा च "देवदत्तः ग्रामं गच्छति" वाक्यघटक ग्राम की कर्मसञ्ज्ञा असंभव है; यतो हि अभी तक देवदत्त ग्राम में पहुँचा नहीं है, अपितु "मद्वृत्तिव्यापारजन्यफलाश्रयो ग्रामो भवतु" ऐसी इच्छामात्र देवदत्त में है। "कर्त्तुरीप्सिततमं कर्म" शास्त्र में कर्मपदोपदेश करने से कर्तृवृत्तिक्रियानिरूपित आधार की कर्मसञ्ज्ञा न होकर कर्तृवृत्तिव्यापारजन्यफलाश्रयत्वेन इच्छीयोद्देश्यताश्रय की कर्मसञ्ज्ञा होती है। इस प्रकार देवदत्त जब ग्राम जाने की इच्छा करता है, तत्रापि ग्राम की कर्मसञ्ज्ञा होकर "ग्रामं गन्तुमिच्छति" इत्यादि वाक्योपपत्ति होती ही है।

प्र.— क्रिया तो कर्त्ता में रहती है, अतः क्रिया का आश्रय आधार तो कथमपि होगा ही नहीं, तथा च प्रकृतशास्त्र में "अधिशीङ्स्थासां कर्म" शास्त्र से कर्मपदानुवृत्ति करने पर भी कोई दोष नहीं है?

उ.— आधार भी (अधिकरण भी) कर्त्ता और कर्म के द्वारा क्रिया का आधार होता है। यथा—"कटे आस्ते देवदत्तः" इत्यत्र आसनक्रिया (बैठना) देवदत्त में है और देवदत्त कट पर बैठा है, अत एव देवदत्तद्वारा आसनक्रिया कट में रहती है। इसी प्रकार "स्थाल्यां तण्डुलं पचति" इत्यत्र विक्लित्तिक्रिया तण्डुल में है और तण्डुल स्थाली (बटुली) में है, इस प्रकार तण्डुलद्वारा विक्लित्तिक्रिया का आधार स्थाली होती है।

**मू.शे.–** **अनुक्ते कर्मणि द्वितीया। कर्मपदेनैतच्छास्त्रबोधितकर्मसञ्ज्ञकं कर्मत्वशक्तिमद् गृह्यते। सर्वकर्मविहितद्वितीयादीनां कर्मत्वशक्तिमानर्थः। क्रियाकारकभावः सम्बन्धश्च तदर्थः। "राज्ञः पुरुषः" इत्यत्र राजपुरुषयोः सम्बन्धस्य षष्ठी वाचिका, कष्टं श्रित इति क्रियाकारकयोः सम्बन्धस्य द्वितीया वाचिकेति समर्थसूत्रभाष्यात्। एवञ्च "हरिं भजति" इत्यादौ हरिकर्मकं भजनमिति बोधः।**

**भैरवी–** **"कर्मणि द्वितीया" इत्यादिसूत्राणां स्वसिद्धान्तरीत्या अर्थमाह– कर्मपदेनैतदिति। कर्मत्वशक्तिमानिति– एवं सति शाब्दबोधोऽपि कर्मत्वशक्तिमत्त्वेन। ननु कर्मणि द्वितीयाया एव विधानं न त्वन्यविभक्तेरिति द्वितीयादीनामित्यसङ्गतमिति चेन्न। गत्यर्थकर्मणीति सूत्रविहितचतुर्थ्याः "कर्तृकर्मणोः" इति सूत्रविहितषष्ठ्याश्च सङ्ग्रहार्थन्तथाकथनात्। क्रियाकारकभावः सम्बन्धश्चेति-क्रियाकारकयोर्भावः क्रियात्वकारकत्व-समूहस्तद्रूपः सम्बन्धश्चेत्यर्थः। कर्मत्वादिशक्तिविशिष्टस्य द्वितीयादिवाच्यत्वे कर्मणि द्वितीयेत्यादिसूत्रं साधकमिति सुप्रसिद्धमेव। सम्बन्धस्य वाच्यत्वे तु भाष्यं साधकमाह-राज्ञः पुरुष इत्यत्रेति। एतेनाश्रयत्वेनाश्रयस्य वाच्यत्ववादिप्राचीनमतन्निरस्तम्। एवं सति यादृशो बोधस्तमाह– एवञ्चेति।**

**अनुक्ते कर्मणि द्वितीया**— "कर्मणि द्वितीया" सूत्र में "अनभिहिते" शास्त्र की अधिकारतः उपस्थिति होती है, अत एव "कर्मणि द्वितीया" शास्त्रद्वारा अनभिहितकर्म में द्वितीयाविभक्ति का विधान होता है, यथा— "हरिं भजति देवदत्तः" वाक्य में तिप्रत्यय के द्वारा कर्त्ता अर्थ उक्त है और कर्म अर्थ अनुक्त है, अत एव अनुक्तकर्मबोधक हरिशब्द से द्वितीयाविभक्ति का विधान होता है। जहाँ पर कर्म अर्थ में प्रत्यय का विधान होता है, उसे उक्तकर्म कहते हैं, यथा 'देवदत्तेन ग्रामः गम्यते' वाक्य में तिङ्प्रत्यय के द्वारा कर्म अर्थ उक्त होने के कारण उक्तकर्मबोधक ग्रामशब्द से प्रथमाविभक्ति का विधान होता है। इसी प्रकार अनभिहित-करण, सम्प्रदान, अपादान और अधिकरण अर्थों में क्रमशः तृतीया, चतुर्थी, पञ्चमी और सप्तमी विभक्तियों का विधान होता है, और उक्त-कर्म, करण, सम्प्रदान और अपादानादि अर्थों में प्रथमा विभक्ति होती है।

प्र.— "कर्मणि द्वितीया" शास्त्रद्वारा द्वितीयाविभक्ति का विधान कर्म में होता है। कर्म किसको कहते हैं?

उ.— कर्मसञ्ज्ञाविधायकशास्त्रबोधितकर्मत्वशक्तिमान् को कर्म कहते हैं, अर्थात् कर्मत्व 'धर्म' है और कर्मत्वशक्तिमान् "धर्मी" कहलाता है। इसीलिये ग्रामादि का कर्म के साथ अभेदसम्बन्ध से अन्वय होता है।

"कर्त्तुरीप्सिततमं कर्म", "अधिशीङ्स्थासां कर्म", "तथायुक्तं चानीप्सितम्" इत्यादिशास्त्रबोधित जो कर्म हैं, उनमें "कर्मणि द्वितीया" शास्त्रविहित द्वितीया का कर्मत्वशक्तिमान् और क्रियाकारकभावसम्बन्ध अर्थ है। यथा 'राज्ञः पुरुषः' वाक्यघटक षष्ठी का स्वस्वामिभावसम्बन्ध अर्थ है, तथैव "देवदत्तः ग्रामं गच्छति" वाक्यघटकगम्धात्वर्थक्रिया का 'ग्रामम्' कर्म के साथ होनेवाला जो क्रियाकारकभावरूप सम्बन्ध है, वह द्वितीयाविभक्ति का अर्थ है। यह बात "समर्थः पदविधिः" सूत्र के भाष्य में स्पष्ट है। इसीलिये "हरिं भजति देवदत्तः" वाक्य का "देवदत्ताभिन्नैककर्तृवृत्तिहर्यभिन्नकर्मनिष्ठप्रीत्यनुकूलो वर्त्तमानकालो व्यापारः" अर्थात् "हरि है कर्म जिसमें ऐसा जो भजन" इत्याकारक व्यापारविशेष्यक बोध होता है, तथा च "देवदत्तेन हरिः भज्यते" वाक्य का "देवदत्तवृत्तिव्यापारजन्या हर्यभिन्नकर्मनिष्ठा प्रीतिः" इत्याकारक फलविशेष्यक बोध होता है। उभयस्थल में व्यापारमुख्यविशेष्यक बोध होता है। इति दीक्षितः।

**अभिहिते तु कर्मणि प्रथमैव—**

**शे.मू.– अनभिहिताधिकारादिति भावः। पञ्चकं प्रातिपदिकार्थ इति पक्षे "कर्मणि द्वितीया" (पा.सू. २.३.२) इत्यादेः "द्व्येकयोः" (पा.सू. १.४.२२) इत्यादेश्च नियमत्वम्। एतदभावेऽपि स्वादिसूत्रेण "अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे" इति कर्मादौ संख्यायाञ्च स्वादीनां सिद्धेः। तत्र यदा कर्मणीत्यादेः "द्व्येकयोः" इत्यादेश्चैक-वाक्यतायामेकस्मिन् कर्मणीत्यन्वयेन सूत्रजबोधे कर्माद्यर्थस्य प्राधान्यं तदा नार्थोऽनेन। सूत्रजबोधविषयप्रधानविषयेणोक्तार्थानामिति न्यायेन सिद्धेः। यद्यपि "दुर्बद्धं सुबद्धम्" इति न्यायेन "द्वौ ब्राह्मणौ, व्यतिलुनीते" इत्यादौ द्योतकवाचकयोश्च समुच्चयो दृष्टस्तथापि प्रकृते लक्ष्यानुसारादुक्तार्थानामिति न्यायानुसरणस्यैव वक्तुं शक्यत्वात्। एवञ्च कर्मादीनां द्योत्यत्वमेव। यदा तु कर्मगते एकत्वे इत्यन्वयेन संख्यायास्तत्त्वं तदा सूत्रमारब्धव्यम्। भाष्ये एषु विभक्त्यर्थत्वव्यवहारो द्योत्यतयैव न**

त्वेतावता तच्छक्यत्वमेषां भ्रमितव्यम्, नियमत्वानुपपत्तेरिति स्पष्टं "बहुषु" (पा.सू. १.४.२१) इति सूत्रे भाष्यादिषु। द्योतकविषयेऽप्युक्तार्थानामिति न्यायः "अधिपरी." (पा.सू. १.४.९३) इति सूत्रे भाष्ये दृश्यते। तत्र हि अध्यागच्छतीत्यादावागच्छतीत्यतोऽनधिकार्थयोरधिपर्योः प्रयोगस्योक्तार्थानामिति न्यायेनाभावमाशङ्क्य "अपूपौ द्वौ" इत्यादावुक्तार्थानां प्रयोगदर्शनेन समाधानं कृतम्। तत्र हि द्विशब्दापूपशब्दयोर्वाचकयोः प्रकृतिप्रत्यययोर्वाचकद्योतकयोर्द्वावित्यत्र तयोर्वाचकानुवादकयोश्च समुच्चयः। अत एव 'द्विदशा' इत्यादौ समासेन सुजर्थस्योक्तत्वान्न सुजिति भाष्ये उक्तम्। तत्र हि–समासः सुच्चेत्युभयमपि द्योतकम्। सुजर्थश्च क्रियाजन्मेति तत्रैव वक्ष्यते। तथा तद्धितद्विर्वचनयोर्द्योतकयोस्तद्धितेनोक्तत्वाद्वीप्सायां न द्विर्वचनं 'माषश' इत्यादाविति 'सर्वस्य द्वे' (पा.सू. ८.१.१) इति सूत्रे भाष्ये उक्तम्। एवञ्च धातोरपि क्रियात्वक्रियाकालकारकसंख्यारूपं पञ्चकमर्थः। अत एव तद्विषयेऽपि "द्व्येकयोः" इत्यादेः "भावकर्मणोः" (पा.सू. १.३.१३) इत्यादेश्च नियमत्वं भाष्यसम्मतं सङ्गच्छते। अत एव 'दधि', 'अजर्घाः', 'अवेत्' इत्यादौ प्रातिपदिकधातुभ्यामेव सर्वबोधः। अत एव "भावकर्मणोः" इत्यस्य तद्वृत्ताद्धातोरित्यर्थः "स्नुक्रमोः" (पा.सू. ७.२.३६) इति सूत्रे भाष्ये दर्शितः। द्योत्यत्वादेवोभयत्रापि प्रत्ययार्थस्य विशेषणत्वमेवेत्यन्यत्र विस्तरः।

भैरवी– अनभिहित इति सूत्रं यथा प्रत्याख्यातम्तम्प्रकारमाह–पञ्चकेत्यादि। एतदभावेऽपीति–एतयोः सूत्रयोरभावेऽपीत्यर्थः। तत्र यदेति। कर्मणीत्यस्य नियमार्थत्वपक्षे इत्यादिः। भाष्यप्रसिद्धम्प्रत्याख्यानप्रकारमुक्त्वाऽनभिहितसूत्रारम्भवादिसूत्रकारमतमाह– यदा त्विति। तत्त्वम्-वाच्यत्वम्। सूत्रम्-अनभिहिते इत्येतत्। द्वयोः पक्षयोर्मध्ये द्योतकतापक्ष एव मुख्यो भाष्यसम्मतत्वात्। ननु पञ्चकञ्चेत्प्रातिपदिकार्थस्तदा कर्मादिषु विभक्त्यर्थत्वव्यवहारस्य भाष्यसम्मतस्य का गतिरत आह–भाष्य इति। विभक्त्यर्थत्वव्यवहार इति "सुपाङ्कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम्" इत्यत्र तथा व्यवहार इत्यर्थः। ननु द्योतकविषये उक्तार्थानामिति न्यायस्य व्यभिचारः पूर्वत्र प्रदर्शित इति कथन्तन्न्यायमाश्रित्य प्रत्याख्यानमत आह–द्योतकविषय इति। दृश्यत इति–तत्रत्यपूर्वपक्ष इति शेषः। तत्र तत्सूत्रस्थभाष्ये। केवलद्योतकस्थलमाह–अत एवेति। द्योतकविषयेऽपि

**तन्त्र्यायाङ्गीकारादेव। यथा प्रातिपदिकविषये पञ्चकपक्षाङ्गीकारस्तथा धातुविषयेऽपि आह-एवञ्चेति। अत एव उभयत्र पञ्चकपक्षाङ्गीकारादेव। अत एव - तत्तत्पञ्चकस्य तत्तद्वाच्यत्वादेव। अत एव-उक्तपञ्चकस्य धातुवाच्यत्वादेव। तद्वृत्तात्–भावकर्मवाचकात्। उभयत्र = प्रातिपदिकस्थले धातुस्थले च। एवञ्च हरिम्भजतीत्यादितः कर्मीभूतहरिकर्मकम्भजनमिति रीत्या बोधः। अत एव "सत्त्वप्रधानानि नामानि" इति वाक्यं स्वार्थादिनिरूपिताप्राधान्यं यतो नामार्थस्यातः साधु सङ्गच्छते। पचतीत्यादौ चैककर्तृविशिष्टा वर्त्तमाना पचिक्रियेति रीत्या बोधः।**

अनभिहितकर्म में द्वितीया और अभिहितकर्म में प्रथमाविभक्ति होती है। "कर्मणि द्वितीया" शास्त्र में अधिकारबल से "अनभिहिते" की उपस्थिति होने के कारण "कर्मणि द्वितीया" सूत्रद्वारा अनभिहितकर्म में द्वितीयाविभक्ति का विधान होता है।

प्र.— "प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा" सूत्रद्वारा प्रातिपदिकार्थ, लिङ्ग, परिमाण और संख्या अर्थ में प्रथमाविभक्ति का विधान होता है। कर्म अर्थ न तो प्रातिपदिकार्थ है, न लिङ्ग है, न परिमाण है और न संख्या। प्रातिपदिक से कभी कर्मकारक की प्रतीति होती है, कभी करणकारक की, कभी सम्प्रदान की, कभी अपादान की तो कभी अधिकरण की, अतः कर्म नियतोपस्थिति का विषय न होने से प्रातिपदिकार्थ नहीं कहलाता है, अत एव "अभिहिते तु कर्मणि प्रातिपदिकार्थमात्रे प्रथमैव" कथन संगत कैसे होगा?

उ.— अभिहित अर्थ की प्रातिपदिकार्थान्तर्गत गणना होने से अभिहितकर्मादि प्रातिपदिकार्थ कहलाते हैं। "अभिहितः सोऽर्थः प्रातिपदिकार्थः सम्पन्नः" इस भाष्योक्ति के बल से अभिहितकर्मादि प्रातिपदिकार्थ कहलाते हैं। अत एव अभिहितकर्मादि में "प्रातिपदिकार्थे प्रथमा" कथन की सङ्गति होती है।

प्र.— "स्वार्थ, द्रव्य, लिङ्ग, संख्या और कारक" इति प्रातिपदिकार्थपञ्चक पक्ष में कारक और संख्या प्रातिपदिकार्थ हैं। "अनिर्दिष्टार्थक प्रत्ययों का स्वार्थ में विधान होता है" नियमबल से एकत्वविशिष्टकर्म अर्थ में "स्वौजसमौट्" सूत्रद्वारा ही अमादिप्रत्ययों का विधान संभव है, अत एव "कर्मणि द्वितीया" एवं "द्व्येकयोर्द्विवचनैकवचने" शास्त्रोपदेश व्यर्थ हैं?

उ.— एकत्वविशिष्टकर्म में "स्वौजसमौट्" सूत्रद्वारा ही अमादिप्रत्ययों का विधान संभव है, अतः "कर्मणि द्वितीया" एवं "द्व्येकयोर्द्विवचनैकवचने" शास्त्रोपदेश व्यर्थ होकर—

१. "एकत्वविशिष्टे कर्मणि द्वितीयैव" अर्थात् "कर्मत्वगते एकत्वे द्वितीयैव" इत्याकारक अर्थनियम (प्रकृतिनियम) होता है।

**अथवा**

२. "एकत्वविशिष्टे कर्मण्येव द्वितीया" अर्थात् "कर्मत्वगते एकत्वे एव द्वितीया" इत्याकारक प्रत्ययनियम होता है।

प्र.— अर्थनियम, अर्थात् "एकत्वविशिष्टे कर्मणि द्वितीयैव" स्थल में एकत्वसंख्या का प्रकारतया = विशेषणतया = अप्रधानतया और कर्म अर्थ का विशेष्यतया अर्थात् प्रधानतया बोध होता है। जहाँ पर कर्म अर्थ में प्रत्यय का विधान होता है, वहाँ पर प्रत्यय के द्वारा.कर्म अर्थ उक्त हो जाता है, अतः "उक्तार्थानामप्रयोगः" न्यायबल से उक्तकर्म में द्वितीया की प्राप्ति ही नहीं है। इस पक्ष में "अनभिहिते" शास्त्रोपदेश व्यर्थ है?

"कर्मणि द्वितीया" शास्त्रजन्य "एकत्वविशिष्टकर्म में द्वितीया का एकवचन होता है" इत्याकारक बोध में कर्म अर्थ प्रधान है। प्रधान कर्मार्थ ही उक्त होने पर "उक्तार्थानामप्रयोगः" न्याय लगता है।

उ.— "काष्ठादि के भार को एक स्थान पर भी बाँधकर लाया या ले जाया जा सकता है; किन्तु एक स्थान पर बँधा हुआ भार इधर-उधर ढुलकता है, इसलिए भार को स्थानद्वय में बन्धनपूर्वक सुगमता से लाया-ले जाया जाता है।" इति अभिप्रायपरक "द्विर्बद्धं सुबद्धं भवति" न्यायद्वारा भार का वारद्वय बन्धन सुदृढ कहलाता है।

यद्यपि कर्म में प्रत्यय करने से कर्म अर्थ उक्त हो जाता है, तथापि उक्तकर्मबोधनेच्छा से भी द्वितीया का विधान न हो, इसलिए "द्विर्बद्धं सुबद्धं भवति" न्यायदृष्ट्या "अनभिहिते" शास्त्रोपदेश संगत होता है।

प्र.— "द्विर्बद्धं सुबद्धं भवति" न्याय वाचक-वाचक के मध्य अथवा द्योतक-वाचक के मध्य निर्णायक होता है। कर्मणि प्रत्ययस्थल में तो तिङ्प्रत्यय

भी कर्म अर्थ का द्योतक है और द्वितीयाविभक्ति भी कर्म अर्थ की द्योतिका है, कर्म अर्थ की वाचकता तो वास्तव में "स्वार्थ, द्रव्य, लिङ्ग, संख्या, कारक" इस प्रातिपदिकार्थपञ्चक की भाँति "क्रियात्व, क्रिया, काल, कारक और संख्या" धात्वर्थपञ्चकपक्ष में प्रातिपदिक अथवा धातु में ही रहती है। इस प्रकार कर्मणि प्रत्ययस्थल में द्योतक-द्योतक के समभिव्याहार होने से 'द्विर्बद्धं सुबद्धं भवति' न्याय की विषयता ही नहीं है, अत: "अनभिहिते" अधिकार व्यर्थ है। "द्वौ ब्राह्मणौ, व्यतिलुनीते" स्थल में द्वि और ब्राह्मण प्रातिपदिक का वाच्य अर्थ है द्वित्व तथा औविभक्ति का द्योत्य अर्थ है द्वित्व। "द्वौ" स्थल में द्विप्रातिपदिक का द्वित्व वाच्यार्थ है, औविभक्ति अनुवादिका है, यतो हि विना विभक्ति के द्विप्रातिपदिक से भी द्वित्व अर्थ की प्रतीति होती है। इस प्रकार "द्वौ ब्राह्मणौ, व्यतिलुनीते" स्थल में द्योतकवाचकसमभिव्याहार होने से "द्विर्बद्धं सुबद्धं भवति" न्याय की प्रवृत्ति होती है।

उ.— "द्विर्बद्धं सुबद्धं भवति" प्रकृतन्याय यथा वाचक-वाचक और द्योतक-वाचक के मध्य प्रयुक्त होता है, तथैव द्योतक-द्योत्तक के मध्य भी प्रवृत्त होता है, अत एव 'व्यतिलुनीते' प्रयोग में कर्मव्यतिहार अर्थ के द्योतक "व्यति" उपसर्गों के साथ-साथ कर्मव्यतिहार द्योतक तङ् (ते) प्रत्यय का भी प्रयोग हुआ है, अत एव "अनभिहिते" अधिकारोपदेश न करने पर "द्विर्बद्धं सुबद्धं भवति" न्यायबल से उक्तकर्म में "कर्मणि द्वितीया" सूत्रद्वारा प्राप्त द्वितीया का वारण करने के लिये "अनभिहिते" सूत्रोपदेश आवश्यक है।

प्र.— प्रकृतप्रसङ्ग में समस्या आती है कि—

१. "उक्तार्थानामप्रयोग:" न्यायप्रवृत्ति स्वीकार करने पर अभिहितकर्म में द्वितीया अप्राप्त है, अत एव "अनभिहिते" इत्यधिकारसूत्रोपदेश नहीं करना चाहिए। यह पक्ष स्वीकार करें? अथवा

२. "द्विर्बद्धं सुबद्धं भवति" न्यायप्रवृत्तिस्वीकृतिपुर:सर अभिहितकर्म में "कर्मणि द्वितीया" सूत्रद्वारा प्राप्त द्वितीया का वारण करने के लिये "अनभिहिते" इत्यधिकारोपदेश करना चाहिए। यह पक्ष स्वीकार करें?

उ.— लाघवात् "उक्तार्थानामप्रयोगः" न्याय की प्रवृत्ति प्रकृतस्थल में स्वीकार करनी चाहिए। यतो हि प्रकृतन्याय की प्रवृत्ति स्वीकार करने पर 'अनभिहिते" इत्यधिकारोपदेश करना नहीं पड़ता, यह लाघव है। यदा "कर्मणि द्वितीया" और "द्व्येकयोर्द्विवचनैकवचने" शास्त्रों की एकवाक्यतापूर्वक "कर्मत्वगते एकत्वे द्वितीयाया एकवचनमेव" इत्याकारक प्रकृतिनियम (अर्थनियम) स्वीकार करते हैं, तब संख्याविशेष्यक बोध होता है, इत्थञ्च कर्मणि प्रत्यय करने पर भी कर्म अर्थ विशेषणविधया उक्त होता है। इस पक्ष में "उक्तार्थानामप्रयोगः" न्यायद्वारा द्वितीया का वारण संभव नहीं है। इस प्रकार "उक्तार्थानामप्रयोगः" न्यायप्रवृत्ति स्वीकार करने पर भी "अनभिहिते" सूत्रोपदेश आवश्यक है।

प्र.— भाष्य में तो कर्मादि को विभक्त्यर्थ कहा है, इससे सिद्ध होता है, कि कर्मादि विभक्ति के वाच्यार्थ हैं। आप कर्मादि को विभक्ति के द्योत्य अर्थ कैसे कहते हैं?

उ.— "कर्मादि विभक्त्यर्थ हैं" इस भाष्यकथन का तात्पर्य "कर्मादि विभक्ति के वाच्यार्थ हैं" यह नहीं समझना चाहिए, यतो हि कर्मादि को विभक्तिवाच्य स्वीकार करने पर कर्मादि प्रकृत्यर्थ = स्वार्थ नहीं कहलावेंगे, तथा च प्रकृतस्थल में "अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति" न्याय की विषयता न रहने से "कर्मणि द्वितीया" एवं "द्व्येकयोर्द्विवचनैकवचने" शास्त्रों की नियमार्थोपपत्ति नहीं होगी। यह बात 'बहुषु बहुवचनम्' (पा.सू. १.४.२१) सूत्र के भाष्य में स्पष्ट है।

प्र.— आपका कथन है कि कर्मादि अर्थ तिङ्प्रत्यय से उक्त होने के कारण "उक्तार्थानामप्रयोगः" न्यायद्वारा उक्तकर्म में द्वितीया नहीं आती; किन्तु उक्तार्थानामिति न्याय तो द्योतक-वाचक के मध्य लगता है, द्योतक-द्योतक के मध्य तो लगता ही नहीं है?

उ.— द्योतकों के समभिव्याहार में भी "उक्तार्थानामप्रयोगः" न्याय की प्रवृत्ति होती है, यह बात "अधिपरी अनर्थकौ" शास्त्र के भाष्य में स्पष्ट है। प्रकृतस्थल में भाष्यकार कहते हैं कि "अध्यागच्छति" प्रयोग में 'आङ्' उपसर्ग आगमनार्थद्योतक है और 'अधि' उपसर्ग भी आगमनार्थ का ही द्योतक है, अत एव "उक्तार्थानामप्रयोगः" न्यायबल से "अध्यागच्छति" प्रयोग में 'अधि' उपसर्गोपदेश नहीं करना चाहिए। इससे सिद्ध होता

है, कि "उक्तार्थानामप्रयोग:" न्याय द्योतक-द्योतक-समभिव्याहार में भी प्रवृत्त होता ही है।

"उक्तार्थानामप्रयोग:" न्याय की द्योतक-द्योतक के समभिव्याहार में भी प्रवृत्ति होती है, इसीलिये "द्विदश: ददाति" विग्रह में समास के द्वारा पौन:पुन्य अर्थ उक्त होने के कारण "द्वित्रिश्चतुरिति कृत्वोऽर्थे" शास्त्रद्वारा पौन:पुन्य अर्थ में प्राप्त सुच्प्रत्यय का "उक्तार्थानामप्रयोग:" न्याय से वारण किया। प्रकृतस्थल में समास और सुच्प्रत्यय दोनों ही पौन:पुन्य अर्थ के द्योतक हैं। सुच्प्रत्यय का क्रिया के पौन:पुन्येन जन्म अर्थ में विधान होता है, इस विषय का वर्णन "क्रियाया अभ्यावृत्ति." सूत्रार्थप्रतिपादक भाष्य में किया है।

"एक-एक मासा सोना दे रही है" इत्यर्थक "मासं मासं ददाति" विग्रह में "संख्यैकवचनाच्च वीप्सायाम्" सूत्रद्वारा शस्प्रत्ययविधानपूर्वकोपपन्न 'मासश:' पद को पुन: वीप्सार्थ में "उक्तार्थानामप्रयोग:" न्यायबल से द्वित्व नहीं होता है, यह विषय 'सर्वस्य द्वे' (पा.सू.८.१.१) सूत्र के भाष्य में वर्णित है। प्रकृतस्थल में शस्प्रत्यय और द्विर्वचन दोनों का ही वीप्सार्थ द्योत्य है।

जिस प्रकार प्रातिपदिक के स्वार्थ, द्रव्य, लिङ्ग, संख्या और कारक अर्थपञ्चक स्वीकृतिपक्ष में "कर्मणि द्वितीया" और "द्व्येकयो॰" शास्त्र नियमार्थ सिद्ध होते हैं, उसी प्रकार क्रियात्व, क्रिया, काल, कारक और संख्या इति धात्वर्थपञ्चक स्वीकार करने पर भी "अनिर्दिष्टार्था: प्रत्यया: स्वार्थे भवन्ति" नियमबल से "तिप्तस्." शास्त्रद्वारा ही एकत्वविशिष्टकर्मादि अर्थ में आत्मनेपदप्रत्ययों का विधान संभव है, अत एव "भावकर्मणो:" एवं "द्व्येकयो:." शास्त्रोपदेश व्यर्थीभूय "एकत्वविशिष्टे कर्मण्येव तङ्" इति नियमार्थप्रतिपादिका भाष्योक्ति संगत होती है।

प्रा.— यदि कर्म में ही आत्मनेपद का विधान होगा, तर्हि "एधते" प्रयोगोपपत्ति कैसे होगी?

उ.— "एकत्वविशिष्टे कर्मणि एव तङ्" यह नियम यक् के समभिव्याहार में लगता है, शप्समभिव्याहार में नहीं। अत एव "एधते" प्रयोगोपपत्ति भी संभव होती है।

"पञ्चकं प्रातिपदिकार्थ:" की भाँति "पञ्चकं धात्वर्थ:" स्वीकार करने से कारक और संख्या भी धात्वर्थ कहलाते हैं, अत एव "दधि, अवे:,

अजर्घाः'' इत्यादि स्थल में सुप् और तिङ् विभक्ति का लुक् होने पर भी कारक का भान होता है। ''पञ्चकं धात्वर्थः'' यह सिद्धान्तपक्ष है, इसीलिये ''भावकर्मणोः'' शास्त्र की ''भाव और कर्म अर्थ में वर्त्तमान धातु से आत्मनेपद होता है'' इत्यर्थोपपत्ति होती है। इस विषय का ''स्नुक्रमोः ७.२.३७'' सूत्र के भाष्य में वर्णन है।

कारक और संख्या विभक्ति का द्योत्य अर्थ है, इसीलिये सुबन्त और तिङन्त उभयत्रापि प्रत्ययार्थ विशेषण ही रहता है। तिङन्तस्थल में धात्वर्थव्यापारमुख्यविशेष्यकबोध होता है और सुबन्तस्थल में प्रातिपदिकार्थविशेष्यक इसका विस्तारपूर्वक वर्णन ''सत्त्वप्रधानानि॰'' स्थल में किया जाएगा।

**शे.मू.– प्रथमैवेति–सा हि प्रातिपदिकार्थस्य तेनोक्तत्वेऽपि भवत्येवेति भावः। अत एव 'अभिहिते प्रथमा' इति वार्त्तिकं सङ्गच्छते। 'तिङ्कृत्' इत्यादिपरिगणनादेव ''कटं भीष्मं कुरु'' इत्यादौ विशेष्यादुत्पन्नद्वितीयया गतार्थत्वेऽपि विशेषणात्सा। यदा तु प्रक्रियादशायाङ्कटोऽपि कर्म भीष्मादयोऽपि इत्याश्रयणात् कटत्वविशिष्टकटकर्मत्वोक्तावपि भीष्मत्वादिगुणविशिष्टनिष्ठस्य तस्य बोधार्थं ततोऽपि सा। बोधस्तु परस्परं तयोर्विशेष्यविशेषणभावेनैव। कारकाणां भावनान्वयव्युत्पत्तिः साक्षात्स्वाश्रयद्वारा वाऽन्वयविषयेति तदा परिगणनं भाष्ये प्रत्याख्यातम्। तिङ्कृतौ स्वप्रकृत्यर्थं प्रति यस्य यस्य कर्मता तस्य सर्वस्यापि कर्मतामाहतुरिति। ''कृतः कटः सुन्दरः'' इत्यादौ न क्वापि द्वितीयेति दिक्।**

**भैरवी– ननु प्रातिपदिकार्थे प्रथमैवेत्यपि कथम्? तत्राप्यनभिहिताधिकारादत आह-सा हीति। अत एव– कर्मादीनामभिधानस्थले प्रथमायाः सर्वसम्मतत्वादेव। विशेषणात्सेति– भीष्मपदाद् द्वितीयेत्यर्थः। परिगणनप्रत्याख्यानमाह यदा त्विति– एतत्पक्षस्य यदि कर्मत्वं शक्तिविशेषरूपं तदोपपत्तिः सुष्ठु सम्भवति। प्राचीनमते तु फलाश्रयत्वमेव कर्मत्वमाश्रयता चाश्रयभेदेन भिद्यते, प्रकृते तु नाश्रयभेदो यद्यप्यस्ति तथाप्याश्रयतावच्छेदकभेदादाश्रयभेदमङ्गीकृत्य यथाकथञ्चित्कर्त्तव्या। अत्र प्राञ्चः– यथा ''अश्वेन पथा दीपिकया निशायां ग्रामं व्रजति चैत्रः'' इत्यादौ सर्वेषां कारकाणां धात्वर्थे स्वातन्त्र्येण विशेषणतयाऽन्वयस्तथा**

'कटम्भीष्मम्' इत्यादावपि स्वातन्त्र्येणोभयोः क्रियायाम्प्रकारत्वं शाब्दबोधे पार्ष्टिकन्तु परस्पराभेदावगाहि मानसमिति तन्न युक्तमित्याशयेनाह– बोधस्त्विति। तयोः–द्वितीयान्तपदद्वयार्थयोः। विशेष्यविशेषणभावेनैवेति– इतरसम्बन्धानवच्छिन्नविशेषणविशेष्यभावेनैवेत्यर्थः। समानविभक्तिक-नामार्थयोरसति बाधकेऽभेदान्वयस्यौत्सर्गिकत्वात्। कर्मभीष्मा-भिन्नकर्मकटकर्मकं करणमित्यादिरीत्या "भीष्मं कटं करोति" इत्यादिभ्यो बोधो यदि स्वातन्त्र्येण क्रियायामेवोभयपदार्थान्वयबोधस्तदाऽभेदान्वय-बोधसामग्र्यभावसम्पादनाय किञ्चित्प्रतिबन्धकङ्कल्पनीयमिति गौरवम्। किञ्चैतद्वाक्यजन्यशाब्दबोधानन्तरङ्कटो भीष्मो न वेति सन्देहनिवृत्त्यर्थन्नियमेन तादृशमानसकल्पना कार्या, एवं सति सा मानसव्यक्ति-स्तत्प्रागभावस्तद्ध्वंसश्च कल्पनीय इत्यतिगौरवम्। किञ्च प्राचीनमते 'कटम्भीष्मङ्कुरु' इत्याकारकवाक्यजन्यशाब्दबोधसामग्र्याः स्वातन्त्र्येण "भीष्मभिन्नः कटः सुन्दरः" इत्याकारकविशिष्टे वैशिष्ट्यमिति रीत्या यत्प्रत्यक्षन्तत्र प्रतिबन्धकत्वङ्कल्पनीयमित्यतिगौरवम्, अस्मन्मते तु शाब्दसामग्र्याः 'कटो भीष्मः' इत्याकारकयोग्यताज्ञानघटितया तादृशयोग्यताज्ञानसत्त्वे विशेष्यतावच्छेदकप्रकारकज्ञानात्मक-कारणाभावादेव तादृशयोग्यताज्ञानसत्त्वे विशेष्यतावच्छेदकप्रकारक-ज्ञानात्मककारणाभावादेव तादृशविशिष्टे वैशिष्ट्यमिति रीत्या यत्प्रत्यक्षन्तदापत्तिवारणे शाब्दसामग्र्याः स्वातन्त्र्येण प्रतिबन्धकत्वन्न कल्पनीयमिति लाघवमिति दिक्। ननु भीष्ममित्यस्य द्वितीयान्तार्थस्याभेदेन कटेऽन्वयस्वीकारे कारकाणां भावनाऽन्वयव्युत्पत्तिभङ्ग इत्यत आह– कारकाणामिति। अन्वयविषयेति-अस्य स्वीकारेणेति शेषः। नन्वेवं कृतः कटः सुन्दर इत्यत्र कटनिष्ठकर्मत्वस्याभिधानेऽपि सुन्दरपदार्थनिष्ठकर्मत्वस्यानभिधानाद् द्वितीया स्यादत आह-तिङ्कृताविति। यस्य यस्य कर्मतेति-साक्षात्परम्परया वेति शेषः।

प्रथमैवेति–अभिहिते तु कर्मणि प्रातिपदिकार्थमात्र इति प्रथमैव– "कर्मणि द्वितीया" सूत्र में "अनभिहिते" सूत्र की अधिकारबलेन उपस्थिति होने से "कर्मणि द्वितीया" सूत्रद्वारा अनभिहितकर्म में द्वितीयाविभक्ति का विधान होता है, यथा "देवदत्तः ग्रामं गच्छति" वाक्य में गम्धातु से कर्त्ता अर्थ में प्रत्ययविधान करने पर कर्त्रर्थ

**उक्त है और कर्मार्थ अनुक्त होने से अनुक्तकर्म में ''कर्मणि द्वितीया'' सूत्र से द्वितीयाविभक्ति का विधान होता है। कर्म में प्रत्यय करने से ''यस्मिन् प्रत्ययः स उक्तः'' नियमद्वारा कर्म अर्थ उक्त हो जाता है, अत एव उक्तकर्म में प्रथमाविभक्ति होती है। यथा–''देवदत्तेन ग्रामः गम्यते''।**

प्र.— अभिहितकर्म में प्रथमाविभक्ति का विधान कैसे होगा, यतो हि कारक तो नियत उपस्थिति का विषय नहीं, कर्मादि में प्रत्यय करने पर कभी कर्मकारक का कभी करणकारक का कभी सम्प्रदानकारक का बोध होता है। अत: नियतोपस्थितिकत्वाभावात् अभिहितकारक में प्रथमाविभक्ति का विधान कैसे होता है?

उ.— यद्यपि कर्मादि में प्रत्यय करने पर कभी कर्म की, कभी करण की उपस्थिति होने से कारक नियतोपस्थिति का विषय न होने पर भी "अभिहित: सोऽर्थ: प्रातिपदिकार्थ: सम्पन्न:" नियमानुसार कर्मादिकारक में प्रत्यय करने पर उक्तकारक में प्रथमा होती है, यथा—"कृत: कट:" इत्यादि।

प्र.— कारक प्रातिपदिकार्थ है; वह कारक "कृत:" इत्यत्र क्तप्रत्यय से उक्त हो गया, पुन: 'कृत:' इत्यत्र प्रथमाविभक्ति का विधान कैसे किया जाता है?

उ.— प्रथमाविभक्ति का विधान तो प्रातिपदिकार्थ के अभिहित होने पर भी होता है, यतो हि प्रातिपदिकार्थ तो सर्वत्र प्रातिपदिक से अभिहित ही रहता है। यदि अभिहितप्रातिपदिकार्थ में प्रथमा का विधान न हो, तर्हि प्रथमा विभक्ति का विधान ही व्यर्थ हो जायेगा, अत एव प्रथमाविभक्तिविधानबल से अभिहितप्रातिदिकार्थ में भी प्रथमाविभक्ति होती है। अभिहित प्रातिपदिकार्थ में प्रथमा होती है, अत एव "अभिहिते प्रथमा" वार्त्तिक संगत होता है।

प्र.— "कर्मणि द्वितीया" शास्त्रद्वारा अनभिहितकर्म में द्वितीयाविभक्ति होती है। अत एव "कटं भीष्मं कुरु" वाक्यघटक भीष्मशब्द से द्वितीयाविभक्ति नहीं होनी चाहिए, यतो हि कट भीष्मरूप ही तो है, कट से भिन्न तो भीष्म की लेशमात्र सत्ता है ही नहीं। तथा च "कटम्" इत्यत्र कटशब्दोत्तर अम्विभक्तिद्वारा भीष्मवृत्तिकर्मत्वशक्ति उक्त होने के कारण भीष्मशब्द से द्वितीयाविभक्ति नहीं होनी चाहिए?

उ.— यद्यपि कटशब्दोत्तर द्वितीया से भीष्मगत कर्मत्वशक्ति उक्त है, तथापि सुप्रत्ययद्वारा उक्त, उक्त नहीं माना जाता, अपितु तिङ्कृत्तद्धितसमास द्वारा उक्त, उक्त कहलाता है। इसीलिये "अभिधानं प्रायेण तिङ्कृत्तद्धितसमासैः" रूपेण परिगणन किया है। परिगणनसामर्थ्य से कटशब्दोत्तर अम्विभक्तिद्वारा भीष्मवृत्तिकर्मत्वशक्ति उक्त होने पर भी भीष्मशब्द से द्वितीयाविभक्ति आती है।

**वस्तुतस्तु परिगणन की कोई आवश्यकता नहीं है, इसीलिये भाष्य में इसका प्रत्याख्यान है।**

प्र.— यदि "तिङ्कृत्तद्धितसमासद्वारा उक्त ही उक्त कहलाता है" इत्याकारक परिगणन स्वीकार नहीं करेंगे, तर्हि "कटम्" इत्यत्र कटप्रातिपदिकोत्तर-द्वितीयाविभक्तिद्वारा भीष्मगतकर्मत्वशक्ति उक्त होने पर "कटं भीष्मं कुरु" वाक्यान्तर्गत भीष्मप्रातिपदिक से द्वितीयाविभक्ति का विधान कैसे होगा?

उ.— जितने कारक हैं, उनका अपने-अपने विशेष्यद्वारा भी क्रिया में अन्वय होता है और साक्षात् भी, यथा 'कटं कुरु' आदेशोत्तर कीदृशं कटम्? इत्याकारिका आकाङ्क्षा होने पर "भीष्मं कटं कुरु" इत्यत्र "कटम्" पदान्तर्गत अम्विभक्तिद्वारा कटत्वविशिष्टकटनिष्ठकर्म को कहा गया है और भीष्मम् पदान्तर्गत अम्विभक्तिद्वारा भीष्मत्वगुणविशिष्टकटनिष्ठकर्मत्वशक्ति को कहा गया है। इस प्रकार कटत्वविशिष्टकटनिष्ठकर्मत्वशक्ति के "कटम्" पदान्तर्गत अम्विभक्तिद्वारा उक्त होने पर भी भीष्मत्वगुणविशिष्ट-कटनिष्ठकर्मत्वशक्ति अनुक्त रहती है, अत एव भीष्मत्व-गुणविशिष्टकटनिष्ठकर्मत्वशक्तिबोधनार्थ भीष्मप्रातिपदिक से द्वितीयाविभक्ति होती है। पद बनने के अनन्तर अर्थात् द्वितीयाविभक्ति आने के बाद उभयपदार्थों का परस्पर अन्वय करने के लिये अर्थात् शाब्दबोधकाल में भीष्मम् और कटम् पदोपस्थाप्य अर्थों का परस्पर विशेषण-विशेष्यभावरूपसम्बन्ध से अन्वय होता है। "कारक क्रियान्वयी होते हैं" इति नियमबल से कट और भीष्मरूप कर्मों का करणक्रिया में अन्वय होता है। कारक का क्रिया के साथ होनेवाला अन्वय साक्षात् भी होता है और परम्परया भी, इस प्रकार भीष्मरूप कर्म का साक्षात् करणक्रिया में अन्वय होते समय भीष्मप्रातिपदिक से द्वितीयाविभक्ति आ सकती है, अत एव भाष्यकार ने परिगणन का खण्डन किया है।

प्र.— आपका कहना है कि तिङ्कृत्-तद्धित और समास द्वारा उक्त कर्म में प्रथमाविभक्ति होती है, अत एव "कृतः कटः सुन्दरः" इत्यत्र क्तप्रत्ययद्वारा कटगतकर्मत्वशक्ति उक्त होने के कारण कटशब्द से प्रथमाविभक्ति आती है। ठीक है, किन्तु सुन्दरत्वविशिष्टकटनिष्ठकर्म तो क्तप्रत्ययद्वारा समुक्त है नहीं, अत एव सुन्दरप्रातिपदिक से द्वितीयाविभक्ति आनी चाहिए?

उ.— तिङ् और कृत् प्रत्यय स्वप्रकृत्यर्थक्रियानिरूपित सकल कर्मों को उक्त करते हैं। "कृतः कटः सुन्दरः" इत्यत्र कृधात्वर्थक्रियानिरूपितकर्मता कट और सुन्दर उभयनिष्ठ है। इसी प्रकार "गम्यते ग्रामः सुन्दरः" इत्यत्रापि गम्धात्वर्थगमनक्रियानिरूपितकर्मता ग्राम और सुन्दर उभयनिष्ठ है। उभयत्रापि क्रमशः क्तप्रत्यय और तिङ्प्रत्ययद्वारा उभयनिष्ठकर्मता उक्त होने के कारण सुन्दरप्रातिपदिक से द्वितीया नहीं आती है।

**शत्य इति– अभिधानं च प्रायेण तिङ्कृत्तद्धितसमासैः।**

**शे.मू.– अत्र वदन्ति-कर्मादिपद इवात्रापि न विभक्तिवाच्यतावच्छेदकरूपेण कर्मादेर्भानम्, अत औपगवश्चित्रगुरिति युक्तं प्रत्युदाहर्त्तुम्। तत्र च सम्बन्धस्य येन रूपेण षष्ठ्या भानं तेनैव तद्धितान्तादिभिस्समुदायशक्त्या। एतदधिकाराभावे च घट इत्यादौ षष्ठ्यवाच्यत्वेन दृष्टानामेव प्रातिपदिकार्थपदेन ग्रहणं स्यात्, तद्भिन्नस्यैव च षष्ठीविधायके शेषपदेन ग्रहणं स्यादित्यत्र सम्बन्धस्य षष्ठीवाच्यत्वेन दृष्टतया प्राप्तां षष्ठीं वारयितुं सः।**

**भैरवी– मूलादिकं खण्डयति-अत्र वदन्तीति। कर्मादिपदे इति। अस्योच्चारिते सति तज्जन्योपस्थितौ यथा न विभक्तिवाच्यतावच्छेदकरूपेण भानन्तथेति शेषः। रूपेण-कर्मत्वशक्तिमत्त्वेन। यथा वाशब्दजन्यविकल्पोपस्थित्यपेक्षया विकल्पः पदजन्यविकल्पोपस्थितिर्विलक्षणा सत्त्वासत्त्वाभ्यां तयोर्वैलक्षण्यस्यानुभवसिद्धत्वात्। समुदायशक्त्येति-औपगव इत्यत्र तत्सम्बन्ध्यपत्यमित्यर्थे प्रत्ययविधानाच्चित्रगुरित्यत्र षष्ठ्यर्थे बहुव्रीहिविधानादिति भावः। एतदधिकारेति-अनभिहिताधिकारेत्यर्थः। औपगवश्चित्रगुरित्यत्र षष्ठ्यापादनन्तदा समुदायात् स्याद्यदा प्रातिपदिकार्थे विधीयमानया प्रथमया बाधो न स्यादित्याशङ्कानिवारणायाह-घट इत्यादाविति। दृष्टानामेवेति प्रवृत्तिनिमित्ततदाश्रयरूपाणाम्। तद्भिन्नस्यैवेति-प्रवृत्तिनिमित्ततदाश्रयाभ्याम्भिन्नस्येत्यर्थः। षष्ठीवाच्यत्वेन दृष्टतयेति। अनभिहिताधिकाराभावेऽभिहितानभिहितसाधारणसम्बन्धमात्रस्य 'षष्ठी**

शेषे' इति सूत्रे शेषपदेन ग्रहणं स्यात्। अनभिहिताधिकारे तु कृतेऽनभिहितसम्बन्धस्यैव षष्ठीवाच्यतया औपगवश्चित्रगुरित्यत्र प्रतीयमानस्य तु प्रातिपदिकेनाभिहिततयाऽयं षष्ठ्यवाच्य इति प्रवृत्तिनिमित्तरूपोऽयं सम्बन्धः प्रातिपदिकार्थपदेन गृह्यत इति प्रथमा भवतीति भावः। अत एव प्रकृतसूत्रभाष्ये कर्मणि द्वितीयेत्यादिविषयेऽधिकारफलमुक्त्वाऽन्ते औपगवश्चित्रगुरित्यत्राधिकारफलमुक्तम्।

तिङ्-कृत्-तद्धित अथवा समास द्वारा अभिहित, अभिहित कहलाता है। सुप्प्रत्ययद्वारा अभिहित, अभिहित नहीं कहलाता। इसीलिये ''कटं भीष्मं कुरु'' इत्यत्र कटप्रातिपदिकोत्तर अम्प्रत्ययद्वारा कर्मत्वशक्ति उक्त होने पर भी भीष्म–वृत्तिकर्मत्वशक्तिबोधन कराने के लिये भीष्म प्रातिपदिक से द्वितीयाविभक्ति होती है।

तिङ्प्रत्यय के द्वारा उक्त होने पर प्रथमा विभक्ति होती है। यथा– ''देवदत्तः ग्रामं गच्छति'' इत्यत्र तिङ्प्रत्यय कर्त्ता अर्थ में आया है, अत एव उक्तकर्त्ता में प्रथमाविभक्ति होती है। ''देवदत्तेन ग्रामः गम्यते'' इत्यत्र तिङ्प्रत्यय कर्म अर्थ में आया है, अत एव उक्तकर्म में प्रथमा-विभक्ति का विधान होता है। कृत्प्रत्यय के द्वारा जो उक्त होता है, उससे प्रथमाविभक्ति आती है। यथा ''देवदत्तेन कृतः कटः'' इत्यत्र ''देवदत्तः कटम् अकार्षीत्'' विग्रह में कर्म में क्तप्रत्यय करने पर कर्म अर्थ उक्त होने से उक्तकर्म में प्रथमा विभक्ति आती है।

तद्धितप्रत्यय के द्वारा उक्तकारक में प्रथमा विभक्ति होती है। यथा ''शतेन अश्वम् अक्रीणीत्'' विग्रह में यत्प्रत्यय कर्म में होता है, अत एव अश्वकर्म उक्त होने के कारण प्रथमा का विधान होने से ''शत्यः अश्वः'' प्रयोग की सिद्धि होती है। समासद्वारा उक्तकारक में प्रथमाविभक्ति का विधान होता है। यथा ''प्राप्तः आनन्दः यं पुरुषम्'' विग्रह में यम् इति अन्यपदार्थ कर्म है। अन्यपदार्थ समास के द्वारा उक्त होने से प्राप्तानन्दप्रातिपदिक से प्रथमा विभक्ति आती है।

प्र.— "अभिधानञ्च प्रायेण तिङ्कृत्तद्धितसमासैः" इत्यत्र तद्धितप्रत्ययद्वारा उक्तकर्म में प्रथमाविभक्ति के विधान का "शत्यः" उदाहरण दिया है, वह ठीक नहीं है। यतो हि "कर्म गच्छति" में जैसे कर्मप्रातिपदिकद्वारा कर्मत्वशक्ति उक्त होने पर भी कर्मशब्द से यथा द्वितीयाविभक्ति आती है, तथैव तद्धितप्रत्यय के द्वारा कर्म अर्थ उक्त होने पर भी शत्यप्रातिपदिक से द्वितीयाविभक्ति का विधान होना चाहिए?

उ.— "कर्म गच्छति" वाक्यघटक कर्मप्रातिपदिक से (प्रकृति से) कर्मत्वशक्ति उक्त होने पर भी उक्त नहीं कहलाती है। यतो हि प्रत्ययद्वारा कारक उक्त होने पर ही उक्तकारक कहलाता है, अत एव "कर्म गच्छति" वाक्यघटककर्मशब्द से द्वितीया आती है, शत्यप्रातिपदिक से नहीं आती।

प्र.— विभक्तिवाच्यतावच्छेदक कर्मत्व होने पर अर्थात् विभक्ति का उद्भूतकर्म अर्थ होने पर द्वितीयाविभक्ति आती है। "शत्यः" इत्यत्र विभक्तिवाच्यतावच्छेदक कर्मत्व न होकर प्रत्ययवाच्यतावच्छेदक कर्मत्व है, अत एव शत्यप्रातिपदिक से द्वितीयाविभक्ति स्वतः प्राप्त नहीं है। इत्थञ्च परिगणन का अर्थात् "अनभिहिते" अधिकार का "शत्यः" उदाहरण देना अनुपयुक्त है?

उ.— ठीक है, परिगणन का अर्थात् "अनभिहिते" अधिकार का शत्यः उदाहरण युक्तियुक्त नहीं है। यह हम स्वीकार करते हैं, इसीलिये शेखरकार ने परिगणन के औपगवः और चित्रगुः उदाहरण दिये हैं। यथा-उपगोर्गोत्रापत्यम् विग्रह में "तस्यापत्यम्" शास्त्र से अण्प्रत्यय, उपगोः पदघटक षष्ठी का जन्यजनकभावसम्बन्ध अर्थ है, अर्थात् उपगोरपत्यम् का उपगुसम्बन्धवान् अपत्य अर्थ है। 'उपगु+ङस्' से अण् प्रत्यय करने पर सम्बन्ध अर्थ तद्धित से उक्त हो गया। अनभिहिते शास्त्रोपदेश करने पर अनभिहित सम्बन्ध अर्थ में "षष्ठी शेषे" शास्त्रद्वारा षष्ठी विभक्ति होती है। अतः तद्धित प्रत्यय के द्वारा सम्बन्ध अर्थ उक्त होने के कारण औपगवशब्द से षष्ठी नहीं हुई। इसी प्रकार 'चित्रा गावो यस्ये'त्यर्थक 'चित्रा जस् गो जस्' स्थल में समास के द्वारा स्वस्वामिभावरूपसम्बन्ध उक्त हो गया, अतः चित्रगोस्वामित्व अर्थवाले चित्रगुशब्द से षष्ठी विभक्ति नहीं आई। यदि अनभिहिते अधिकार नहीं करेंगे, तो "शेषे षष्ठी" सूत्रद्वारा औपगव और चित्रगुशब्दों से भी षष्ठीविभक्ति आने लगेगी।

प्रश्न— अनभिहिते शास्त्रोपदेशाभावे औपगव और चित्रगु शब्दों से यथा षष्ठी प्राप्त होगी तथा प्रथमा भी, प्रथमा के द्वारा षष्ठी का बाध हो जायेगा, अतः "अनभिहिते' अधिकाराभावेऽपि कोई दोष नहीं है।

उत्तर— 'घटः, पटः' इत्यादि प्रथमान्त स्थलों में जो कर्तृत्व अर्थ प्रतीत होता है, वह षष्ठी का अर्थ नहीं है। इससे हमें ज्ञात होता है कि प्रथमा वहीं होती है, जो षष्ठीवाच्यत्वेन न देखा गया हो, अर्थात् षष्ठीवाच्यत्वेन अदृष्ट को प्रातिपदिकार्थ कहते हैं। औपगवशब्दबोध्य सम्बन्ध अर्थ तो

करने पर 'हस्तं गां पयो दोग्धि' अथवा 'स्थालीं गां पयो दोग्धि' इत्यादि वाक्योपपत्ति नहीं होती है। अर्थात् 'अपादानादिविशेषैरविवक्षितम्' वाक्यघटक अपादानादिशब्द से दुहादिधात्वर्थ व्यापारानन्तर और व्यापारपूर्व उभयकर्मयोगी स्थल में दुहादिधात्वर्थव्यापारपूर्वकर्मयोगी अपादान, सम्प्रदान और अधिकरणादि का ग्रहण होता है, अत एव 'हस्तेन गां पयो दोग्धि' और 'स्थाल्यां गां पयो दोग्धि' वाक्योपपत्ति होती है। वस्तुतस्तु हस्तकरण का तो दुह्धात्वर्थव्यापारानन्तर भी पयस् कर्म के साथ योग न होकर गोस्तन के साथ अथवा दोहनक्रिया के साथ ही योग है।

**शे.–** **यद्यपि 'गां दोग्धि' इत्यादौ 'गौः पयस्त्यजति' 'गवा पयस्त्याजयति' इत्याद्यर्थप्रतीत्या 'कर्त्तुरीप्सिततमम्' इत्येव सिद्धम्। प्रधानकर्मत्वञ्च गवादीनामिति तत्रैव लादिसिद्धिः। प्रधानकर्मत्वञ्च कर्तृप्रत्ययसमभिव्याहारे कर्तृनिष्ठप्रधानव्यापारविशेषणफलाश्रयत्वम्। ण्यन्तविषये ईदृशप्राधान्यस्यैव ग्रहात्। प्रकृते च पयोनिष्ठविभागानुकूलो यो गोनिष्ठव्यापारस्तदनुकूल-व्यापारस्य शब्दतः प्राधान्यात्। 'गर्गाः शतं दण्ड्यन्ताम्' इत्यत्र गर्गाणामेव तत्त्वम्। उद्देश्यत्वरूपमार्थं प्राधान्यन्तु शतस्येत्यनुद्देश्यत्वेना-प्रधानगर्गानुरोधान्न शतावृत्तिरिति न वृद्धिसूत्रस्थभाष्यविरोधः। एवमेव 'शकारमसि चोदितः' इत्याद्युपपत्तिरत एव—**

**प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् ।**
**अप्रधाने दुहादीनां ण्यन्ते कर्त्तुश्च कर्मणः ।।**

**इति उक्त्वोत्तरार्द्धोपात्तातिरिक्ता द्विकर्मकाः के इति प्रश्ने—**

**नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च ।**
**द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः ।।**

**इत्युक्तम्। तत्र न्यादिग्रहणं तव कृषिवन्मम व्यापारद्वयार्थकधातूपलक्षणम्। एवञ्चेदं सूत्रं व्यर्थम्।**

**भैरवी–** **धातोर्व्यापारद्वयार्थत्वेन कर्त्तुरित्येव सिद्धेऽकथितमिति सूत्रवैयर्थ्यमित्याशयेन शङ्कते–यद्यपीति। तत्रैव लादिसिद्धिरिति। ''प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्'' इत्येव सिद्धेः। ईदृशप्राधान्यस्य। प्रधानीभूतधात्वर्थविशेषणफलाश्रयस्य। नन्वेवं स्वसम्प्रदानकदानानुकूल-**

**व्यापारानुकूलव्यापार एव दण्डधात्वर्थो भविष्यति। तथा च गर्गाणामेव प्राधान्यमिति प्रधानगर्गानुरोधेन शतावृत्तिः स्यादिति समुदाये वाक्यसमाप्तिरित्यस्येदं स्थलं दृष्टान्तत्वेन भाष्ये उपात्तं तद्विरोध इत्यत आह–गर्गाः शतमिति। भाष्यविरोध इति। शतस्यार्थप्राधान्यमादाय तस्य भाष्यस्योपपत्तेः। जिज्ञासाविषयार्थज्ञानानुकूलव्यापारः पृच्छिपर्यायचुदेरर्थ इति प्रधानीभूतव्यापारविशेषणव्यापारस्यार्थ-प्राधान्यमादाय यम्प्रति पृच्छा तस्य प्रतिपादको लकारः सिध्यतीत्याशयेनाह–एवमेवेति। अत एव–व्यापारद्वयार्थत्वेन द्विकर्मकत्वादेव। एतत्पक्षे 'अप्रधाने दुहादीनाम्' इत्यत्राप्राधान्यमनुद्देश्यत्वरूपं बोध्यम्।**

यद्यपि दुहादिधातुओं का व्यापारद्वय अर्थ स्वीकार करने पर 'कर्तुरीप्सिततमं कर्म' शास्त्रद्वारा ही कार्योपपत्ति संभव है, 'अकथितं च' शास्त्रोपदेश निष्प्रयोजन है। यथा—दुह्धातु का एकव्यापार अर्थात् विभागानुकूल-व्यापार मात्र अर्थ स्वीकार करने पर 'विभागानुकूलव्यापार' गोप में रहता है, अथ च गोपनिष्ठव्यापारजन्यविभागरूप फल का आश्रय पयस् होता है, अत एव विभागाश्रय पयस् की 'कर्तुरीप्सिततमं कर्म' सूत्रद्वारा कर्मसञ्ज्ञा होती है। विभागावधि गो की अपादानसञ्ज्ञा होती है। 'गोः सकाशात् पयो दोग्धि' वाक्यघटक गो की अपादानत्वेन अविवक्षापूर्वक कारकत्वेन विवक्षा करने पर 'अकथितं च' सूत्रद्वारा कर्मसञ्ज्ञा होकर 'गां पयो दोग्धि' वाक्योपपत्ति होती है; किन्तु दुह्धातु का व्यापारद्वय अर्थात् विभागानुकूलव्यापारानुकूलव्यापार अर्थ स्वीकार करने पर दुह्धात्वर्थ प्रधानीभूतव्यापार गोपनिष्ठ तज्जन्यविभागानुकूलव्यापाररूप फल गोनिष्ठ (यतो हि गोप जब गोवत्स को गोसमीप छोड़ता है, उसको बाँधकर गोस्तन प्रक्षालन और सहलाने का व्यापार करता है, तब गो तनमनाती है, अर्थात् विभागानुकूलव्यापार करती है)। गोनिष्ठव्यापारजन्यविभागरूप फल का आश्रय पयस् होता है। इस प्रकार विभाग एवं विभागानुकूलव्यापार दोनों फलप्रधानीभूतव्यापारप्रयोज्य होते हैं, अत एव दुह्धात्वर्थ-प्रधानीभूतव्यापारवाचकधातुवाच्य विभाग और विभागानुकूलव्यापाररूप फल के आश्रय क्रमशः पयस् और गो दोनों की 'कर्तुरीप्सिततमं कर्म' द्वारा ही कर्मसञ्ज्ञा संभव है, 'अकथितं च' शास्त्रोपदेश व्यर्थ है।

प्र.— दुहादि का एकव्यापार अर्थस्वीकृतिपक्ष में अविवक्षित अपादान की कर्मसञ्ज्ञा करने पर 'गाम्' गौणकर्म कहलाता था, अत एव कर्मणि

प्रत्ययविवक्षा में गौणकर्म में प्रत्यय होकर 'गौः पयो दुह्यते' प्रयोगोपपत्ति होती थी। दुहादिधातु को व्यापारद्वयार्थक स्वीकार करने पर गो और पयस् दोनों ही प्रधानकर्म सिद्ध होते हैं, ऐसी स्थिति में कर्मणि प्रत्ययविवक्षा में किस कर्म में प्रत्यय का विधान होगा? यह समस्या समापतित होती है।

उ.— दुहादिधातुओं का एकव्यापारार्थस्वीकृतिपक्ष में कर्म में प्रत्ययविधानाकाङ्क्षा होने पर 'गौणे कर्मणि दुह्यादेः' के द्वारा नियमन होता था, अथ च दुहादि के व्यापारद्वयार्थकत्वपक्ष में कर्मणि प्रत्ययविवक्षास्थल में 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्' नियमद्वारा व्यवस्था होती है।

प्र.— 'गां पयो दोग्धि' स्थल में प्रधानकर्म कौन है?

उ.— 'कर्तृनिष्ठप्रधानीभूतव्यापार' में जिस फल का साक्षात् अन्वय होता है, तत्फलाश्रय को 'प्रधानकर्म' कहते हैं। व्यापारद्वयार्थकत्वविवक्षा में दुह्धातु का 'विभागानुकूलव्यापारानुकूलव्यापार' अर्थ है। गोपनिष्ठ दुह्धात्वर्थ प्रधानीभूतव्यापार में विभागानुकूलव्यापाररूप फल का साक्षात् अन्वय होता है, यह फल गोनिष्ठ है, अत एव 'गो' प्रधानकर्म कहलाता है। इस प्रकार दुहादिधातु का व्यापारद्वयार्थ स्वीकार करने पर भी कर्मणि प्रत्यय विवक्षापक्ष में 'गौः पयो दुह्यते' प्रयोगोपपत्ति होती है।

प्र.— दुहादिधातु के एकव्यापारार्थकपक्ष में 'अकथितं च' शास्त्रोपदेश स्वीकार किया जाता है, अत एव 'गर्गेभ्यः शतं दण्डयति राजा' वाक्यघटक गर्ग की सम्प्रदानत्वेन अविवक्षापूर्वक कारकत्वेन विवक्षा करने पर समुपपन्न 'गर्गान् शतं दण्डयति' वाक्य में 'गर्गान्' अप्रधानकर्म और 'शतम्' प्रधानकर्म कहलाता है। अत एव 'शतम्' प्रधानकर्मानुरोध से 'गर्गान्' कर्म की आवृत्ति नहीं होती है। अर्थात् 'प्रत्येक गर्ग को शतात्मिका मुद्रा दण्डस्वरूप में देय नहीं होती है' इति भाष्योक्ति संगत होती है; किन्तु दुहादिधातु के व्यापारद्वयार्थपक्ष में दण्ड्धातु का स्वसम्प्रदानकदानानुकूल-व्यापारानुकूलव्यापार अर्थस्वीकृति करने पर 'गर्गान् और शतम्' दोनों ही प्रधानकर्म सिद्ध होते हैं। इस प्रकार 'शतम्' प्रधानकर्मानुरोधेन 'गर्गान्' कर्म की आवृत्ति नहीं होती है, इस भाष्योक्ति की संगति कैसे होगी?

उ.— प्राधान्य द्विविध होता है—१. आर्थप्राधान्य, २. शाब्दबोधीयप्राधान्य। यथा—'पुत्रेण सहागतः पिताः' वाक्यबोध्य आगमनक्रिया में पिता का

प्राधान्य होने से शाब्दबोध में पिता प्रधान कहलाता है; किन्तु पुत्र यदि नहीं आता, तो पिता का आगमन असंभव था, अतः आर्थिकप्राधान्य पुत्रनिष्ठ है। इसी प्रकार शाब्दिकप्राधान्य यद्यपि गर्गान् कर्मनिष्ठ होने पर भी उद्देश्यत्वरूप आर्थप्राधान्य 'शतम्' कर्म में ही है, यतो हि 'अर्थिनश्च राजानो हिरण्येन भवन्ति, न प्रत्येकं दण्डयन्ति'। अत एव उद्देश्यत्वरूप आर्थिकप्राधान्यपक्ष में भाष्योक्ति की संगति हो जाती है।

इसी प्रकार 'मत्तः त्वं शकारं चोदयसि' वाक्यघटक 'मत्तः' की अपादानत्वेन अविवक्षापूर्वक कारकत्वेन विवक्षा करने पर 'अकथितं च' शास्त्रद्वारा कर्मसञ्ज्ञा होकर 'मां त्वं शकारं चोदयसि' वाक्योपपत्ति होती है। व्यापारद्वयार्थकपक्ष में चोदिधातु का ज्ञानानुकूलव्यापारानुकूलव्यापार अर्थ होता है, प्रधानीभूतव्यापार प्रश्नकर्त्ता में रहता है, प्रश्नकर्तृनिष्ठ-प्रधानीभूत-व्यापारजन्यज्ञानानुकूलव्यापाररूप फल जिससे प्रश्न किया जा रहा है, तन्निष्ठ रहता है, तज्जन्य ज्ञानरूप फल शकारनिष्ठ है। प्रकृतस्थल में एकव्यापारार्थकपक्ष में 'शकारम्' प्रधानकर्म है, तथा व्यापारद्वयार्थकपक्ष में माम् और शकारम् दोनों प्रधानकर्म हैं; किन्तु शाब्दप्राधान्य युष्मदर्थनिष्ठ होने से कर्मणि प्रत्ययविवक्षा में प्रधानकर्म में प्रत्ययविधानपूर्वक 'शकारमसि चोदितः' प्रयोगोपपत्ति होती है।

व्यापारद्वयार्थकपक्ष में कर्मणि प्रत्ययविवक्षा होने पर 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्' नियमद्वारा प्रधानकर्म में प्रत्ययविधान होता है। अथ च एकव्यापारार्थकपक्ष में 'अप्रधाने दुहादीनाम्' नियमद्वारा कर्मप्रत्यय का नियमन होता है। ण्यन्तस्थल में 'ण्यन्ते कर्त्तुश्च कर्मणः' नियमानुसार अण्यन्तावस्था के कर्त्ता से बने कर्म में कर्मप्रत्यय का विधान होता है। दुह्याच् आदि परिगणित धातुओं से अतिरिक्त द्विकर्मक धातुएँ कौन-कौन-सी हैं? इस विवक्षा में कहते हैं कि—नी, वह्, हृ एवं गत्यर्थक धातुओं को द्विकर्मक जानना चाहिए। यथा 'दुह्-याच्-पच्.' परिगणनोक्त धातुघटित कृषिधातु को व्यापारद्वयार्थक समस्त धातुओं का उपलक्षण स्वीकार करते हैं, तथैव 'नीवह्योर्हरतेश्चापि......' परिगणनोक्त न्यादिधातुओं को व्यापारद्वयार्थक समस्त धातुओं का उपलक्षण मानते हैं। व्यापारद्वयार्थक-स्वीकृतिपक्ष में 'कर्त्तुरीप्सिततमं कर्म' शास्त्रद्वारा ही इष्टसिद्धि संभव है, 'अकथितं च' शास्त्रोपदेश नहीं करना चाहिए।

शे.– तथापि–यदा पयोनिष्ठविभागानुकूलव्यापारादिरेव धात्वर्थ-स्तदाऽपादानाद्यविवक्षायामन्येनासिद्धकर्मत्वार्थमिदमावश्यकं तदा चाप्रधाने दुहादीनामित्युक्तेरप्रधाने गवादावेव लादयः। प्रधानकर्मत्वञ्चोक्त-प्रधानकर्मभिन्नकर्मत्वम्, तच्चोक्तार्थे गवादीनामस्त्येव फलानाश्रयत्वात्। गां दोग्धीति–अन्तःस्थितद्रवद्रव्यनिष्ठविभागानुकूलव्यापारो दुहेरर्थः। तत्र गोरपादानत्वविवक्षायामनेन कर्मत्वम्। तद्विवक्षायां पञ्चमी। गोः पयस्यन्वये षष्ठी। द्विकर्मकेषु गवादीनां कर्मत्वाविवक्षया क्रियान्वये षष्ठी न, अनभिधानात्। षष्ठ्यन्तस्य स्वान्वययोग्यनामसमभिव्याहारे तत्रैवान्वयस्योत्सर्गतो व्युत्पत्तेश्च। अत एव 'तण्डुलानामोदनं पचति' इत्यत्र द्व्यर्थश्चैव पचिर्विकारयोगे षष्ठी, इत्येव कर्त्तुरिति सूत्रे भाष्ये उक्तमिति दिक्।

भैरवी– इदमावश्यकमिति–एकव्यापारार्थकत्वे गवादीनामकथितं चेति सूत्रेण येषां कर्मसंज्ञा तेषामुक्तप्राधान्यविशिष्टपय आदिकर्मभिन्नतयाऽप्राधान्यादेव पूर्वोक्ता व्यवस्था साध्येति भावः। ननु गवादीनां क्रियान्वय-विवक्षायामपि द्विकर्मकत्वेनाविवक्षायां षष्ठी प्राप्नोतीत्यत आह–द्विकर्मकेष्विति। द्विकर्मकविषयेष्वित्यर्थः। मूलकारपठितदुहादि-क्रमेणार्थमाह–अन्तःस्थितेत्यादिना। अत्र निष्ठान्तधात्वर्थता-वच्छेदकविभागस्योपलक्षणत्रं तु दुहिधात्वर्थकुक्षिनिविष्टम्। तेन न धात्वर्थसंगृहीतकर्मकत्वेनाकर्मत्वापत्तिरिति बोध्यम्। अनभिधानादिति–अत्र मानं वक्ष्यते–अत एवेत्यादिना। सर्वत्र षष्ठ्यन्तार्थस्य क्रियान्वयविवक्षायां षष्ठ्यभाव इति तु न नियमः, किन्तु क्वचिदेवेत्याशयेनाह–स्वान्वययोग्येति। तेन 'मातुः स्मरति' 'भजे शम्भोश्चरणयोः' इत्यत्र षष्ठीदर्शनेऽपि न क्षतिः। तत्रैव। तन्नामार्थ एव। तदेव मानमाह–अत एवेति–तत्र तदभावादेव। कर्त्तुरिति सूत्रभाष्य इति। 'इह हि तण्डुलानोदनम्पचतीति द्व्यर्थः पचिः। तण्डुलान्पचन्नोदनन्नि-र्वर्त्तयतीति। इहेदानीन्तण्डुलानामोदनम्पचतीति द्व्यर्थश्चैव पचिर्विकारयोगे षष्ठी तण्डुलविकारमोदनन्निर्वर्त्तयति' इत्येवं तत्रोक्तम्, द्व्यर्थः पचिरिति। विक्लेदनोपसर्जने निर्वर्त्तने पचिर्वर्त्तते। तण्डुलान्विक्लेदयन्नो-दनन्निर्वर्त्तयतीत्यर्थः। तत्रोपसर्जनविक्लेदनाक्रियापेक्षन्तण्डुलानां कर्मत्वम्। प्रधानभूतक्रियापेक्षन्तु ओदनस्य। द्व्यर्थश्चैवेति–तण्डुलानां सम्बन्धिनं

**विकारविशेषमोदनं विक्लित्या निर्वर्त्तयतीत्यर्थः। सा च विक्लितिः सामर्थ्यात्तण्डुलानामेव विज्ञायत' इति कैयटः।**

दुह्धातु का व्यापारद्वयार्थकपक्ष में 'विभागानुकूलव्यापारानुकूलव्यापार' अर्थ है। गोपनिष्ठप्रधानीभूतव्यापारजन्यविभागानुकूलव्यापाररूप फल का आश्रय गो है। गोनिष्ठव्यापारजन्यविभागरूप फल का आश्रय पयस् है। विभाग एवं विभागानुकूलव्यापार दोनों ही फल, प्रधानीभूतव्यापारप्रयोज्य हैं और प्रधानीभूतव्यापारवाचकधातुवाच्य भी हैं, अत एव विभागाश्रय पयस् की एवं विभागानुकूलव्यापाराश्रय गो की 'कर्त्तुरीप्सिततमं कर्म' सूत्रद्वारा कर्मसञ्ज्ञा संभव है। एकव्यापारार्थकपक्ष में दुह्धातु का विभागानुकूलव्यापार अर्थ होता है। इस पक्ष में 'गो: सकाशात् पयो दोग्धि' वाक्यघटक गो की अपादानत्वेन अविवक्षापूर्वक कारकत्वेन विवक्षा करने पर 'अकथितं च' सूत्रद्वारा कर्मसंज्ञा होती है। एकव्यापारार्थकपक्ष में कर्मणि प्रत्ययविवक्षा करने पर अप्रधानकर्म में प्रत्यय होता है। धात्वर्थप्रधानीभूतव्यापार में साक्षाद् विशेषणीभूतफलाश्रय से भिन्न कर्म को 'अप्रधानकर्म' कहते हैं। विभागानुकूलव्यापारार्थकपक्ष में धात्वर्थप्रधानीभूतव्यापार में साक्षाद् विशेषणीभूत फल विभाग है, अत एव विभागाश्रय पयस् प्रधानीभूतकर्म कहलाता है और तद्भिन्न 'गाम्' अप्रधानकर्म कहलाता है। 'अकथितं च' शास्त्रोपदेशस्वीकृतिपक्ष में 'गो: सकाशात् पयो दोग्धि' वाक्यघटक दुह्धातु का अन्त:स्थित जो द्रवद्रव्य पयस् तन्निष्ठ जो विभाग तदनुकूलव्यापार अर्थ होता है। प्रकृतस्थल में 'गो' की अपादानत्वेन अविवक्षापूर्वक कारकत्वेन विवक्षा करने पर कर्मसंज्ञा होकर 'गां पयो दोग्धि' वाक्य एवं अपादानत्वेन विवक्षा करने पर 'गो: पयो दोग्धि' वाक्य तथा सम्बन्धत्वेन विवक्षा करने पर 'गो: पयो दोग्धि' वाक्य अर्थात् गो की पयस् के साथ सम्बन्धत्वेन विवक्षा करने पर षष्ठीविभक्ति होती है। प्रकृतप्रसंग में किसी का कथन है कि गो की दोहनक्रिया के साथ सम्बन्धत्वेन विवक्षा करने पर भी षष्ठीविभक्ति संभव है। उसका कथन सर्वथा असंगत है, यतो हि क्रियान्वयी को क्रियाविशेषण कहते हैं, तथा "क्रियाविशेषणानां कर्मत्वं क्लीबत्वम् एकत्वं च" नियमानुसार द्वितीयाविभक्ति होती है, षष्ठीविभक्ति नहीं। "षष्ठ्यन्तपदोपस्थाप्य अर्थ का क्रिया और द्रव्य उभयत्र अन्वयसंभावना होने पर द्रव्य में ही अन्वय होता है, क्रिया

में नहीं'' यह व्युत्पत्ति भी है। 'षष्ठ्यन्तपदोपस्थाप्य अर्थ का स्वसमभिव्याहृत स्वान्वययोग्य द्रव्य में ही अन्वय होता है' इसीलिये 'तण्डुलानामोदनं पचति' वाक्यघटक तण्डुलानां पदोपस्थाप्य अर्थ का विक्लित्त्याश्रय ओदन में अन्वय है, पाकक्रिया में नहीं। इस बात को भाष्यकार ने 'कर्त्तुरीप्सिततमं कर्म' सूत्र पर कण्ठरव से स्वीकार करते हुए कहा है, कि—विक्लित्ति और विक्लित्त्यनुकूलव्यापार पच् धातु के दो अर्थ हैं। 'तण्डुलानामोदनं पचति' में विक्लित्त्याश्रय के योग में षष्ठी होती है।

**'बलिं याचते वसुधाम्' इति कौमुदी।**

**शे.– बलिं याचत इति–यदा परस्वत्वनिवृत्तिस्वस्वत्वोत्पत्त्युभयानुकूलो व्यापारो याचेरर्थः। स्वत्वे बलेर्निरूपकतयाऽन्वयस्तदाऽनेन कर्मत्वम्। पूर्वविषयस्य कस्याप्यभावात्। 'न हि याचनादेवाऽपायो भवति, याचितो यदि ददाति तदाऽपायेन युज्यते' इति भाष्योक्तेः। 'असङ्कीर्तितपर्यायाकथितग्रहणे 'गां दोग्धि, गौर्दोग्धि' इति च, याचिपृच्छिभिक्षयोगे कर्मसंज्ञैवेत्येषा व्यवस्था' इति च सिद्धान्ते कैयटोक्तेश्च। व्यापारद्वयार्थत्वे तु कर्त्तुरिति कर्मत्वं बोध्यम्। वसुधायाः स्वामित्वसम्बन्धात् कर्मयुक्त्वम्।**

**भैरवी– उभयानुकूलो व्यापारः। दिदापयिषाव्यञ्जको दीयतामित्याकारक-शब्दोच्चारणरूपः। कर्मसंज्ञैवेत्येषेति। एतेन याचिपृच्छिभिक्षियोगे पूर्वविधेः सर्वथाऽप्राप्तिः सूचिता। स्वामित्वसम्बन्धादिति–वसुधानिष्ठस्वत्वनिरूपितस्वामित्वात्मकसम्बन्धादित्यर्थः।**

बलि से वसुधा को माँग रहा है। याच्धातु का परस्वत्वनिवृत्ति-पूर्वकस्वस्वत्वोत्पत्त्यनुकूलव्यापार अर्थ है, स्वत्व वसुधा में रहता है, अथ च स्वत्वनिरूपित-स्वामित्व बलि में है। अर्थात् वसुधानिष्ठ स्वत्व-निरूपितस्वामित्व बलि में है। वसुधाम् कर्म है। वसुधा के साथ बलि का स्वस्वामिभावसम्बन्ध होने से प्रकृतस्थल में सम्बन्धसामान्य में षष्ठी प्राप्त है। इस प्रकार प्रकृतस्थल में अप्राप्तिपूर्विका अविवक्षा सिद्ध होती है।

प्र.— बलि से वसुधा का विभाग हो रहा है, अतः विभागावधि बलि अपादानसञ्ज्ञक होने से 'प्राप्तिपूर्विका अविवक्षा' का प्रकृत उदाहरण है, 'अप्राप्तिपूर्विका अविवक्षा' का नहीं?

उ.— याच् धातु का माँगना अर्थ है, माँगने मात्र से तो वसुधा की बलि से पृथक्कृति होती नहीं है, बलि से वसुधा का विभाग तो दानोत्तर होगा। विभाग प्रकृतधात्वर्थ भी नहीं है, अत एव प्रकृतस्थल 'अप्राप्तिपूर्विका अविवक्षा' का ही उदाहरण है, 'प्राप्तिपूर्विका अविवक्षा' का नहीं।

'अकथितं च' शास्त्रोपदिष्ट अकथितशब्द का असंकीर्तित अर्थात् अविवक्षित अर्थ है, अत एव 'गोः सकाशात् पयो दोग्धि' वाक्यघटक अपादान की अविवक्षापूर्वक कारकत्वेन विवक्षा करने पर 'अकथितं च' सूत्रद्वारा कर्मसंज्ञा होकर 'गां पयो दोग्धि' अथ च गो की अपादानत्वेन विवक्षा करने पर 'गोः पयो दोग्धि' प्रयोगोपपत्ति होती है।

व्यापारद्वयार्थकपक्ष में याच्-धातु का परस्वत्वनिवृत्तिपूर्वक स्वस्वत्वोत्पत्त्यनुकूलव्यापारानुकूलव्यापार अर्थ है। याच्धात्वर्थ प्रधानीभूत-व्यापार याचकनिष्ठ है, और तज्जन्य 'मैं देता हूँ' अर्थात् याचक-स्वत्वोत्पत्त्यनुकूलव्यापार का आश्रय बलि है और याचकस्वत्वोत्पत्तिरूप फलाश्रय वसुधा है, इस प्रकार बलि और वसुधा दोनों की 'कर्त्तुरीप्सिततमं कर्म' सूत्रद्वारा ही कर्मसंज्ञा की सिद्धि होती है।

**'अविनीतं विनयं याचते' इति कौमुदी।**

**शे.– याचेः स्वीकारानुकूलव्यापारोऽर्थः। स्वीकारश्च ''इदमवश्यं करिष्यामि'' इति शब्दप्रयोगजनको ज्ञानविशेषः। विनयेन च तद्विषयज्ञानवत्त्वं सम्बन्धः।**

**भैरवी– अस्य अत्रेत्यर्थः।**

अविनीत विनय को पहले से ही जानता है। यथा—रावण में विनय तो पहले से ही थी, अत एव शङ्कर जी को प्रसन्न करके अभीष्ट वर की प्राप्ति की थी रावण ने। श्रीराम के साथ ज्ञानपूर्वक अविनय = उद्दण्डता कर रहा था। याच्-धातु का प्रकृतस्थल में स्वीकारानुकूलव्यापार अर्थ है। अविनीत विनय पहले से ही जानता है, अतः 'विनयम्' कर्म के साथ अविनीत का स्वविषयकज्ञानवत्त्व सम्बन्ध है। 'अविनीताय' इति तादर्थ्यचतुर्थी की अविवक्षापूर्वक कारकत्वेन विवक्षा करने पर कर्मसंज्ञा होकर 'अविनीतं विनयं याचते' प्रयोगोपपत्ति होती है। इति शेखरकारः। तत्त्वबोधिनीकार अविनीत को मुख्यकर्म मानते हैं और विनयाय में तादर्थ्ये चतुर्थी है, इस प्रकार तादर्थ्ये चतुर्थी की अविवक्षापूर्वक कारकत्वेन विवक्षा

करने पर विनय की 'अकथितं च' शास्त्रद्वारा कर्मसंज्ञा होती है। अर्थात् शेखरकार 'विनय' को और तत्त्वबोधिनीकार अविनीत को प्रधानकर्म कहते हैं। याच्-धात्वर्थ-स्वीकारानुकूलव्यापारघटक स्वीकाररूप फल का फलतावच्छेदक सम्बन्ध 'विषयता' को स्वीकार करने पर 'विनय' मुख्य कर्म कहलाता है, अथ च फलतावच्छेदकसम्बन्ध 'समवाय' को स्वीकार करने पर 'अविनीत' मुख्यकर्म कहलाता है, इति भावः।

**'तण्डुलान् ओदनं पचति' इति कौमुदी।**

**शे.– तण्डुलान् विक्लेदयन्नोदनं निर्वर्त्तयतीत्यर्थस्य कर्त्तुरिति सूत्रस्थभाष्यकैयटसम्मतत्वेन कर्त्तुरित्येव कर्मत्वसिद्धेरस्यैतदुदाहरणत्वं चिन्त्यम्। एवं स्वसम्प्रदानकदानानुकूलव्यापारानुकूलशासनरूप-व्यापारार्थदण्ड्यादियोगेऽपि तेनैव सिद्धम्। एवं व्यापारद्वयार्थत्वेन– सति प्रयोगे बहूनां द्विकर्मकत्वं बोध्यम्।**

**भैरवी– तेनैवेति-कर्त्तुरित्यनेनैवेत्यर्थः। एवमिति-पूर्ववत्।।**

'तण्डुलानाम् ओदनं पचति' प्रकृतस्थल में अप्राप्तिपूर्विका अविवक्षा है, तण्डुल की सम्बन्धरूप से अविवक्षापूर्वक कारकत्वेन विवक्षा करने पर 'अकथितं च' शास्त्रद्वारा कर्मसंज्ञा होकर 'तण्डुलानोदनं पचति' प्रयोगोपपत्ति होती है। यह प्रक्रिया पच्धातु को एकव्यापारार्थक अर्थात् विक्लित्त्यनुकूलव्यापार अर्थस्वीकृतिपक्ष में संगत होती है; किन्तु 'कर्त्तुरीप्सित.' सूत्र के कैयटानुसार पच्धातु का विक्लित्ति और निर्वृत्ति उभयफलानुकूलव्यापार अर्थ है। तण्डुल में विक्लेदन होने पर ही ओदन का निर्वर्त्तन होता है, अत एव विक्लेदनरूप फलाश्रय तण्डुल की और निर्वर्त्तन फलाश्रय ओदन की 'कर्त्तुरीप्सिततमं कर्म' सूत्रद्वारा ही कर्मसञ्ज्ञा होकर 'तण्डुलान् ओदनं पचति' प्रयोगोपपत्ति होती है। 'अकथितं च' सूत्र का 'तण्डुलान्नोदनम्पचत्ति' उदाहरण देना चिन्त्य है। इसी प्रकार 'गर्गान् शतं दण्डयति' वाक्यघटक 'दण्ड्धातु का स्वसम्प्रदानकदानानुकूल-व्यापारानुकूलशासनव्यापार' अर्थ है, अत एव दानफलाश्रय शत की और दानानुकूलव्यापाररुपफलाश्रय गर्ग की 'कर्त्तुरीप्सित॰' शास्त्रद्वारा कर्मसंज्ञा संभव है। तथैव व्यापारद्वयार्थक समस्तधातुघटित वाक्यों की 'कर्त्तुरीप्सित॰' शास्त्रद्वारा उपपत्ति संभव है, 'अकथितं च' शास्त्रोपदेश व्यर्थ है।

**'व्रजमवरुणद्धि गाम्' इति कौमुदी।**

शे.– **व्रजमिति–निर्गमप्रतिबन्धपूर्वकयत्किञ्चिदधिकरणकचिरस्थित्यनुकूलव्यापारो रुधेरर्थः। व्रजे गौस्तिष्ठति, तत्र तां निर्गमप्रतिबन्धपूर्वकं चिरं स्थापयतीति सम्प्रत्ययात्। अधिकरणत्वाविवक्षायामनेन कर्मत्वम्। व्यापारद्वयार्थत्वे कर्त्तुरिति कर्मत्वम्।**

रुध्धातु का निर्गमप्रतिबन्धपूर्वकयत्किञ्चिदधिकरणकचिरस्थित्यनुकूलव्यापार अर्थ है। 'व्रजे गाम् अवरुणद्धि' अर्थात् गाय को अन्यदेश में जाने से रोकते हुए, व्रज में गाय की चिरस्थिति करता है। प्रकृतस्थल में व्रजनिष्ठ अधिकरणत्व की अविवक्षापूर्वक कारकत्वेन विवक्षा करने पर 'अकथितं च' शास्त्रद्वारा व्रज की कर्मसंज्ञा होकर 'व्रजमवरुणद्धि' प्रयोगोपपत्ति होती है। रुध्धातु को एकव्यापारार्थक अर्थात् यत्किञ्चिदधिकरणक-स्थित्यनुकूलव्यापारार्थक स्वीकार करने पर व्रज गौणकर्म है, अथ च व्यापारद्वयार्थकपक्ष में यत्किञ्चिदधिकरणक-स्थित्यनुकूलव्यापारानुकूल-व्यापारार्थकपक्ष में यत्किञ्चिदधिकरणकस्थित्यनुकूलव्यापाररूप फलाश्रय गौ प्रधानकर्म है। अत: 'अकथितं च' सूत्रोपदेशपक्ष में 'अप्रधाने दुहादीनाम्' नियमानुसार अप्रधानकर्म में (कर्मणि प्रत्ययविवक्षा में व्रजरूप गौणकर्म में) प्रत्यय का विधान होगा। व्यापारद्वयार्थकपक्ष में 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्' नियमानुसार गोरूप प्रधानकर्म में प्रत्यय होगा। इस प्रकार प्रत्याख्यान, अप्रत्याख्यान में फलभेद है। अथवा 'रथो गच्छति' वाक्यघटक अचेतन रथ में यथा व्यापार की वृत्तिता स्वीकार करते हैं, तथैव स्थित्यनुकूलव्यापार को व्रजनिष्ठ स्वीकार करने पर 'अकथितं च' सूत्रोपदेशपक्ष में भी व्रजरूप गौणकर्म में, अथ च व्यापारद्वयार्थक-पक्ष में भी व्रजरूप प्रधानकर्म में ही प्रत्ययविधान होने से फलभेद नहीं है।

**'माणवकं पन्थानं पृच्छति'–इति कौमुदी।**

शे.– **जिज्ञासाविषयार्थज्ञानानुकूलः 'केन पथा गन्तव्यम्' इत्यभिलाषादिरूपो व्यापारः पृच्छेरर्थः। ज्ञानविषयत्वेन यथा कर्मत्वम्। माणवकेन च तज्ज्ञानाश्रयत्वं सम्बन्धः। अपादानत्वं तु नात्र। 'न प्रश्नादेवापायो भवति, पृष्टोऽसौ यदाचष्टे तदाऽपायेन युज्यते' इति भाष्योक्तेः। सम्प्रदानत्वमपि न। कर्मसम्बन्धवत्त्वेनेच्छाविषयत्वाभावात्। व्यापारद्वयार्थत्वे तु कर्त्तुरिति कर्मत्वम्।**

भैरवी– **न प्रश्नादेवापाय इति। अत्रापायो बौद्धः।**

जिज्ञासा का विषय जो पन्थादिरूप अर्थ तद्विषयकज्ञानानुकूल 'किस रास्ते से जावें'? इत्याकारक जो अभिलाप = कथनरूपव्यापार पृच्छ्धातु का अर्थ है। ज्ञान का विषय पथ है, माणवक का 'पन्थानम्' कर्म के साथ पथविषयकज्ञानविषयत्व सम्बन्ध है। अर्थात् 'जिससे मैं जिज्ञासा कर रहा हूँ, वह पथविषयक ज्ञानवान् है' ऐसा ज्ञान माणवक में है। पृच्छा के उपरान्त पन्था का कल्पित विभाग होगा। प्रश्नमात्र से तो कल्पितविभाग भी नहीं होता है, अत एव अपादानत्व भी नहीं है। भाष्य में भी कहा है कि प्रश्नमात्र से पथ का विभाग नहीं है, पृच्छा के उपरान्त मार्गविषयकनिरूपण करने पर कल्पितविभाग होता है। माणवक को सम्प्रदान भी नहीं कह सकते, यतो हि कर्म के साथ सम्बन्ध करने की इच्छा का विषय माणवक नहीं है। व्यापारद्वयार्थक अर्थात् पृच्छ्धातु का 'जिज्ञासाविषयार्थज्ञानानुकूलव्यापारानुकूलव्यापार' अर्थ स्वीकार करने पर जिज्ञासाविषयाश्रय पथ की, अथ च जिज्ञासाविषयार्थज्ञानानुकूलव्यापाराश्रय माणवक की 'कर्त्तुरीप्सिततमं कर्म' सूत्रद्वारा कर्मसंज्ञा का विधान होता है।

**वृक्षमवचिनोति फलानि। इति कौमुदी।।**

**शे.– वृक्षमिति–विभागपूर्वकादाने चिञ्। वृक्षात् फलान्यादत्ते इत्यर्थात्। अपादानत्वाविवक्षायामनेन कर्मत्वम्।**

**भैरवी– विभागजन्यपात्रस्थापनानुकूलव्यापार इत्यर्थः।**

विभागपूर्वक आदान, पात्रस्थापनानुकूलव्यापार चिञ्धातु का अर्थ है। विभागपूर्वकपात्रस्थापनानुकूलव्यापार = फलतोड़ कर पात्रस्थापन रूप व्यापार कर्त्ता में है। विभागरूप फल के आश्रय आम्रादिफल हैं और विभागावधि वृक्ष है, अत एव प्रकृतस्थल में अपादानत्व की अविवक्षापूर्वक कारकत्वेन विवक्षा करने पर वृक्ष की 'अकथितं च' सूत्रद्वारा कर्मसञ्ज्ञा होकर 'वृक्षमवचिनोति फलानि' वाक्योपपत्ति होती है।

**माणवकं धर्मं ब्रूते शास्ति वा।।इति कौमुदी।।**

**शे.– ज्ञानानुकूलः शब्दप्रयोगरूपो व्यापारो ब्रूञर्थः। प्रवृत्तिपर्यवसायी स शासेः। स च 'धर्मं कुरु' इत्यादिविधिघटितोपदेशरूपः, विषयता च फलतावच्छेदकः सम्बन्धः। वचनादिकर्मणा धर्मेण माणवकस्याभि-**

**प्रेयमाणत्वात्तस्य सम्प्रदानत्वम्। तदविवक्षायाञ्चानेन कर्मत्वम्। अत्र कर्त्तृव्यापारानन्तरं तद् ज्ञानाश्रयत्वरूपो माणवकस्य धर्मेण सम्बन्धः।**

'शास्त्र में ऐसा लिखा है' इत्याकारक ज्ञान के अनुकूल व्यापार ब्रूञ् धातु का अर्थ है। अथ च 'शास्त्रोपदिष्ट धर्माचरण तुम करो' इत्याकारक प्रवृत्तिपर्यवसायी ज्ञानानुकूलव्यापार शासिधातु का अर्थ है। शासन का विषय धर्म है, अर्थात् विषयतासम्बन्ध से शासन धर्म में रहता है। इस प्रकार फलतावच्छेदक सम्बन्ध (फल जिस सम्बन्ध से रहता है) विषयतासिद्ध होता है। धर्म माणवकार्थ है, अतः माणवक सम्प्रदान है, अथ च माणवक का 'धर्मम्' कर्म के साथ ज्ञानवत्व सम्बन्ध है, यह 'धर्मं कुरु' इत्याकारकोपदेश के अनन्तर होता है। इस प्रकार कर्मयुक् सम्प्रदान की अविवक्षापूर्वक कारकत्वेन विवक्षा करने पर 'अकथितं च' शास्त्रद्वारा माणवक की कर्मसंज्ञा होकर 'माणवकं धर्मं ब्रूते शास्ति वा' प्रयोगोपपत्ति होती है।

**शे.–** **नयतेः संयोगानुकूलव्यापारोऽर्थः। स एव स्कन्धग्रहणादिपूर्वो वहेरर्थः। गत्युनुकूलव्यापारविशेषः कृषेः। बलाद् ग्रहणपूर्वकं देशान्तरप्रापणं हरतेः। एषु 'कर्त्तुः' (पा.सू. १.४.४९) इति कर्मत्वं बोध्यम्। एवञ्च भाष्यानुक्तानामत्र ग्रहणं प्राचामनुरोधेनेति तत्त्वम्। भाष्योक्ता हि 'दुहियाचिरुधिप्रच्छिभिक्षिचिञ्ब्रुविशासयः'।**

**भैरवी–** **भाष्योक्ता हि–तदुक्तम्भाष्ये। किमुदाहरणम्। 'दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ। ब्रुविशासिगुणेन च यत्सचते तदकीर्त्तितमाचरितं कविना' इति। उपयोगनिमित्तम्–उपयुज्यत इत्युपयोगः। पयःफलादि तस्य निमित्तं गवादि। अपूर्वविधौ-अत्र पूर्वग्रहणमन्योपलक्षणम्। विध्यन्तरविषयत्वाविवक्षायाम्। ब्रुविशास्योर्गुणः प्रधानं कर्म। तेन सचते सम्बध्यत इत्यर्थः।**

संयोगानुकूलव्यापार नीधातु का अर्थ है। कन्धे इत्यादि पर लादकर ले जाना, अर्थात् स्कन्धग्रहणादिपूर्वकसंयोगानुकूलव्यापार वह्धातु का अर्थ है। घसीटते हुए ले जाना, अर्थात् गत्यनुकूलव्यापारविशेष कृष्-धातु का अर्थ है। बलपूर्वक ले जाना, अर्थात् बलाद् ग्रहणपूर्वकदेशान्तरप्रापणानुकूलव्यापार हृधातु का अर्थ है। प्रकृतस्थल में संयोगानुकूलव्यापारानुकूलव्यापार नीधातु का, स्कन्धग्रहणादिपूर्वकसंयोगानुकूलव्यापारानुकूलव्यापार वह्धातु

का, गत्यनुकूलव्यापारानुकूलव्यापारविशेष कृष्धातु का, बलाद्-ग्रहणपूर्वकदेशान्तरप्रापणानुकूलव्यापारानुकूलव्यापार हृधातु का अर्थ स्वीकार करने से इन सब धातुओं के योग में 'कर्तुरीप्सिततमं कर्म' शास्त्रद्वारा कर्मसंज्ञा हो जायेगी, ये 'अकथितं च' सूत्र के उदाहरण नहीं हैं। इनका परिगणन प्राचीनवैयाकरणानुरोध से किया गया है, यतो हि भाष्य में दुहियाचिरुधिप्रच्छिभिक्षिचिञ्ब्रुविशासि' धातुओं का ही परिगणन है।

**अर्थनिबन्धनेयं संज्ञा। इति कौमुदी।**

**शे.–** **इदमपि कैयटानुरोधेन। वस्तुतस्तु येषामेतदर्थानां द्विकर्मकत्वमिष्टं तेषां व्यापारद्वयार्थत्वेन कर्तुरित्येव सिद्धम्। अन्यथा 'आख्यातोपयोगे' इति सूत्रभाष्योक्तपरिगणनभङ्गापत्तिः। किञ्च भाष्ये भिक्षिग्रहणवैयर्थ्यापत्तिः। उभयार्थकयाचिग्रहणेनैव सिद्धेरित्यन्ये।**

**भैरवी– इत्यन्य इति–भाष्यतत्त्वविदः।**

प्र.— अर्थनिबन्धनसंज्ञा अर्थात् परिगणितधात्वर्थक अन्य धातुओं के योग में भी कर्मसंज्ञा होती है, यह स्वीकार करने पर परिगणन करना व्यर्थ है?

उ.— अर्थनिबन्धनसंज्ञा स्वीकार करने पर परिगणन व्यर्थ होकर एकदेशानुमोदनद्वारा अर्थनिबन्धनसंज्ञा का ही बोधक सिद्ध होता है। अर्थात् परिगणनातिरिक्त परिगणितधात्वर्थक अन्य धातुओं के योग में भी 'अकथितं च' शास्त्रद्वारा कर्मसंज्ञा होती है।

प्र.— परिगणन को एकदेशानुमोदनपूर्वक परिगणनातिरिक्त परिगणितधात्वर्थक धातुओं के योग में 'अकथितं च' सूत्रद्वारा कर्मसंज्ञा स्वीकार करने पर १. 'आख्यातोपयोगे' शास्त्रीय भाष्योक्त परिगणन व्यर्थ होगा। २. याच् और भिक्ष् दोनों ही धातुओं का समान अर्थ है, इसलिये अन्यतरधातु का ही परिगणन करने मात्र से इष्टसिद्धि संभव थी, उभयधातूपदेश व्यर्थ होगा, अत एव 'अर्थनिबन्धनेयं संज्ञा' कथन कैयटानुरोध से जानना चाहिए। वस्तुतस्तु द्विकर्मकधातुस्थल में व्यापारद्वयार्थकस्वीकृतिपुरःसर 'कर्तुरीप्सित॰' शास्त्रद्वारा इष्टसिद्धि स्वीकार करनी चाहिए।

**'अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम्'। इति कौमुदी।**

**शे.–** **अकर्मकधातुभिरिति–तेषां स्वकरणकव्यापने वृत्त्या व्याप्तिरूपफलाश्रयत्वेन कर्तुरिति कर्मत्वम्। 'मासमास्ते' इत्यादेर्मासमासनेन व्याप्नोतीत्यादिक्रमेणार्थ**

इति भावः। यत्त्विदमेव कर्मसंज्ञाविधायकमिति चेन्न। भाष्ये तादृशवचनानुपलम्भात्। 'अकथितञ्च' (पा.सू. १.४.५१) इति सूत्रे अकर्मकप्रकृतिकण्यन्तानां कथं द्विकर्मकत्वमिति शङ्कायां 'कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणां देशश्च' इति भाष्ये उक्तम्। तच्च न विधायकं हि शब्दघटितत्वात्। किञ्च 'कालाध्वनोः' (पा.सू. २.३.५) इति सूत्रे 'कालाध्वानौ कर्मवदिति वक्तव्यम्' इति वार्त्तिकप्रत्याख्याने 'प्राकृतमेवैतत्कर्म यथा कटं करोति' इत्युक्तम्। अस्य वचनत्वे 'उक्तं वा, प्राकृतं वा' इति वदेत्। तस्मादुक्तरीत्या कालादीनां तद्योगे कर्मतया द्विकर्मत्वमित्येव तत्तात्पर्यम्। एवं 'समां समां विजायते' (पा.सू. ५.२.१२) इति सूत्रे 'समायां समायां विजायते' इति विग्रहकथनपरं भाष्यं सङ्गच्छते। अन्यथा अनेन द्वितीया एव तत्र साधुत्वेन तदसङ्गतिः स्पष्टैव। अत एवोक्तभाष्यार्थानुवादिका हरेः कारिका—

कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः ।
सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते ।।

इति। सकर्मकविषयेऽप्यनेन प्रकारेण कालादिकर्मणा सकर्मकत्वं, तुल्यन्यायात्। तेन 'मासमोदनं पचति' इति भवति। तेन कालादिकर्म अप्रधानम्, द्रव्यकर्म तु प्रधानं कालस्याधारत्वेन द्रव्यद्वारा क्रियासम्बन्धात्। किञ्च कठिनवाक्यस्य महापरिमाणस्य बहुसंख्यस्य च चिरेण पाकोऽन्यस्याचिरेणेति द्रव्यधर्मं पर्यालोच्य क्रियासु कालयोगः। स च बहिरङ्गः। अपि च साधनसम्बन्धे जाते क्रियायाः परिच्छेदक-बाह्यकालाकाङ्क्षेति स बहिरङ्गः। अकर्मकव्यवहारस्तु धातूनां द्रव्यकर्माभावनिमित्त एव, अत्र बीजं वक्ष्यते। तदुक्तम्—

अतस्तैः कर्मभिर्युक्तो धातुर्द्रव्यैरकर्मकः।
लस्य कर्मणि भावे च निमित्तत्वाय कल्पते।।इति।

भैरवी– तेषाम्–अकर्मकधातूनाम्। स्वम्–अकर्मकधात्वर्थत्वेन प्रसिद्धोऽर्थः। स्वकरणकसव्यापनेत्यस्य स्वकरणकव्याप्त्यनुकूलव्यापार इत्यर्थः। मूलकाराभिप्रेतमस्य कर्मसंज्ञाविधायकत्वभ्रमं खण्डयितुमाह–यत्त्विति। तादृशवचनेति–कर्मसंज्ञाविधायकवचनेत्यर्थः। ननु 'कालभावाध्वगन्तव्या'

इति वचनमेव तादृशमस्तीत्यत आह–अकथितमिति। हिशब्दघटितत्वादिति–हिशब्दस्य प्रसिद्धार्थकत्वं स्वभावसिद्धम्। हिशब्दघटितेन वाक्येन भूतानुवाद एव क्रियत इति भावः। ननु हिशब्दो वाक्यालङ्कारे। इदञ्च वार्त्तिकं विधायकमेवेत्यत आह–किञ्चेति। प्राकृतमेवैतदिति–अत्र प्रशब्द आदित्वबोधकः। तेन प्रकृतशब्द आदिकृतत्वबोधकस्तस्मादुत्सर्गसूत्रलाभः। प्रकृतशब्दाच्च तस्येदमित्यण्। उत्सर्गसूत्रबोधितमित्यर्थः। अत एव अस्यापूर्ववचनत्वाभावादेव। अत एव–उक्तभाष्यस्य स्वोक्तार्थकत्वादेव। अकर्मकधातूनामिव सकर्मकाणामपि कालादिकर्मत्वमाह–सकर्मकविषय इति। एतेन व्याख्यानेनापि पूर्वोक्तवचनस्यापूर्वविधायकत्वाभावो ध्वनितः। तस्यापूर्वत्वे तस्य सकर्मकेष्वप्रवृत्त्या सकर्मकाणांद्विकर्मकत्वन्न स्यादिति भावः। ननु सकर्मकधातूनां कालादिकर्मणां द्विकर्मकत्वे तयोः कर्मणोर्गुणप्रधानभावः कथमत आह–तत्रेति। तत्र तयोर्मध्ये। पर्यालोच्येति। अस्य क्रियमाणास्विति शेषः। अस्य क्रियास्वित्यत्र सम्बन्धः। तेन क्त उपपत्तिः। प्रकारान्तरेणापि कालस्य बहिरङ्गत्वमित्याह–अपि चेति।

नन्वकर्मकत्वव्यवहारो धातूनां कथमुपपद्यतामत आह–अकर्मकव्यवहार इति। तदुक्तमिति–हरिणेति शेषः। तैः कर्मभिः। कालादिकर्मभिः। द्रव्यैः द्रव्यकर्मभिः। अयुक्त इति शेषः। धातुरित्यन्वयः। अकर्मकपदार्थघटकं कर्म द्रव्यात्मकमेव विवक्षितमिति व्यवहारद्वययोगात् सकर्मकत्वप्रयुक्तकर्मणि यो लकारो भावे वा तन्निमित्तत्वाय कल्पते। 'आस्यते मासः'। 'मासमास्यते देवत्तेन' इति यथा। अत्र द्रव्यपदं कालादिभिन्नद्रव्यसामान्यपरम्। तेन कालादेरपि लिङ्गसंख्यान्वयित्व-रूपद्रव्यत्वसत्त्वेऽपि न क्षतिः।

स्वकरणकव्यापन अर्थात् स्वकरणकव्याप्त्यनुकूलव्यापार अर्थ में अकर्मकधातुओं की शक्ति है। यथा 'कुरुषु आस्ते देवदत्तः' स्थल में देवदत्त अपनी आसनक्रिया से कुरु को व्याप्त कर रहा है। स्वः आस्धात्वर्थ-क्रिया तत्-करणिका जो व्याप्ति उसका अधिकरण है कुरुदेश, तदनुकूल स्थितिरूप व्यापार, स्थितिकर्त्ता देवदत्त में है। इसी प्रकार शीङ्धातु का स्वापकरणकव्यात्यनुकूल व्यापार अर्थ है, तथा च व्याप्तिरूप फलाश्रय कुरु की 'कर्त्तुरीप्सिततमं कर्म' सूत्रद्वारा कर्मसंज्ञा होकर द्वितीयाविधानपूर्वक 'कुरून् स्वपिति' इत्यादि प्रयोगोपपत्ति संभव है। 'अकर्मकधातुभिर्योगेति' वार्त्तिक अनुवादिका है।

प्रकृतस्थल में मतद्वय हैं—

१. अकर्मकधातुओं का स्वकरणकव्याप्त्यनुकूलव्यापार अर्थ नहीं है। इस पक्ष में अकर्मकधात्वर्थ शयनादिक्रिया का मासादिकाल अधिकरण होता है, तथा च 'मासे शेते' इत्यादिस्थल में 'अकर्मकधातुभिर्योगे' वार्त्तिकद्वारा कर्मसञ्ज्ञा का विधान होता है, अर्थात् वार्त्तिक स्वातन्त्र्येण विधायक है।

२. भाष्य में 'अकर्मकधातुभिर्योगे देशः कालो गन्तव्योऽध्वा कर्मसंज्ञक इति वाच्यम्' इत्येतादृश वार्त्तिकोपदेश उपलब्ध नहीं है, अर्थात् अकर्मकधातुओं का स्वकरणकव्याप्त्यनुकूलव्यापारार्थस्वीकृतिपूर्वक 'कर्त्तुरीप्सित०' शास्त्रसिद्ध कर्मसंज्ञा की अनुवादिका है, 'अकर्मकधातुभिर्योगे' वार्त्तिक को स्वातन्त्र्येण विधायक स्वीकार करने पर 'मासे शेते' प्रयोगोपपत्ति असम्भव है। अकर्मकधातुओं की स्वकरणकव्याप्ति अर्थ में वृत्ति स्वीकार करने से देवदत्तवृत्ति आसनव्यापारप्रयोज्य व्याप्तिरूप फलाश्रय मास की 'कर्त्तुरीप्सिततमं कर्म' शास्त्र से कर्मसंज्ञा, तत्प्रयुक्त द्वितीया का विधान होकर 'मासमास्ते' प्रयोगोपपत्ति सम्भव है। अर्थात् अकर्मकधातुओं की स्वकरणकव्याप्ति अर्थ में वृत्ति स्वीकार करने से देश-काल-भाव और गन्तव्य अध्वा की 'कर्त्तुरीप्सिततमं कर्म' सूत्रसिद्ध कर्मसंज्ञा का अनुवादक मात्र है, 'अकर्मकधातुभिर्योगे देशःकालः गान्तव्योऽध्वा कर्मसंज्ञक इति वाच्यम्' वार्त्तिक। अकर्मकधातुभिरिति वार्त्तिक स्वातन्त्र्येण विधायक नहीं है, इसमें 'अकथितं च' सूत्रभाष्य भी प्रमाण है। 'देवदत्तः मासे आस्ते, तं यज्ञदत्तः प्रेरयति' इत्यर्थवाग्विवक्षा में अर्थात् 'अकर्मकप्रकृतिण्यन्तस्थल में अण्यन्तावस्था के कर्त्ता की गतिबुद्धि. सूत्रद्वारा कर्मसंज्ञा होकर एककर्मकत्वोपपत्ति होती है, द्विकर्मकत्वोपपत्ति असम्भव है' इति चर्चाप्रसङ्ग में भाष्यकार ने 'कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्'—देशश्चेति श्लोकवार्त्तिकोपदेश किया है। प्रकृतभाष्यवचन 'हि'पदघटित है, हि पद का प्रयोग स्वभावतः भूतानुवाद अथवा प्रसिद्धार्थप्रतिपादन के लिए होता है। इस प्रकार अकथित० सूत्रभाष्य से यही निर्णय होता है कि अकर्मकधातुभिर्योगे० वार्त्तिक कर्त्तुरीप्सित० सूत्रसिद्ध कर्मसंज्ञानुवादकमात्र है, स्वातन्त्र्येण विधायक नहीं है।

प्र.— कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्० श्लोकवार्त्तिक है। श्लोकवार्त्तिकोपदिष्ट 'ह' पद को निश्चयार्थक अथवा पादपूर्त्यर्थक स्वीकार करने से

'अकर्मकधातुभिर्योगे॰' वार्त्तिक को स्वातन्त्र्येण विधायक स्वीकार करने में कोई बाधा नहीं है।

उ.— 'कालाध्वनोरत्यन्तसंयोगे' सूत्रद्वारा द्वितीयाविधानापेक्षया 'कालाध्वानौ कर्मवदिति वक्तव्यम्' वार्त्तिकद्वारा कर्मवद्विधान करने से कर्म में प्रत्यय होकर 'देवदत्तेन मासः आस्यते' एवं भाव में प्रत्ययविधान करने पर 'देवदत्तेन मासम् आस्यते' प्रयोगोपपत्ति सम्भव है। इत्येवम्परक वार्त्तिककारद्वारा उपदिष्ट चर्चाप्रसङ्ग में 'घटं करोति' स्थल में यथा कर्त्तुरीप्सित॰ शास्त्रसिद्ध प्राकृतकर्म है, तथैव 'देवदत्तः मासमास्ते' वाक्यघटक 'मासम्' को प्राकृतकर्म स्वीकार किया है। भाष्यकार द्वारा 'प्राकृतमेव कर्म' उक्तिद्वारा भी सिद्ध होता है कि अकर्मकधातुभिरिति वार्त्तिक कर्त्तुरीप्सित॰ सूत्रसिद्ध कर्मसंज्ञा का अनुवादक मात्र है। स्वातन्त्र्येण विधायक स्वीकार करने पर भाष्यकार को 'प्राकृतमेव वा' कहना चाहिए था। तथा च स्वकरणकव्याप्ति अर्थ का धात्वर्थ में निवेश करने पर कर्त्तुरीप्सित॰ सूत्रद्वारा कर्मसंज्ञा होकर द्विकर्मकत्वोपपत्ति होती है। यही 'अकथितं च' सूत्रोपदिष्ट द्विकर्मकत्वोपपत्ति का तात्पर्य है। अकर्मकधातुभिर्योगे॰ वार्त्तिक को स्वतन्त्रविधायक स्वीकार करने पर 'समां समां विजायते' (पा.सू. ५.२.१२) सूत्र का भाष्यकारद्वारा 'समायां समायां विजायते' इति विग्रहकथन असंगत होगा, यतो हि अधिकरणत्वाविवक्षा में चरितार्थ 'अकर्मकधातुभिर्योगे॰' वार्त्तिकद्वारा अधिकरणत्वविवक्षा में भी अधिकरणसंज्ञा का परत्वात् बाद होकर द्वितीयाविधान अवश्यंभावी है। अकर्मकधातुओं का स्वकरणकव्याप्ति अर्थ स्वीकार करने पर आसनादिव्यापारप्रयोज्य व्याप्तिरूप फलाश्रय काल-भाव-गन्तव्याध्वा और देश की कर्मसंज्ञा होने से सकल अकर्मक धातु सकर्मक कहलाते हैं। 'मासमास्ते' अर्थात् मास को अपने आसनरूप व्यापार से व्याप्त करता है, प्रकृतस्थल में व्यापनरूप अवान्तरक्रिया प्रयोज्यव्याप्तिरूप फलाश्रय मास की कर्मसंज्ञा होती है। इत्यर्थप्रतिपादिका भर्तृहरिकारिका भी प्रमाण है—

**कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः।**
**सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते।।**

सकर्मकधातुस्थल में भी अन्तर्भूतक्रियान्तर प्रयोज्यफलाश्रयतया मासादि की कर्मसंज्ञा होकर 'मासमोदनं पचति' इत्यादि प्रयोगोपपत्ति होती है। अकर्मकधातुओं की भाँति सकर्मक धातुओं की भी फलानुकूलव्यापारकरणकव्याप्ति

अर्थ में वृत्ति स्वीकार करने से काल-भाव-गन्तव्याध्वा और देश की कर्मसंज्ञा होती है। तद्यथा पच्धातु का विक्लित्त्यनुकूलव्यापारकरणकव्याप्ति अर्थ स्वीकार करने से 'देवदत्तः मासमोदनं पचति' वाक्योपपत्ति होती है, अर्थात् देवदत्त अपने विक्लित्त्यनुकूलव्यापार से मास को व्याप्त करता है।

प्र.— अकर्मकधातुओं का स्वकरणकव्याप्ति अर्थ स्वीकार करने पर सकल धातु सकर्मक कहलावेंगे। तथा च सकर्मकाकर्मक इति भेदद्वय की असिद्धि हो जायेगी?

उ.— प्रधानाप्रधानकर्म को आधार मानकर सकर्मकाकर्मकधातुभेदोपपत्ति होती है। प्रधानकर्मवाले धातु को सकर्मक और गौणकर्मवाले धातु को अकर्मक कहते हैं। अर्थात् धात्वर्थतावच्छेदकफलाश्रयत्वं सकर्मकत्वम्, व्यापार में जिस फल का साक्षात् अन्वय होता है, तदाश्रय को प्रधानकर्म कहते हैं। कालादि का द्रव्यद्वारक व्यापार में अन्वय होने के कारण कालादि को अप्रधानकर्म कहते हैं। 'देवदत्तः पायसं पचति' पायस अर्थात् खीर (अमृतं क्षीरभोजनम्)। दस किलो दूध में $\frac{१}{२}$ किलो चावल डाल दिया, अकेले ही खाना है, अतः पकाते-पकाते जब १$\frac{१}{२}$ किलो माल-मसाला अवशिष्ट रह गया, तब उसमें पंचमेवा मिलाकर भगवद्-भोग लगाकर खाता है। इस प्रकार के दिव्यपाक में कितना समय लगेगा? पूछने पर पता लगा कि २-२$\frac{१}{२}$ घण्टे का समय अपेक्षित है। 'देवदत्तः ओदनं पचति'। एक व्यक्ति के लिये ओदनपाक में २०-२५ मिनट लगेंगे और ५०० व्यक्तियों के लिये ओदनपाक में १ घण्टा लगेगा। प्रकृतविवरण में कठिनपाक्य, महापरिमाण और बहुसंख्यक द्रव्य के पाककाल की चर्चा है। पाक्यद्रव्य के क्रियान्वयानन्तर द्रव्यगतकाठिन्यादिधर्मालोचन करने पर क्रिया में कालादि का अन्वय होता है। क्रिया में द्रव्यान्वय की अपेक्षा कालादि का अन्वय पश्चाद्भव होने के कारण बहिरङ्ग कहलाता है। अर्थात् द्रव्य प्रधानकर्म और कालादि अप्रधानकर्म सिद्ध होते हैं। तथा च जिस क्रिया का द्रव्यकर्म न हो, उसको अकर्मकधातु और द्रव्यकर्मवाले धातु को सकर्मक कहते हैं। इसी तथ्य को भर्तृहरि ने—

**अतस्तैः कर्मभिर्युक्तो धातुर्द्रव्यैरकर्मकः।**
**लस्य कर्मणि भावे च निमित्तत्वाय कल्पते।।**

कारिकाद्वारा अभिव्यक्त किया है। अर्थात् देश-कालभाव-रूप गन्तव्याध्वकर्मयुक् होने पर भी द्रव्यकर्माभाववान् धातु को अकर्मक और द्रव्यकर्मवान् धातु को सकर्मक कहते हैं। तथा च सकर्मकाकर्मकभेदोपपत्तिपूर्वक कर्म और भाव में लकारविधान की व्यवस्था सम्पन्न होती है।

**गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्त्ता स णौ।।**
**।।पा.सू. १.४.५२।।**

**गत्याद्यर्थानां शब्दकर्मणामकर्मकाणां चाणौ यः कर्त्ता स णौ कर्म स्यात्। इति कौमुदी।।**

प्रकृतशास्त्रद्वारा गत्यर्थक, बुद्ध्यर्थक, प्रत्यवसानार्थक, शब्दकर्मक और अकर्मक धातुओं के अण्यन्तावस्था के कर्त्ता की ण्यन्तावस्था में कर्मसञ्ज्ञा होती है। प्रकृतसूत्र में बुद्ध्यर्थकशब्द से ज्ञानसामान्यार्थक जानाति इत्यादि का ग्रहण होता है, श्रवण, दर्शन, घ्राणादिजन्य ज्ञानविशेषार्थक धातुओं का नहीं। प्रत्यवसानार्थक अर्थात् भक्षणार्थक। अकर्मकधातु के अण्यन्तावस्था के कर्त्ता की ण्यन्तावस्था में कर्मसञ्ज्ञा होती है, यथा—'देवदत्तः भवति, तं यज्ञदत्तः प्रेरयति' इत्याकारकवाग्विवक्षा में भूधातु से णिच्, वृद्धि, आवादेश, भाविधातु की निष्पत्ति, तदनन्तर लट्, तिप्, शप्, गुण, आवादेशादि होकर भावयति प्रयोग की उपपत्ति होती है। भावयति इति तिङन्तस्थल में दो कर्त्ता हैं—१. देवदत्त, २. यज्ञदत्त। भाविधातु से समागत लट्स्थानिक तिप्प्रत्यय से यज्ञदत्तकर्त्ता उक्त है, अतः देवदत्त अनुक्तकर्त्ता है। अनुक्तकर्त्ता में 'कर्तृकरणयोस्तृतीया' सूत्रद्वारा प्राप्ततृतीया का बाधपूर्वक प्रकृतशास्त्रद्वारा कर्मसंज्ञा, अथ च कर्म में द्वितीया का विधान होकर 'यज्ञदत्तः देवदत्तं भावयति' प्रयोगोपपत्ति होती है। इसी प्रकार गत्यर्थक, बुद्ध्यर्थक, प्रत्यवसानार्थक और शब्दकर्मक के १. 'शत्रवः स्वर्गमगच्छन्, तान् श्रीहरिः प्रैरिरत्', 'स्वे वेदार्थमविदुः, तान् श्रीहरिः प्रैरिरत्', 'देवाः अमृतमाश्नन्, तान् श्रीहरिः प्रैरिरत्', 'विधिः वेदमध्यैत् तं श्रीहरिः प्रैरिरत्' इत्याकारकवाग्विवक्षा में क्रमशः 'श्रीहरिः शत्रून् स्वर्गमगमयत्', 'श्रीहरिः स्वान् वेदार्थमवेदयत्', 'श्रीहरिः देवान् अमृतमाशयत्', 'श्रीहरिः विधिं वेदमध्यापयत्' उदाहरण सिद्ध होते हैं।

**शे.– शब्दः कर्मकारकं येषामित्यर्थो व्याख्यानात्। तेन ह्वाययतिक्रन्दयत्योर्न।**

**भैरवी– गतिबुद्धीति सूत्रे यच्छब्दकर्मकपदन्तद् व्याचष्टे–शब्दः कर्मकारकमिति। व्याख्यानादिति–कृत्रिमाकृत्रिमन्यायेन कर्मशब्दस्य कर्मसंज्ञकपरत्वस्यौचित्यमूलकादित्यर्थः। यद्वा प्रकृतसूत्रे कर्मग्रहणोपपादनमूलकादित्यप्यर्थः। अन्यथा अर्थशब्दस्योत्तरत्रसम्बन्धेन। गतिबुद्धिप्रत्यवसानशब्दार्थाकर्मकाणामित्येव ब्रूयात्। तेन–तादृशव्याख्यानेन। ह्वाययतीति–अनयोः शब्दार्थकत्वेऽपि शब्दः कर्मकारकं येषान्तादृशार्थकत्वन्नास्तीत्यर्थः।**

प्र.— कर्मशब्द का क्रिया भी अर्थ है और कर्मसंज्ञक भी। धातुपाठ में शब्दक्रियाकधातु भी पठित हैं और शब्दकर्मक भी, अत एव प्रकृतस्थल में शब्दकर्मकपद से शब्दक्रियाकधातु का (यथा—देवदत्तः रौति) ग्रहण करें अथवा शब्दकर्मक का?

उ.— प्रकृत-स्थल में शब्दकर्मकपद का शब्दकर्मसंज्ञक अर्थ स्वीकार करते हैं, शब्दक्रियाक अर्थ नहीं।

व्याख्यानम्— १. प्रकृतस्थल में शब्दकर्मकशब्द का यदि शब्दक्रियाक अर्थ करना अभीष्ट होता, तो शब्दकर्मकपद के स्थान पर लाघवमूलक 'शब्दार्थ' पदोपदेशमात्र से शब्द है अर्थ जिनका, अर्थात् 'शब्दक्रियाक' अर्थनिष्पत्ति संभव थी, शब्दकर्मकपदोपदेश व्यर्थ है। इस प्रकार शब्दकर्मकपदोपदेशसामर्थ्य से शब्दकर्मक धातु गृहीत होते हैं, शब्दक्रियाक नहीं। २. कर्मशब्द का क्रिया अर्थ अकृत्रिम है और कर्मसंज्ञक अर्थ कृत्रिम। अत एव 'कृत्रिमाकृत्रिमयोः कृत्रिमस्यैव ग्रहणम्' परिभाषासाहाय्य से शब्दकर्मपद का शब्दकर्मसंज्ञक अर्थ किया जाता है। शब्दकर्मक अर्थ करने से 'देवदत्तः यज्ञदत्तं ह्वयति', 'देवदत्तः यज्ञदत्तं क्रन्दति', तमन्यः प्रेरयति' इत्याकारकवाग्विवक्षा में अण्यन्तावस्था के कर्त्ता की ण्यन्तावस्था में कर्मसंज्ञा नहीं होती है। इसीलिए 'अन्यः देवदत्तेन यज्ञदत्तं ह्वाययति, अन्यः देवदत्तेन यज्ञदत्तं क्रन्दयति' प्रयोग बनते हैं।

**शे.– अणाविति–णिच्यनुत्पन्ने इत्यर्थः। अत्र णिच् हेतुमण्णिजेव, स णावित्यत्रापि स एव व्याख्यानात्। अत एव भक्षेर्निषेधश्चरितार्थः। स हि नित्यण्यन्तश्चुरादिरिति बोध्यम्।**

**भैरवी– एतत्सूत्रघटकं णिच्पदं हेतुमण्णिच एव बोधकम्, अत्र मानं व्याख्यानमुपवर्णितं तदेव प्रकटयति–अत एवेति। हेतुमण्णिच्-**

**परत्वादेव। इति बोध्यमिति–णिच्सामान्यपरत्वेऽण्यन्तावस्था तत्र न सम्भवतीति भावः।**

प्र.— प्रकृतशास्त्रद्वारा अण्यन्तावस्था के कर्त्ता की ण्यन्तावस्था में कर्मसंज्ञा होती है। इसलिए 'देवदत्तः ओदनं भक्षयति, तं यज्ञदत्तः प्रेरयति' इत्याकारक-वाग्विवक्षा में ण्यन्तावस्था के कर्त्ता की कर्मसंज्ञा होकर 'यज्ञदत्तः देवदत्तमोदनं भक्षयति' प्रयोगोपपत्ति कैसे होती है?

उ.— व्याख्यानसामर्थ्य से 'अणौ कर्त्ता' वाक्य से हेतुमण्णिच् का पूर्ववर्ती कर्त्ता लिया जाता है। चाहे वह स्वार्थिक ण्यन्तावस्था का कर्त्ता हो अथवा अण्यन्तावस्था का। व्याख्यान—'देवदत्तः ओदनं भक्षयति, तं यज्ञदत्तः प्रेरयति' इत्याकारकवाग्विवक्षा में स्वार्थिकण्यन्त भक्षिधातु का कर्त्ता देवदत्त, अण्यन्तावस्था का कर्त्ता न होने से कर्मसंज्ञा की प्राप्ति ही नहीं है, अत एव 'भक्षेरहिंसार्थस्य न' वार्त्तिकद्वारा स्वार्थिक ण्यन्त भक्षिधातु के कर्त्ता की कर्मसंज्ञा का निषेध व्यर्थ है। व्यर्थीभूय ज्ञापन करता है 'अणौ कर्त्ता' वाक्य का हेतुमण्णिच् से पहले का कर्त्ता अर्थ है, वह कर्त्ता चाहे स्वार्थिक ण्यन्त का हो अथवा अण्यन्तावस्था का, अत एव 'देवदत्तः ओदनं भक्षयति, तं यज्ञदत्तः प्रेरयति' इत्याकारकवाग्विवक्षा में स्वार्थिक ण्यन्त भक्षिधातु के कर्त्ता देवदत्त की 'हेतुमण्णिच्' करने पर कर्मसंज्ञा होकर 'यज्ञदत्तः देवदत्तमोदनं भक्षयति' प्रयोगोपपत्ति होती है।

**शे.– अन्यानधीनत्वलक्षणाऽऽर्थप्राधान्यशाब्दप्राधान्ययोः प्रयोजकव्यापारे सत्त्वेन तदनुरोधिकर्मत्वस्यान्तरङ्गादपि कर्तृत्वाद् बलवत्त्वेन कर्त्तुरित्येव सिद्धे णिजर्थेनाप्यमानस्य चेद् गत्यर्थादीनामेवेति नियमार्थमिदम्; तेन पाचयत्यादियोगे नेति 'हेतुमति चे ति सूत्रे भाष्यकृतः। 'प्रधानकार्यं सर्वतो बलवत्' इति आकडारसूत्रे कैयटे स्पष्टम्। तेन गत्यादियोगे प्रयोज्यस्य कर्मत्वशक्तिमत्त्वं पाचयत्यादियोगे कर्तृत्वशक्तिमत्त्वमेवेति बोध्यम्। 'अण्यन्तानाम्' इति किम्? 'गमयति देवदत्तो यज्ञदत्तं तमपरः प्रयुङ्क्ते। गमयति देवदत्तेन यज्ञदत्तं विष्णुमित्रः' इति कौमुदी।।**

**शे.– गमयति देवदत्तेनेति–यज्ञदत्तकर्मकगमनानुकूलदेवदत्तकर्तृकव्यापारानुकूलो विष्णुमित्रकर्तृको व्यापार इति बोधः। अत्र देवदत्तस्य न कर्मत्वम्।।**

**भैरवी– गतिबुद्धीति सूत्रस्य नियमार्थत्ववादिमतमुपस्थापयति-अन्यानधीनत्वादिना। अन्तरङ्गादपीत्यपिना परत्वोपजीव्यत्वयोः समुच्चयः। भाष्यकृत इति।**

तत्र हि–'कथमिदं विज्ञायते हेतुमत्यभिधेये णिज् भवतीति आहोस्विद्धेतुमति यो धातुर्वर्त्तते' इति रीत्या विचारे 'अस्तु प्रकृत्यर्थविशेषणम्' इत्युक्तम्। अत्र कैयटः–'विनापि णिचा पञ्चभिर्हलैः कर्षतीति प्रयोजकव्यापारावगमात् प्रकृत्यर्थत्वं हेतुमत उपपद्यते' इति। 'को दोषः। इह हि उक्तः करोति। प्रैषितः करोतीति णिच् प्राप्नोति'। प्रकृतिविशेषणत्वपक्षे यथा प्रकृत्यभिहिते प्रयोजकव्यापारे णिज् भवति। एवमुक्तप्रेषितादि-शब्दाभिहितेऽपि प्राप्नोति। हेतुमद्विषयत्ववता करोत्यर्थस्य। प्रत्ययार्थविशेषणत्वे तु उक्तार्थत्वात् णिजभावः। 'इह तर्हि पाचयति ओदनं देवदत्तो यज्ञदत्तेनेति उभयोः कर्त्रोः लेनाभिधानम्प्राप्नोति। प्रत्ययार्थविशेषणसत्त्वेन दोषः। प्रधानकर्त्तरि लादयो भवन्ति। प्रधानकर्त्ता लेनाभिधीयते। यश्चात्राप्रधानं सिद्धा तत्र तृतीया कर्त्तरीत्येव' इत्युक्तम्। अत्र प्रधानकर्त्ता लेनाभिधीयत इत्युक्त्या प्रधानाऽप्रधानसन्निधौ प्रधानकार्यस्य बलवत्त्वं सूचितम्। ततोऽग्रे प्रत्ययार्थविशेषणत्वपक्ष एव पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति प्रयोज्ये कर्त्तरि कर्मसंज्ञा प्राप्नोतीति शङ्कायामेवं समाहितम्। 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्मकाणामणीत्ये-तन्नियमार्थम्भविष्यति। एतेषामेवाण्यन्तानां यः कर्त्ता स णौ कर्मसंज्ञो भवति नान्येषामिति' एवमुक्तम्भाष्ये। अत्र कैयटः– 'ण्यर्थस्य प्राधान्यात्तेनेप्सितस्य प्रयोज्यस्य सिद्धा कर्मसंज्ञा। न च स्वव्यापारापेक्षया स्वातन्त्र्यात् परत्वात् कर्तृसंज्ञा प्राप्नोतीति युक्तं वक्तुम्। प्रयोज्यव्यापारस्याप्राधान्यात् प्रधानाप्रधानव्यापारसन्निधौ च प्रधाननिमित्तस्य कार्यस्य युक्तत्वान्नियमेन तु प्रधानकार्यव्यावृत्तौ गुणनिमित्तकार्यसद्भावात् कर्त्तृत्वम्भवत्येव'। तदुक्तं हरिणा—

गुणक्रियायां स्वातन्त्र्यात् प्रेषणे कर्मतां गतः।
नियमात् कर्मसंज्ञायाः स्वधर्मेणाभिधीयते।।इति।

कैयटे स्पष्टमिति। तत्र ह्येवमुक्तम्– 'गुणप्रधानसन्निधौ प्रधानस्य प्रयोजकत्वे सम्भवति सति पृथग्गुणास्तद्विरुद्धं स्वकार्यन्न प्रयुञ्जते। ततश्च सिद्धायां प्रयोज्यस्य कर्मसंज्ञायां गत्यर्थादीनामेवाण्यन्तानां कर्त्ता कर्मसंज्ञो भवति नान्येषामिति नियमः क्रियते। तेन पाचयत्योदनं देवदत्तो यज्ञदत्तेनेत्यत्र कर्मसंज्ञा न भवति' इति।

ण्यन्तस्थल में धातु का व्यापारद्वय अर्थ होता है, यथा 'देवदत्तः यज्ञदत्तं ग्रामं गमयति' वाक्यघटक ण्यन्त गमिधातु का संयोगानुकूलव्यापारानुकूलव्यापार अर्थ है। इसलिए प्रधानीभूतव्यापारप्रयोज्य एवं प्रधानीभूतव्यापारवाचक-धातुवाच्य संयोग एवं संयोगानुकूलव्यापाररूप फल के आश्रय क्रमशः ग्राम एवं यज्ञदत्त दोनों की 'कर्त्तुरीप्सिततमं कर्म' शास्त्रद्वारा ही कर्मसंज्ञा हो जायेगी 'गतिबुद्धि०' शास्त्रोपदेश व्यर्थ होकर 'सकर्मकाणाम् अण्यन्तावस्थायाः कर्त्तुः ण्यन्तावस्थायां कर्मसंज्ञा चेत्तर्हि गत्यर्थकबुद्ध्यर्थक-प्रत्यवसानार्थकशब्दकर्मकाणामेव' इत्याकारक नियम करता है, अत एव 'देवदत्तः ओदनं पचति, तं यज्ञदत्तः प्रेरयति' इत्याकारकवाग्विवक्षा में 'देवदत्तेन ओदनं पाचयति यज्ञदत्तः' वाक्योपपत्ति होती है। यह कथन 'हेतुमति च' (पा.सू. ३.१.२७) सूत्र के भाष्य में स्पष्ट है।

प्र.— ण्यन्तस्थल में अण्यन्तावस्था के कर्त्ता की प्रधानीभूतव्यापारप्रयोज्य फलाश्रय होने से कर्मसंज्ञा की प्राप्ति होती है, अथ च व्यापाराश्रयत्वात् कर्त्तृसंज्ञा भी प्राप्त है। विना कर्त्तृसंज्ञा के कर्मसंज्ञा असंभव है, कर्त्तृसंज्ञा कर्मसंज्ञा से पर भी है, कर्त्तृसंज्ञा कर्मसंज्ञा की उपजीव्य भी है, कर्त्तृसंज्ञा में उद्देश्यत्वरूप प्राधान्य भी है, कर्त्तृसंज्ञा कर्मसंज्ञा से पहले होने के कारण पूर्वोपस्थितिकत्वहेतु से अन्तरङ्ग भी है। इस प्रकार परत्व, उपजीव्यत्व, अन्तरङ्गत्व एवं उद्देश्यत्वरूप आर्थप्राधान्य हेतुओं से कर्मसंज्ञा को बाँधकर कर्त्तृसंज्ञा होने लगेगी, कर्त्तृसंज्ञा न हो, एतदर्थ 'गतिबुद्धि.' सूत्र विध्यर्थ है, नियमार्थ नहीं है?

उ.— यद्यपि कर्त्तृसंज्ञा में उद्देश्यत्वरूप आर्थप्राधान्य अवश्य है; किन्तु शाब्दप्राधान्य कर्मसंज्ञा में ही है, अत एव 'प्रधानं सर्वतो बलवत्' नियमद्वारा कर्त्तृसंज्ञा को बाँध कर कर्मसंज्ञा ही होती है। ण्यन्तस्थलीय शाब्दबोध में अन्यानधीनव्यापार अर्थात् प्रधानीभूतव्यापार जो किसी के अधीन नहीं है, तत्प्रयुक्त कर्मसंज्ञा है, अथ च अन्याधीनव्यापार अर्थात् प्रधानी-भूतव्यापाराधीन-व्यापार (अण्यन्तावस्था का व्यापार) तत्प्रयुक्त कर्त्तृसंज्ञा है। इस प्रकार ण्यन्तधात्वर्थप्रधानीभूतव्यापारप्रयोज्यसंयोग एवं संयोगानुकूल-व्यापाररूप फल के आश्रय की 'कर्त्तुरीप्सिततमं कर्म' शास्त्रद्वारा ही कर्मसंज्ञा संभव है, 'गतिबुद्धि०' शास्त्रोपदेश व्यर्थ होकर नियम करता ही है। यह बात 'प्रधानं सर्वतो बलवत्' इत्युपदेशपूर्वक 'आकडारादेका संज्ञा' सूत्र

के भाष्य में भी स्पष्ट है। नियम के फलस्वरूप ही गत्यर्थकादि ण्यन्तधातु के योग में प्रयोज्यकर्त्ता की कर्मसंज्ञा एवं सूत्रानुपदिष्ट ण्यन्तधातु के योग में अण्यन्तावस्था के कर्त्ता की कर्तृसंज्ञा अक्षुण्ण ही बनी रहती है।

**'नीवह्योर्न' (वा.) नाययति वाहयति वा भारं भृत्येन। नियन्तृकर्तृकस्य वहेरनिषेधः। वाहयति रथं वाहान् सूतः।।इति कौमुदी।।**

**शे.– नियन्त्रिति–नियन्तृकर्तृकण्यन्तप्रकृतिभूतस्येत्यर्थः। प्रापणार्थ-वहेर्गत्यर्थत्वाभावेऽपि 'ग्रामं प्राप्तः' इत्यादौ तत्प्राप्तेर्गतिं विनाऽसम्भवाक्षिप्तगत्यापि गत्यर्थत्वमित्यभिमानेन वार्त्तिकारम्भः। 'सुखं प्राप्तः' इत्यादौ न तदाक्षेपः, तत्र कर्त्तरि क्त आदिकर्मणि बोध्यः। अत एव 'ग्रामं प्रापयति देवदत्तेनेत्येवेति ध्वनितम्, 'न गति' (पा.सू. १.३.१५) इति, 'न वा' (पा.सू. १.१.४४) इति सूत्रे भाष्ये। नयतेस्तु 'या प्रापणे' इत्यादेरिव गत्युपसर्जनं प्रापणं वाच्यमिति तस्य गत्यर्थत्वमेवेति बोध्यम्।**

**भैरवी– नियन्तृकर्तृकेति–अत्र नियन्ता पशुप्रेरकमात्रम्। गत्यर्थत्वाभावेऽपीति। प्रापणं हि प्राप्त्यनुकूलव्यापारानुकूलव्यापारः। प्राप्तिश्च सम्बन्धमात्रन्न तु संयोग एव। 'सुखम्प्राप्तो विद्याम्प्राप्तः' इत्यादौ संयोगाभावेऽपि प्राप्तिव्यवहारादिति भावः। अत एव–प्राप्त्यर्थकस्य गत्यर्थकत्वाभावादेव।- इत्येवेति–अत्र गत्यर्थत्वाभावेन नियमेन कर्मत्वाप्राप्तेः। ध्वनितन्न गतीति सूत्र इति। तत्र ह्युक्तम् 'न वहिर्गत्यर्थः' इति। न वेति सूत्रे चेति। तत्र ह्युभयत्र विभाषागणनावसरे 'हृक्रोरित्युभयत्र विभाषेत्युक्त्वा प्राप्तेऽभ्यवहरतिमुदाहृत्याप्राप्ते 'हरति भारं देवदत्तो हारयति भारं देवदत्तम्' इत्युक्तम्। अत्राप्राप्त इत्यनेन प्राप्त्यर्थस्य गत्यर्थत्वाभावः सूचित एव। नन्वेवन्नीवह्योर्नेत्यनेन नयतेरण्यन्तावस्थायां यः कर्त्ता तस्य ण्यन्तावस्थायां कर्मसंज्ञाप्राप्तिरेव नेति नीग्रहणं व्यर्थमत आह–नयतेस्त्विति तस्यापि न गत्यर्थत्वमिति नीग्रहणमुक्तनियमलब्धाप्राप्त्यनुवाद इति ध्वनितम्।**

प्र.— 'भृत्यः भारं नयति वहति वा, तं स्वामी प्रेरयति' इत्याकारकवाग्विवक्षा में गत्यर्थक धातु का योग होने से 'गतिबुद्धि०' शास्त्रद्वारा अण्यन्तावस्था के कर्त्ता की प्राप्त कर्मसंज्ञा का 'नीवह्योर्न' वार्त्तिकद्वारा निषेध होकर

'नाययति, वाहयति वा भारं भृत्येन स्वामी' वाक्योपपत्ति होती है। तथैव 'वाहा: रथं वहन्ति, तान् सूत: प्रेरयति' इत्याकारकवाग्विवक्षा में अण्यन्तावस्था के कर्त्ता की 'गतिबुद्धि॰' शास्त्रद्वारा प्राप्त कर्मसंज्ञा का भी 'नीवह्योर्न' वार्त्तिकद्वारा निषेध होना चाहिए, 'वाहयति रथं वाहान् सूत:' वाक्योपपत्ति कैसे होती है?

उ.— यद्यपि 'वाहा: रथं वहन्ति, तं सूत: प्रेरयति' इत्याकारकवाग्विवक्षा में 'गतिबुद्धि॰' शास्त्रद्वारा प्राप्त कर्मसंज्ञा का 'नीवह्योर्न' वार्त्तिकद्वारा निषेध प्राप्त है; किन्तु कर्मसंज्ञानिषेधक 'नीवह्योर्न' वार्तिक का 'नियन्तृकर्तृकस्य वहेरनिषेध:' वार्त्तिकद्वारा प्रतिषेध होने से नियन्तृकर्त्तृक वाहिधातु के अण्यन्तावस्था के कर्त्ता की ण्यन्तावस्था में कर्मसंज्ञा होकर 'वाहयति रथं वाहान् सूत:' वाक्योपपत्ति होती है। यतो हि कर्मसंज्ञा के निषेध के निषेध का तात्पर्य कर्मसंज्ञा का प्रतिप्रसव ही है।

प्र.— 'रथं वाहा: वहन्ति' अवस्था में नियन्तृकर्तृक वह्धातु ही नहीं है, पुन: 'नीवह्योर्न' वार्त्तिक का 'नियन्तृकर्त्तृकस्य वहेरनिषेध:' वार्त्तिकद्वारा प्रतिषेध कैसा?

उ.— 'नियन्तृकर्त्तृकस्य वहेरनिषेध:' वार्त्तिक का 'नियन्ता है कर्त्ता जिसका, ऐसी जो वह्धातु' इत्याकारक अर्थ नहीं है, अपितु 'नियन्ता है कर्त्ता जिसका ऐसी जो ण्यन्त वाहिधातु तत्प्रकृतिभूत अण्यन्त वह्धातु के कर्त्ता की ण्यन्तावस्था में प्राप्त कर्मसंज्ञा का निषेध होता है' इत्येवम्प्रकारक अर्थोपपत्ति स्वीकार करने से 'नीवह्योर्न' वार्त्तिक का 'नियन्तृकर्तृकस्य वहेरनिषेध:' वार्त्तिकद्वारा निषेध सिद्ध होता है।

प्र.— वह्धातु का प्राप्ति अर्थ है, प्राप्ति तो गति नहीं, अत एव गत्यर्थक धातु का योग न होने से 'वाहा: रथं वहन्ति, तान् सूत: प्रेरयति' इत्याकारकवाग्विवक्षा में कर्मसंज्ञा की ही प्राप्ति नहीं, 'नीवह्योर्न' निषेधोपदेश क्यों?

उ.— गति के विना प्राप्ति असंभव है। यथा—'ग्रामं प्राप्त:' कहने पर गति के विना ग्राम की प्राप्ति नहीं होती, अर्थात् प्राप्त्यर्थक धातु भी गत्यर्थक ही कहलाती हैं, अत एव वह्-प्रापणे धातु गत्यर्थक होने से ण्यन्त वाहिधातु के योग में 'गतिबुद्धि.' सूत्रद्वारा प्राप्त कर्मसंज्ञा का निषेध करने के लिये 'नीवह्योर्न' वार्त्तिकोपदेश आवश्यक है। वस्तुत: गति के विना भी प्राप्ति

**इत्यत्रानुद्योत्ये हीनत्वे निरूपितत्वसम्बन्धेन हरेरन्वयः। न्यूनतापरिहाराय मूलानुक्तम् 'उपोऽधिके च' इति सूत्रोदाहरणमाह–उपखार्यान्द्रोण इति यथेति। अत्राधिकत्वमुपद्योत्यन्तत्र खार्या निरूपितत्वसम्बन्धेनान्वयः। अधिकत्वञ्च अधिकरणाधिकरणकस्थितिकर्तृत्वरूपम्पारिभाषिकम्, तदेकदेशाधिकरणत्वे तेन सम्बन्धेनान्वयः। न तु स्वनिष्ठ-परिमाणाधिकपरिमाणवत्त्वम्। द्रोणपरिमाणस्य खारीनिष्ठपरिमाणतो न्यूनत्वात्। तथा हि—**

**पलम्प्रकुञ्चकम्मुष्टिः कुडवस्तच्चतुष्टयम्।**
**चत्वारः कुडवाः प्रस्थश्चतुःप्रस्थमथाढकम्।।**

**अष्टाढको भवेद् द्रोणो द्विद्रोणः शूर्प उच्यते।**
**सार्द्धः शूर्पः भवेत् खारी द्विशूर्पा गोण्युदाहृता।।**

**तामेव भारञ्जानीयाद् वहो भारचतुष्टयम्।**
**शुष्कमेयेष्विदम्मानं द्विगुणन्तद्द्रवेषु तु।।इति।।**

**तदाह–तेनोभयमिति। उभयं खारी द्रोणश्च। स्वनिष्ठ-परिमाणाधिकपरिमाणाख्यायान्तु उपद्रोणे खारीत्युदाहरणम्बोध्यम्।।**

अधिकार्थद्योतक 'उप' की कर्मप्रवचनीयसंज्ञा होती है, अथ च चकारात् हीनार्थद्योतक उप की भी कर्मप्रवचनीयसंज्ञा होती है। अधिकार्थद्योतक उप की कर्मप्रवचनीयसंज्ञाविधानपूर्वक प्राप्त द्वितीयाविभक्ति का बाध होकर 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी' शास्त्रद्वारा सप्तमी का विधान होकर 'उपखार्यां द्रोणः' प्रयोगोपपत्ति होती है। द्रोण अधिक खारी। द्रोण = दस सेर और खारी एक मन होता है। खारी से अधिक द्रोण, अत एव 'यस्मादधिकं यस्य.' शास्त्रद्वारा खारीशब्द से सप्तमीविभक्ति होती है। यद्यपि द्रोण की अपेक्षा खारी का परिमाण अधिक है, तथापि 'उपखार्यां द्रोणः' वाक्य का 'खारी से भी द्रोण परिणाम है अधिक जिसमें ऐसा परिमाण' अर्थात् पाँच द्रोण, अत एव खारी की अपेक्षा द्रोण में अधिकत्व की उपपत्ति होती है। इसीलिए शेखरकार ने 'तेनोभयमस्तीति फलति' कहा है। हीनार्थद्योतक 'उप' की कर्मप्रवचनीयसंज्ञाविधानपूर्वक द्वितीयाविभक्ति होकर 'उप हरिं सुराः' प्रयोगोपपत्ति होती है।

## लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः।।१.४.९०।।

एष्वर्थेषु विषयभूतेषु प्रत्यादय उक्तसंज्ञाः स्युः। लक्षणे–वृक्षं प्रति-परि-अनु वा विद्योतते विद्युत्। इत्थंभूताख्याने-भक्तो विष्णुं प्रति-परि-अनु वा। भागे-लक्ष्मीर्हरिं प्रति-परि-अनु वा। हरेर्भाग इत्यर्थः। वीप्सायाम्–वृक्षं वृक्षं प्रति-परि-अनु वा सिञ्चति। अत्रोपसर्गत्वाभावान्न षत्वम्। एषु किम्–परिषिञ्चति।।इति कौमुदी।।

शे.– इत्थंभूतः कञ्चित्प्रकारं प्राप्तः, स आख्यायतेऽनेनेति–इत्थंभूताख्यानम्–प्रकारविशेषनिरूपकम्। भागशब्देनार्शआद्यजन्तेन तत्स्वामी उच्यते। वीप्सायां द्विर्वचनविशिष्टवृक्षशब्दबोध्यत्वादाह–विषयभूतेष्विति। वृक्षं प्रतीति–वृक्षप्रकाशेन विद्युद्विद्योतदेशज्ञानाद् वृक्षो लक्षणम्। वृक्षं वृक्षमिति–वृक्षस्य व्यापकतासम्बन्धेनान्वयो यद्यपि द्विर्वचनबलादेव, तथापि प्रत्यादिसत्त्वे सोऽपि तन्निर्णायक इति सम्बन्धपरिच्छेदकत्वं बोध्यम्। वृक्षादीनां सेचने कर्मत्वेऽपि तत्त्वेनाविवक्षायामनेन द्वितीया। किञ्च यद्यत्र कर्मणि द्वितीया स्यात्तदा प्रतिना सामर्थ्याभावात् प्रतिवृक्षमिति समासानापत्तिः। अत एव भाष्ये–'किमर्थं पुनरिदमुच्यते न चोपसर्गसंज्ञाबाधनार्थं, क्रियायोगाभावात्' इत्युक्त्वा 'द्वितीयार्थम्' इति सिद्धान्तितम्। अत एव 'प्रत्यर्थं शब्दनिवेशः' इत्यादावर्थस्य निवेशनक्रियानिरूपिताधिकरणत्वेऽपि 'अर्थमर्थं प्रति' इति विग्रहो भाष्ये दर्शितः, वृत्तिविषये प्रतेरेव वीप्साया अपि द्योतक इत्यन्यदित्यपास्तम्। फलान्तरमप्याह–अत्रेति।

भैरवी– आख्यायते–निरूप्यते। 'भक्तो विष्णुं प्रति-परि-अनु' इत्यत्र भक्तिम्प्राप्त आख्यायते। भक्तिश्चाराध्यप्रकारकं ज्ञानम्। द्वितीयार्थश्च विषयित्वं प्रत्यादिद्योत्यं तस्य भक्तपदार्थैकदेशभक्तावन्वयः। भागः स्वत्ववान् पदार्थः। तद्वाचकादर्शआद्यचि तादृशपदार्थस्वामिलाभः। एवञ्च स्वामिनि विषयभूत इति लब्धम्। 'लक्ष्मीर्हरिम्प्रति' इत्यत्र स्वामित्वनिरूपितस्वत्वन्द्वितीयार्थः। तस्य लक्ष्मीपदार्थेऽन्वयः। सूत्रे वीप्सापदं व्याप्यत्वपरम्। तदेवं 'वृक्षं वृक्षम्प्रति' इत्यत्र द्विर्वचनविशिष्टवृक्षशब्दादिद्योत्यम्। तस्मिन् व्याप्यत्वे आधेयतासम्बन्धेन प्रकृत्यर्थस्यान्वयः। व्याप्यत्वञ्च–स्वनिरूपितव्यापकसम्बन्धेन सेचनेऽन्वेतीत्येषां कर्मप्रवचनीयत्वम्। द्विर्वचनबलादेवेति–एवञ्च सम्बन्धपरिच्छेद-

**कत्वाभावात् कथं कर्मप्रवचनीयत्वमिति भावः। सोऽपीति–'व्यतिलुनीते' इतिवत् प्रत्यादिरपीत्यर्थः। तत्त्वेन–कर्मत्वशक्तिमत्त्वेन। उक्तार्थे भाष्यसम्मतिमाह–अत एवेति–प्रत्यादीनां क्रियाविशेषकत्वाभावादेव। अत एव–कर्मप्रवचनीयसंज्ञाया द्वितीयार्थत्वादेव। फलान्तरम्–कर्मप्रवचनीयसंज्ञायाः फलान्तरम्।**

लक्षणार्थक कर्मप्रवचनीयसंज्ञक का 'वृक्षं प्रति विद्योतते विद्युत्' उदाहरण है। घर के भीतर बैठा पढ़ रहा था, बिजली चमकी। पूछा—कहाँ चमकी बिजली? उत्तर मिला—'वृक्ष की ओर'। प्रकृतस्थल में 'वृक्ष' विद्युद्-विद्योतन-देश का लक्षण = ज्ञापक, बोधक है, और विद्युद्-विद्योतित-देश लक्ष्य = ज्ञाप्य, बोध्य है। वृक्ष और विद्युद्विद्योतनदेश के परस्पर लक्ष्यलक्षणभावसम्बन्धद्योतक प्रति की कर्मप्रवचनीयसंज्ञाविधानपूर्वक द्वितीया होकर 'वृक्षं प्रति विद्योतते विद्युत्' वाक्योपपत्ति होती है। इत्थंभूताख्यानार्थक कर्मप्रवचनीय के योग में द्वितीया का 'भक्तो विष्णुं प्रति' उदाहरण है। 'जो जैसा है, उसे वैसा ही कहने को' अर्थात् यत्किञ्चित्प्रकारताप्राप्त के आख्यान को इत्थंभूताख्यान कहते हैं। यथा—'भक्तो विष्णुं प्रति' वाक्यघटक भक्तशब्द का भक्तत्ववान् (भक्तिमान्) अर्थ है। प्रकृतस्थल में प्रकारताकोटिप्रविष्ट भक्तत्व का 'प्रति' द्वारा आख्यान होता है, अत एव प्रति की कर्मप्रवचनीयसंज्ञाविधानपूर्वक प्रति के योग में द्वितीया होती है।

भागार्थद्योतक प्रति-परि और अनु की कर्मप्रवचनीयसंज्ञा होती है। भागोऽस्यास्तीति विग्रह में विहित अर्शआद्यच्प्रत्ययान्त भागपद का प्रकृतशास्त्र में उपदेश है। भाग शब्द का भागवाला अर्थ है, अत एव भागवान् अर्थद्योतक प्रत्यादि की कर्मप्रवचनीयसंज्ञा होती है। समुद्रमन्थन के समय 'लक्ष्मी' हरि के भाग में आईं, अत एव लक्ष्मीरूप भागवाले श्रीहरि सिद्ध होते हैं। इसलिए 'भागवान्' अर्थद्योतक प्रति की कर्मप्रवचनीयसंज्ञाविधानपूर्वक द्वितीया होने से 'लक्ष्मीर्हरिं प्रति' प्रयोगोपपत्ति होती है।

वीप्सार्थद्योतक प्रत्यादि की कर्मप्रवचनीयसंज्ञा होती है। 'प्रत्येक वृक्ष को सींचता है' इत्यर्थक 'वृक्षं वृक्षं प्रतिसिञ्चति' वाक्यघटक 'वृक्षं वृक्षम्' इस द्विर्वचनविशिष्टपदाभिव्यक्तवीप्सार्थद्योतक प्रति की कर्मप्रवचनीयसंज्ञाविधानपूर्वक

द्वितीया होकर 'वृक्षं वृक्षं प्रति सिञ्चति' वाक्योपपत्ति होती है। प्रत्येक वृक्ष का सेचन करता है, अर्थात् वृक्ष व्याप्य है और सेचनक्रिया व्यापिका, अत एव सेचनक्रिया में वृक्ष का स्वनिष्ठव्याप्यतानिरूपितव्यापकतासम्बन्ध से अन्वय होता है। इसी सम्बन्ध का द्योतक 'प्रति' है।

प्र.— 'वीप्सा' अर्थ तो द्विर्वचनद्वारा उक्त है, अत: प्रति की वीप्सा अर्थ में वृत्ति न होने से कर्मप्रवचनीयसंज्ञा असंभव है?

उ.— यद्यपि द्विर्वचनद्वारा वीप्सा उक्त है, तथापि सम्बन्धनिर्णायक होने से 'प्रति' की कर्मवचनीयसंज्ञाविधानपूर्वक द्वितीयाविभक्ति आती है।

प्र.— आपका कहना है कि 'प्रति' की कर्मप्रवचनीयसंज्ञाविधानपूर्वक प्रति के योग में द्वितीया होकर 'वृक्षं वृक्षं प्रति सिञ्चति' वाक्योपपत्ति होती है, किन्तु 'वृक्षम्' तो सिञ्चति क्रिया का कर्म है, अत एव वृक्षप्रातिपदिक से 'कर्मणि द्वितीया' हो जायेगी। 'प्रति' की कर्मप्रवचनीयसंज्ञाविधानपूर्वक 'प्रति' के योग में द्वितीयाविधान करना व्यर्थ है?

उ.— १. 'वृक्ष' की कर्मत्वेन विवक्षा के अभाव में भी 'प्रति' की कर्मप्रवचनीय-संज्ञा होकर 'प्रति' के योग में द्वितीया आती है। २. कर्मणि द्वितीया स्वीकृतिपुर:सर आप प्रति के कर्मप्रवचनीयसंज्ञाविधान का वैयर्थ्य प्रतिपादन करते हैं। क्रिया के साथ योग होने पर कर्मणि द्वितीया होती है। प्रति का क्रिया के साथ योग स्वीकार करने पर प्रति और वृक्षम् पदार्थों का परस्पर एकार्थीभावरूप सामर्थ्य न रहने से समास संभव नहीं है, तथा च 'प्रतिवृक्षम्' पदोपपत्ति नहीं होगी। ३. क्रियान्वयपूर्वक वृक्षप्रातिपदिक से कर्मणि द्वितीया स्वीकार करने पर प्रति का भी क्रियान्वय स्वीकार करना होगा, तथा च 'प्रति' की कर्मप्रवचनीयसंज्ञा असंभव है, यतो हि 'क्रिया को जिसने कहा हो और सम्प्रति जो क्रियाकारक के सम्बन्ध को कहता है, उसकी कर्मप्रवचनीयसंज्ञा होती है'।

कर्मप्रवचनीय का क्रिया में अन्वय नहीं होता है, इसीलिए भाष्य में प्रत्यादि की कर्मप्रवचनीयसंज्ञा का फलनिरूपण करते समय 'कर्मप्रवचनीयसंज्ञा से उपसर्गसंज्ञा का बाध होता है' कथन का खण्डन करते हुए भाष्यकार ने स्वत: कहा कि 'कर्मप्रवचनीयस्य क्रियायोगाऽभावान्न उपसर्गसंज्ञा' अर्थात् कर्मप्रवचनीय का क्रिया के साथ योग न होने से स्वत: उपसर्गसंज्ञा

प्राप्त नहीं होती। इस प्रकार सिद्ध होता है कि कर्मप्रवचनीयसंज्ञा का फल उपसर्गसंज्ञा का बाध नहीं, अपितु द्वितीयाविधान ही मुख्यफल है। कर्मप्रवचनीयसंज्ञा का द्वितीयाविधान ही फल है, इसीलिए अर्थ के प्रति शब्दाभिनिवेश होता है, अर्थात् जितने अर्थ हैं, उतने ही शब्दों का उच्चारण आवश्यक है। इस प्रकार उच्चारणक्रिया का आधार होता है शब्द। 'प्रत्यर्थं शब्दाभिनिवेशः' वाक्यार्थप्रतिपादक 'अर्थम् अर्थं प्रति शब्दाभिनिवेशः' विग्रहघटक प्रति की कर्मप्रवचनीयसंज्ञा होकर द्वितीया का विधान होता है, वीप्सा में समास होता है। वृत्ति के विषय में 'प्रति' वीप्सा अर्थ का द्योतक है। कर्मप्रवचनीय का क्रिया में अन्वय न होने के कारण गति और उपसर्ग संज्ञाएँ नहीं होती हैं, अत एव 'गतिसंज्ञक से पूर्व कर्मप्रवचनीयसंज्ञक प्रत्यादि को निघात एवं कर्मप्रवचनीयसंज्ञक-प्रत्यादि से परे षत्व नहीं होता है' यह फलितार्थकथन है।

## अभिरभागे ।।१.४.९१।।

**भागवर्जे लक्षणादावभिरुक्तसंज्ञः स्यात्। हरिमभि वर्त्तते। भक्तो हरिमभि। देवं देवमभिसिञ्चति। अभागे किम्-यदत्र ममाभिष्यात्तद्दीयताम्।।इति कौमुदी।।**

**शे.– यदत्रेति–यद्वस्तु मम भागः स्यादित्यर्थः।**

**भैरवी– यच्छब्दस्य बुद्धिस्थपरामर्शकतया प्रकृते बुद्धिस्थो भागः परामृश्यते। एवञ्च मत्सम्बन्धियद्भागकर्तृका एतद्देशाधिकरणिका सम्भाव्यमाना सत्ता तत्कर्मकप्रेरणाविषयो दानमिति बोधः। अत्र कर्मप्रवचनीयसंज्ञाया अभावे उपसर्गसंज्ञासत्त्वादुपसर्गप्रादुर्भ्याम् इति षत्वम्।**

लक्षणेत्थंभूताख्यान. सूत्रद्वारा लक्षण, इत्थंभूताख्यान, भाग और वीप्सा इन चार अर्थों में प्रत्यादि की कर्मप्रवचनीयसंज्ञा का विधान होता है। इन चारों में भाग अर्थ को छोड़कर अवशिष्ट तीन अर्थों में प्रकृतसूत्र-द्वारा कर्मप्रवचनीयसंज्ञा का विधान होता है, अत एव 'जो वस्तु मेरा भाग है, उसे दे दो' इत्यर्थक 'यदत्र ममाभिष्यात्तद्दीयताम्' वाक्यघटक 'अभि' की मत्सम्बन्धिभाग अर्थ का द्योतक होने के कारण कर्मप्रवचनीयसंज्ञा नहीं होती है। इसीलिए उपसर्गसंज्ञा होकर 'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' (पा.सू. ८.३.८७) शास्त्रद्वारा षत्व होकर 'अभिष्यात्' प्रयोगोपपत्ति होती है।

## अधिपरी अनर्थकौ ।।१.४.९३।।

**उक्तसंज्ञौ स्तः। कुतोऽध्यागच्छति। कुतः पर्यागच्छति। गतिसंज्ञाबाधात् 'गतिर्गतौ' इति निघातो न।।इति कौमुदी।**

**शे.–** **कुतोऽधीति–कुत इत्यपादाने पञ्चमी। द्वितीया तु न। कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगित्वरूपस्य कर्मप्रवचनीययुक्तत्वस्याभावात्। गतिसंज्ञाबाधादिति–धात्वर्थमात्रद्योतकत्वेन क्रियायोगाद् गतित्वं प्राप्तम्, विशेषद्योतकत्वाभावात्त्वनर्थकत्वव्यवहारोऽपीति भावः।**

**भैरवी–** **ननु कुत इत्यत्राधिशब्दस्य क्रियायोगाभावाद् गतित्वस्य प्राप्त्यभावेन गतिसंज्ञाबाधादित्ययुक्तमत आह–धात्वर्थमात्रेति। 'उपसर्गाः क्रियायोगे' इति सूत्रे क्रियायोगपदं धातुना क्रियानिष्ठा या स्वशक्यतावच्छेदकावच्छिन्ना विषयता तच्छाल्युपस्थितिजनने सहकारित्वं तच्च प्रकृतेऽप्यस्ति किन्तु क्रियात्वक्रियातिरिक्ततद्गतविशेषविषयकबोधजनने सहकारित्वं नास्तीति तदभावादेवानर्थकत्वव्यवहार इति भावः।**

प्रकृतसूत्रद्वारा अनर्थक अधि और परि की कर्मप्रवचनीयसंज्ञा होती है। आप कहाँ से आते हैं? इत्यर्थक 'भवान् कुतोऽध्यागच्छति' वाक्यघटक 'अधि' अनर्थक है, अत एव कर्मप्रवचनीयसंज्ञा होती है। 'अध्यागच्छति' पदघटक अधि के द्वारा आगमनक्रिया में किसी वैशिष्ट्य का आधान नहीं होता, अत एव अनर्थक है। 'अधि + आ + गच्छति' पदघटक अधि की कर्मप्रवचनीयसंज्ञाद्वारा गतिसंज्ञा का बाध होने से गतिसंज्ञक 'आ' से पूर्व 'अधि' को 'गतिर्गतौ' सूत्रद्वारा निघात नहीं होता।

प्र.— 'कुतोऽध्यागच्छति' वाक्यघटक अधि की कर्मप्रवचनीयसंज्ञा होने से 'कुतः' इत्यत्र पञ्चम्यर्थक तसिल् न होकर द्वितीया होनी चाहिए?

उ.— यथा 'जपमनु प्रावर्षत्' स्थल में लक्ष्यलक्षणभावसम्बन्ध का द्योतक अनु है, इस सम्बन्ध का प्रतियोगी जप है और वर्षणकाल अनुयोगी है, तथैव 'कुतोऽध्यागच्छति' स्थल में क्रियाकारकसम्बन्ध न होने से सम्बन्ध प्रतियोगी या अनुयोगी भी कोई सिद्ध नहीं होता। जबकि 'क्रियाकारकसम्बन्धनिरूपितप्रतियोगिवाचक शब्द से द्वितीया का विधान होता है। इसीलिए 'कुतोऽध्यागच्छति' स्थल में द्वितीया नहीं होती है।

'कुतोऽध्यागच्छति' वाक्यघटक 'अधि' की कर्मप्रवचनीयसंज्ञा के विधानद्वारा गतिसंज्ञा का बाध होने से निघात नहीं होता है, अर्थात् 'गतिसंज्ञाबाधात् 'गतिर्गतौ' इति निघातो न'।

प्र.— क्रिया के साथ योग होने पर प्रादि की गतिसंज्ञा होती है। 'कुतोऽध्यागच्छति' वाक्यघटक अधि अनर्थक है, अर्थात् क्रियाकारकभावसम्बन्ध का द्योतक भी नहीं है, तथा च क्रियायोग न होने से गतिसंज्ञा की प्राप्ति भी नहीं है, ऐसी स्थिति में 'गतिसंज्ञाबाधाद् निघातो न' कैसे कहा?

उ.— यथा 'अनुभवति' पद से सत्तार्थक भूधातु का अनुभवरूप अर्थ विशेषवाच्य है, इस विशेषता का 'अनु' द्योतक है, तथा 'कुतोऽध्यागच्छति' वाक्यघटक 'अधि' किसी विशेषता का द्योतन नहीं करता, अपितु उसी अर्थ को कहता है, जिसका द्योतक आ (आङ्) है, अत एव किसी विशेषता का द्योतक न होने से 'अधि' को अनर्थक कहते हैं, किन्तु अधि का क्रिया के साथ सम्बन्ध होने मात्र से गतिसंज्ञा की प्राप्ति तो है ही, जिसका कर्मप्रवचनीयसंज्ञा से बाध होता है। अत एव 'गतिसंज्ञाबाधाद् निघातो न' कथन की संगति होती है।

## सुः पूजायाम् ।।१.४.९४।।

**सुसिक्तम्। सुस्तुतम्। अनुपसर्गत्वान्न षः। पूजायां किम्। सुषिक्तं किं तवात्र। क्षेपोऽयम्।।इति कौमुदी।।**

**शे.— सुसिक्तमिति सेकगतपूज्यत्वद्योतकः सुः।। क्रियापूज्यत्वकृते तत्क्रियाकर्त्तुः पूज्यत्वे गम्ये एवैषा संज्ञा। अत एव 'सुषिक्तं किं तव' इत्यत्र न।**

**भैरवी— सुः क्रियापूज्यत्व एव कर्मप्रवचनीय इत्याह—क्रियापूज्यत्वेति।**

सुशब्द की पूजा अर्थ में कर्मप्रवचनीयसंज्ञा होती है। 'सुसिक्तम्' पद का 'बहुत अच्छा सेक किया' और 'सुस्तुतम्' पद का 'बहुत अच्छी स्तुति की' अर्थ है। सेक और स्तुति-क्रियागत-प्रशंसा से कर्त्तृगतप्रशंसा फलित होती है, अर्थात् क्रियागत पूज्यत्व से कर्त्तृगत पूज्यत्व का बोध होता है। प्रकृतशास्त्रद्वारा सुशब्द की पूजा अर्थ में वृत्तिता होने पर कर्मप्रवचनीयसंज्ञा होती है, अत एव किसी व्यक्तिद्वारा अपने क्षेत्र की अच्छी प्रकार से सिंचाई न करने पर, उसके प्रति अन्य व्यक्ति ने व्यङ्ग्य से 'सुषिक्तम्' कहा। इस पर सेककर्त्ता ने उत्तर दिया 'सुषिक्तं किं तवात्र'

अर्थात् हमने सेक अच्छा किया या अच्छा नहीं किया, इसमें तुम्हारे बाप का क्या? प्रकृतस्थल में पूजा अर्थ की प्रतीति न होने से कर्मप्रवचनीयसंज्ञा नहीं हुई, अपितु उपसर्गसंज्ञा होकर षत्वविधानपूर्वक 'सुषिक्तम्' पदोपपत्ति होती है।

**अतिरतिक्रमणे च ।।१.४.९५।।**

**अतिक्रमणे पूजायां चातिः कर्मप्रवचनीयसंज्ञः स्यात्। अति देवान् कृष्णः।।इति कौमुदी।।**

**शे.– अतिक्रमणम्–उचितादधिकानुष्ठानम्। चात्पूजायामित्यनुकृष्यते। अतिदेवानिति-देवेभ्योऽधिको देवपूज्य इति चार्थः। द्वितीये 'कुगति.' (पा.सू. २.२.१८) इति समासस्याभावस्तु अनभिधानात्। आद्ये तु प्राप्तिरेव न, 'स्वती पूजायामेव' इत्युक्तेः।**

अतिक्रमण अर्थद्योतक अति की कर्मप्रवचनीयसंज्ञा होती है। उचित से भी अधिक कार्य करने को अतिक्रमण कहते हैं, अर्थात् जितना कार्य करना उचित है, उससे भी अधिक कार्य करने को अतिक्रमण कहते हैं। यथा—मनुष्य का ६ घण्टे शयन करना उचित कार्य है, इसके स्थान पर यदि वह २० घण्टे शयन करता है, तो यह अतिक्रमण कहलावेगा। चकारात् पूजा अर्थ के द्योतक 'अति' की भी कर्मप्रवचनीयसंज्ञा होती है। भगवान् श्रीकृष्ण देवताओं के भी पूज्य हैं, इत्यर्थक 'अतिदेवान् कृष्णः' पूजा अर्थ में कर्मप्रवचनीयसंज्ञा का उदाहरण है। अथ च देवताओं से भी अधिक श्रीकृष्ण पूजनीय हैं अथवा प्रपञ्चसंरक्षण में श्रीकृष्ण देवताओं से भी बढ़-चढ़ कर हैं, इत्यर्थक 'अतिदेवान् कृष्णः' उदाहरण है।

पूजा अर्थ में वर्तमान अति की कर्मप्रवचनीयसंज्ञाद्वारा गतिसंज्ञा का बाध होने से गतित्वाऽभावात् समास नहीं होता है। यद्यपि प्रादित्वात् 'कुगतिप्रादयः' सूत्रद्वारा प्राप्त समास का 'कर्मप्रवचनीयानां प्रतिषेधः' वार्त्तिकद्वारा निषेध होता है; किन्तु प्रकृतवार्त्तिक भाष्यकारद्वारा प्रत्याख्यात है, अत एव शेखरकार ने अनभिधानात् समासाभाव का उपपादन किया है। अतिक्रमण अर्थ में वर्तमान 'अति' का समास प्राप्त ही नहीं है, यतो हि 'स्वती पूजायाम्' नियमानुसार पूजा अर्थ में ही वर्त्तमान 'अति' के समास का विधान है।

अपिः पदार्थसंभावनाऽन्वसर्गगर्हासमुच्चयेषु ।।१.४.९६।।

एषु द्योत्येष्वपिरुक्तसंज्ञः स्यात्। सर्पिषोऽपि स्यात्। अनुपसर्गत्वान्न षः। संभावनायां लिङ्। तस्या एव विषयभूते भवने कर्तृदौर्लभ्यप्रयुक्तं दौर्लभ्यं द्योतयन्नपिशब्दः स्यादित्यनेन सम्बध्यते। सर्पिष इति षष्ठी तु अपिशब्दबलेन गम्यमानस्य विन्दोरवयवावयविभावसम्बन्धे। इयमेव ह्यपिशब्दस्य पदार्थद्योतकता नाम। द्वितीया तु नेह प्रवर्त्तते। सर्पिषो बिन्दुना योगो न त्वपिना इत्युक्तत्वात्। अपि स्तुयाद्विष्णुम्। संभावनं शक्त्युत्कर्षमाविष्कर्त्तुमत्युक्तिः। अपि स्तुहि। अन्वसर्गः कामचारानुज्ञा। धिग्देवदत्तमपि स्तुयाद् वृषलम्। गर्हा। अपि स्तुहि। अपि सिञ्च। समुच्चये।।इति कौमुदी।।

शे.– पदस्य–अप्रयुज्यमानपदान्तस्यार्थः पदार्थः। सर्पिषोऽपीति अत्र बिन्दुरित्यादेः पदस्यार्थोऽपिद्योत्यः। तदुक्तं वृत्तिकृता 'मात्राबिन्दुस्तोकमित्यस्यार्थेऽपिर्वर्त्तते' इति। संभावनायां लिङिति–'उपसंवादाशङ्कयोश्च' (पा.सू. ३.४.८) इति सूत्रभाष्ये पठितेन 'उपसंवादाशङ्कयोर्लिङि'त्यनेन। तच्च लोकसाधारणमित्यपि तत्रैव भाष्ये स्पष्टम्। तत्राशङ्कोत्प्रेक्षा संभावनात्युत्कटकोटिका शङ्कैवेति भावः। कर्मप्रवचनीयत्वात्तद्-द्योत्यसम्बन्धमाह–तस्या एवेति। संभावनाया एवेत्यर्थः। कर्त्तृदौर्लभ्यमिति षष्ठीतत्पुरुषः। कर्त्तृपदं प्रकृताभिप्रायम्। सर्पिषोऽपि पिबेदित्यादौ कर्मदौर्लभ्येत्यादि बोध्यम्। तत्र बिन्दोस्तद्दौर्लभ्यप्रयुक्तदौर्लभ्यसम्बन्धस्य द्योतकोऽपिः। सम्बध्यत इति–स्यात्पदवाच्यक्रियायामपिद्योत्यबिन्दोः कर्त्तृतया द्योत्योक्तसम्बन्धेन चान्वयादिति भावः। तदाह–अपिशब्दबलेनेत्यादि। एवञ्च सर्पिरवयवबिन्दुदौर्लभ्यप्रयुक्तदौर्लभ्यवती तत्कर्तृका संभावनाविषया सत्तेति बोधः। विशिष्टसत्तायाः संभावनाविषयत्वबोधे दौर्लभ्यस्यापि संभावनाविषयत्वमनुभवसिद्धम्। नन्वेवं कर्मप्रवचनीयद्योत्येऽर्थे सर्पिषोऽन्वयेन तस्य कर्मप्रवचनीययुक्तत्वाद् वा द्वितीया स्यादत आह– द्वितीया त्विति। न त्वपिनेति–बिन्दुना योगेऽप्यपिद्योत्यसम्बन्धेनान्वय इत्यर्थः। कर्मप्रवचनीयद्योत्यसम्बन्ध-प्रतियोगित्वमेव तद्युक्तत्वम्। प्रकृते चापिद्योत्यस्योक्तसम्बन्धस्य बिन्दुः प्रतियोगी, न सर्पिरिति भावः। यदा स्पष्टप्रतिपत्तयेऽपिद्योत्यस्यापि बिन्दोः प्रयोगस्तदापि द्वितीयां बाधित्वोपपदविभक्तेरिति प्रथमैव। तत्र

कारकविभक्तित्वं क्रियाजनकत्वार्थकविभक्तिकत्वमिति दिक्। संज्ञाफलमाह–अनुपसर्गत्वादिति। अपि स्तुयादिति। पूर्ववल्लिङ्। क्रियाविषयं शक्यत्वादिना सम्भावनमपिद्योत्यम्। प्रकृते अवाङ्मनसगोचरं विष्णुमपि स्तुयादिति शक्त्युत्कर्षाविष्करणम्। अत्युक्तिरसम्भाव्यार्थ-सम्भावनम्। सम्भावनपदस्येदृशार्थकत्वे व्याख्यानमेव शरणम्। विष्णुविषयायाः शक्यत्वसम्भावना सा चान्यविषयानिश्चयेन शक्याकर्तुमिति फलति। शक्त्युत्कर्षमित्यौचित्योत्कर्षादेरप्युपलक्षणम्। 'अपि वेदान्तपारगं हन्यात्' इत्यादौ हननक्रियायां सम्भावनाविषयौचित्योत्कर्षद्योतनात् सम्भावितौचित्यस्य चानुष्ठानमयुक्तमिति अस्य स्वार्थे तात्पर्याभावो धर्मशास्त्रोक्तः सङ्गच्छते। कामचारः–इच्छया प्रवृत्तिः। स्तुहि मा वा यथेष्टं कुर्विति यावत्। 'प्रैषातिसर्गा.' (पा.सू. ३.३.१६३) इति लोट्। अपि स्तुयाद् वृषलमिति–'उपसंवाद.' (पा.सू. ३.४.८) इति सूत्रपठितवार्त्तिकेन परेणान्तरङ्गेण च 'गर्हायां लडपि' (पा.सू. ३.३.४२) इति बाधित्वा सम्भावने लिङ्, क्रियागतं गर्ह्यत्वमपिद्योत्यं वृषलपदसमभिव्याहारात् स्तुतेर्गर्ह्यत्वे फलति। तदेव धिगित्यादिनाऽनूद्यते। अपि सिञ्चेत्यादि–अपि द्वयेन मिलितेन समुच्चयद्योतनात् प्रत्येकं सञ्ज्ञायामुभयत्रापि षत्वाभावः।

भैरवी– सर्वेषामेव पदार्थत्वात् पदार्थ इत्यव्यावर्त्तकमत आह–पदस्येत्यादि। एतेन यस्याप्रयुज्यमानपदस्यार्थोऽपिना द्योत्यते तस्य पदस्याध्याहारोऽपि-शब्दबलादिति कथ्यते। ननु 'संभावनायां लिङ्' इत्यसङ्गतं तादृशसूत्राभावादत आह–उपसंवादेति। अत्र 'यत्कर्मप्रवचनीययुक्तन्नादः प्रयुज्यते' इति भाष्यादप्रयुज्यमानस्येति लब्धम्। दौर्लभ्यप्रयुक्तदौर्लभ्यञ्च सम्बन्धः सोऽपिद्योत्य एव। तदेतदुक्तम्–कर्तृदौर्लभ्यप्रयुक्तं दौर्लभ्यन्द्योतयन्निति। प्रकृताभिप्रायमिति–एवञ्च कर्तृपदं कारकपरम् 'सर्पिषः' इत्यत्र धातोरकर्मकत्वात् कर्मणोऽसम्भवात् कर्तृपदमेवोपात्तम्। क्रियाविषयमिति–स्तुतिक्रियाविषयमित्यर्थः। अपि स्तुयादिति शब्दाद् विष्णुकर्मिका एतत्कर्तृका शक्यत्वेन सम्भाव्यमाना स्तुतिरिति शाब्दबोधः। शक्त्युत्कर्षाविष्करणम्–शक्त्युत्कर्षस्य व्यञ्जनया बोधनम्। 'अपि वेदान्तपारगम्' इत्यादिशब्दाद् वेदान्तपारगकर्मकमेककर्तृकमुचितं हननं सम्भावनाविषय इति बोधे सम्भावनाविषयक्रियायामौचित्योत्कर्षबोधे औचित्ये संभावितत्वं व्यञ्जनया प्रतीयते। यत्क्रियायामौचित्यन्निश्चितन्तस्या

**अनुष्ठानमेव। यत्र तु वाक्येऽपि पदन्न श्रूयते अथ च तत्क्रियाया अनुष्ठानमेव तात्पर्यविषयस्तत्रापिशब्दाध्याहारः। तद्यथा–**

**विष्णोर्नाम न गृह्णीयान्न स्पृशेत्तुलसीदलम्।**
**परनिन्दा न कर्त्तव्या परचिन्ता कदाचन।।इति।।**

**ननु 'गर्हायां लडपि' इति सूत्रस्य सर्वबाधकतया 'अपि स्तुयाद् वृषलम्' इत्यत्र कथं लिङित्यत आह–उपसंवादेति। वार्त्तिकेन– 'उपसम्वादाशङ्कयोर्लिङ्' इत्यनेन। तत्कर्त्तुरिति-वृषलस्तुतिकर्त्तुरित्यर्थः। ननु धिक्शब्दस्य निन्दाप्रतीत्यर्थं प्रयोगः। सा चेद् वृषलपदसमभिव्याहारादेव प्रतीयेत तदा धिक्शब्दप्रयोगो व्यर्थोऽत आह–तदेवेति।**

प्रकृतसूत्रद्वारा पदार्थ, संभावना, अन्वसर्ग, गर्हा और समुच्चय अर्थ के द्योतक अपि की कर्मप्रवचनीयसंज्ञा का विधान होता है। यथा 'देवदत्तः अपि गच्छति' वाक्यघटक अपि के द्वारा गम्धात्वर्थ गमन का द्योतन होता है, अर्थात् अपदार्थ का द्योतन नहीं होता, अपितु पदार्थ का ही सर्वत्र द्योतन होता है। संभावना, अन्वसर्ग, गर्हा और समुच्चय सभी तो पदार्थ हैं, अतः 'अपि संभावनान्वसर्गगर्हासमुच्चयेषु' एतावन्मात्र सूत्रोपदेश करने से ही गर्हादि अर्थद्योतक अपि की कर्मप्रवचनीयसंज्ञा का विधान सम्भव है। पृथक् पदार्थशब्दोपदेश व्यर्थ है, व्यर्थ होकर ज्ञापन करता है, कि 'अविद्यमानपदार्थद्योतक अपि की भी कर्मप्रवचनीयसंज्ञा होती है'। यथा—किसी ने अपने मित्र से प्रश्न किया, कि 'आप इतने दुर्बल क्यों हो रहे हैं'? इसके प्रत्युत्तर में मित्र ने 'घृत का बिन्दु भी नहीं मिलता, स्वस्थ कहाँ से रहें'? इत्यर्थवाग्विवक्षा से 'सर्पिषोऽपि स्यात्' वाक्य कहा। जिसका 'सर्पिषो बिन्दुरपि स्यात्' अभिप्राय है, अर्थात् सर्पिःशब्द का 'सर्पिष् का बिन्दु' अर्थ किया। 'सर्पिषोऽपि स्यात्' वाक्य में बिन्दुपद अविद्यमान है, जिसका अपिपद द्योतन करता है, अत एव अपि की कर्मप्रवचनीयसंज्ञा होती है।

प्र.—'स्यात्' पद की लिङ्लकार में उपपत्ति होती है, अथ च 'विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्' शास्त्रद्वारा विध्यादि अर्थों में लिङ्लकार का विधान होता है, 'संभावनायां लिङ्' कैसे कहा?

उ.— विध्यादि अर्थों से अतिरिक्त स्थल में भी 'उपसंवादाशङ्कयोश्च' सूत्रपठित 'उपसंवादाशङ्कयोर्लिङ्' वार्त्तिकद्वारा संभावना अर्थ में लिङ्लकार होता है। आशङ्कापद का संभावना अर्थ है, अथ च भविष्यज्ञान को संभावना कहते हैं। ऐसा हो सकता है या नहीं? इत्याकारिका उत्प्रेक्षा को शङ्का कहते हैं, अथ च उत्कटकोटि की शङ्का को आशङ्का अर्थात् संभावना कहते हैं। यथा—रामवीर तो सिर से भी पर्वत का भेदन कर सकता है—'अपि शिरसा गिरिं भिन्द्यात्'।

प्र.— 'उपसंवादाशङ्कयोश्च' सूत्र तो छन्दोमात्रविषयक है, अतः एतच्छास्त्रोपदिष्ट 'उपसंवादाशङ्कयोर्लिङ्' वार्त्तिकद्वारा 'सर्पिषोऽपि स्यात्' इस लौकिकवाक्य में लिङ्लकार का विधान असंभव है?

उ.— 'उपसंवादाशङ्कयोर्लिङ्' वार्त्तिक की लोकवेदोभयसाधारण प्रवृत्ति होने से 'सर्पिषोऽपि स्यात्' इस लौकिकवाक्य में भी प्रकृतवार्त्तिकद्वारा लिङ्लकार का विधान होता है। 'सर्पिषोऽपि स्यात्' वाक्यद्वारा 'घृत का बिन्दु भी होता तो मैं स्वस्थ होता' इत्याकारिका उत्कटकोटि की आशङ्का होने से संभावना की प्रतीति होती है। संभावना का विषय बिन्दु और बिन्दुसत्ता दोनों ही होते हैं, यतो हि सर्पिस् की सत्ता का कर्त्ता बिन्दु है। जहाँ कर्त्ता ही नहीं है, वहाँ तत्कर्तृका सत्ता भी नहीं रहेगी। बिन्दु का दौर्लभ्यत्वसम्बन्ध से स्यात् क्रिया में अन्वय है। बिन्दुकर्त्ता और स्यात्-क्रिया के परस्पर दौर्लभ्यत्वसम्बन्धद्योतक 'अपि' की कर्मप्रवचनीयसंज्ञा होती है। 'यदि कर्त्ता होता' इस संभावना के विषय बिन्दु और सत्ता दोनों होते हैं, अत एव 'कर्त्तुः दौर्लभ्यम्' विग्रहपूर्वक षष्ठीसमास सिद्ध होता है, अर्थात् 'कर्त्ता का जो दौर्लभ्य तत्प्रयुक्त कर्त्ता की सत्ता का दौर्लभ्य है। 'सर्पिषोऽपि स्यात्' वाक्य से बिन्दुरूप कर्त्ता की संभावना का अभाव लिया जाता है। यद्यपि 'सर्पिषोऽपि पिब' वाक्य से भी बिन्दु की संभावना का अभाव ही द्योतित होता है; किन्तु प्रकृतस्थल में बिन्दुरूप कर्म की संभावना का अभाव द्योतित होता है, अर्थात् बिन्दु कहीं पर कर्त्ता और कहीं कर्मादि भी हो सकता है, इसीलिए 'कर्त्तृपदं प्रकृताभिप्रायम्' कहा है।

'सर्पिषोऽपि स्यात्' वाक्यघटक स्यात्पदवाच्य सत्ताक्रिया में अपिद्योत्य बिन्दुकर्तृकदौर्लभ्यप्रयुक्तदौर्लभ्य सम्बन्ध से अन्वय है, अथ च 'सर्पिषः' इति षष्ठ्यन्त पद के अर्थ का अपिद्योत्यसम्बन्धैकदेश बिन्दु के साथ

अवयवावयविभावसम्बन्ध से अन्वय होता है, अत एव 'सर्पिषोऽपि स्यात्' वाक्य से 'सर्पिरवयवबिन्दुदौर्लभ्यप्रयुक्तदौर्लभ्यवती बिन्दुकर्तृका संभावना-विषयिणी सत्ता' इत्याकारिका बोधोपपत्ति होती है। कर्तृदौर्लभ्य-प्रयुक्तदौर्लभ्यविशिष्टसत्ता की संभावना कहने पर संभावना का विषय यथा कर्त्ता और कर्त्तृसत्ता होते हैं, तथैव दौर्लभ्य भी संभावना का विषय बनता है।

प्र.— अपिद्योत्य अर्थ का सर्पि:पदार्थ के साथ योग स्वीकार करने से 'कर्मप्रवचनीययुक्ते द्वितीया' सूत्रद्वारा सर्पिष्प्रातिपदिक से द्वितीयाविधान होना चाहिए?

उ.— 'द्वितीया तु नेह प्रवर्त्तते, 'सर्पिषो बिन्दुना योगो न त्वपिना' अर्थात् सर्पिष् का अपिद्योत्यबिन्दु के साथ अवयवावयविभावसम्बन्ध से अन्वय है। अथ च अपिद्योत्यबिन्दु का दौर्लभ्य-सम्बन्ध से सत्ताक्रिया में अन्वय है। अपि के साथ सर्पिष् का योग न होने से सर्पिष्प्रातिपदिक से द्वितीया-विभक्ति नहीं आती है।

प्र.— सर्पिष् का अपि के साथ सम्बन्ध नहीं है, अत एव सर्पिष्शब्द से द्वितीया का विधान नहीं हुआ, किन्तु बिन्दुशब्द के साथ तो अपि का योग है, अत: बिन्दुशब्द से द्वितीयाविभक्ति आनी चाहिए?

उ.— यद्यपि बिन्दु का अपि के साथ योग है, अर्थात् अपिद्योत्य सम्बन्ध का प्रतियोगी बिन्दु है, अथ च कर्मप्रवचनीयद्योत्य सम्बन्ध के प्रतियोगी से द्वितीयाविभक्ति का विधान होता है, अत एव बिन्दु से द्वितीया आनी चाहिए, किन्तु बिन्दुशब्द 'सर्पिषोऽपि स्यात्' वाक्य में समुच्चरित नहीं है, अत एव बिन्दुशब्द से द्वितीया नहीं होती है।

प्र.— ठीक है, कर्मप्रवचनीयद्योत्य सम्बन्ध के प्रतियोगी बिन्दु का उच्चारण न होने से द्वितीया नहीं हुई, किन्तु प्रतियोगी बिन्दु के उपदेश करने पर तो द्वितीया होनी चाहिए?

उ.— 'सर्पिषो बिन्दुरपि स्यात्' वाक्योच्चरित बिन्दुशब्द का कर्मप्रवचनीय के साथ योग होने से द्वितीया प्राप्त है, अथ च स्यात् क्रियानिरूपित कर्त्ता होने से प्रथमा प्राप्त है। द्वितीया का कर्मप्रवचनीय के योग में विधान होने से उपपदविभक्ति है और 'स्यात्' क्रियान्वयित्वेन प्राप्त प्रथमा

कारकविभक्ति है, अत एव 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' नियमानुसार द्वितीया का बाध होकर प्रथमाविभक्ति होती है।

'सर्पिषोऽपि स्यात्' वाक्यघटक अपि की कर्मप्रवचनीयसंज्ञा होने से 'स्यात्' के सकार को षत्व नहीं होता है। इसी प्रकार 'अपि स्तुयाद् विष्णुम्' वाक्यघटक अपि की कर्मप्रवचनीयसंज्ञा होने से 'स्तुयाद्' के सकार को षत्व नहीं होता है, अथ च 'विष्णुम्' इत्यत्र कर्मप्रवचनीययोग में द्वितीया होती है। 'अपि स्तुयाद् विष्णुम्' स्थल में संभावनाद्योतक 'अपि' है, अथ च 'सर्पिषोऽपि स्यात्' स्थल में संभावनाविषयदौर्लभ्यद्योतक 'अपि' है। भगवान् विष्णु के अनन्तानन्त गुण हैं, अनन्तानन्त क्रियाएँ हैं, जिनकी स्तुति शेषनाग भी नहीं कर सकते। उनकी स्तुति यह कवि कर सकता है। 'अपि स्तुयाद् विष्णुम्' स्थल में 'संभावनेऽलमिति चेत् सिद्धाप्रयोगे' सूत्रद्वारा संभावना अर्थ में लिङ्लकार का विधान होता है। अतः क्रिया का विषय संभावना है और संभावना का विषय स्तुति है, इस संभावना का द्योतक अपि है। अत्युत्कृष्ट कोटि की आशङ्का को संभावना कहते हैं। असंभव को संभव करना संभावना कहलाता है। 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह', मनसमेत वाणी के अविषय विष्णु की स्तुति अर्थात् अत्युत्कट कोटि की विष्णुविषयक स्तुति की संभावना अपिद्योत्य है और साधारणसंभावना लिङर्थ है। कवि या लेखक के लिखने रूप व्याख्यान से असंभव को संभव करना स्वीकार करते हैं। यह कवि जब भगवान् विष्णु की भी स्तुति कर सकता है, तो अन्य की स्तुति तो सुतरां कर ही सकता है।

शक्त्युत्कर्ष औचित्योत्कर्ष का भी उपलक्षण है, अत एव औचित्योत्कर्षद्योतक अपि की भी कर्मप्रवचनीयसंज्ञा होती है। यथा—'अपि वेदान्तपारगं हन्यात्' आततायी यदि वेदान्तपारङ्गत हो तो उसे भी मारो। जब वेदान्तपारङ्गत आततायी भी वध्य है, तो तदतिरिक्त आततायी तो अवश्य ही वध्य है। प्रकृतवाक्य का वेदान्तपारग आततायी के हनन में तात्पर्य न होकर तदतिरिक्त के वध में विनियोग है, अत एव वेदान्तपारङ्गत के धर्मशास्त्रोक्त मारणाभाव की संगति होती है, कामचारानुज्ञा को अन्वसर्ग कहते हैं। यथा 'अपि स्तुहि', अर्थात् जैसी इच्छा हो वैसा करो। यदि स्तुति करने की इच्छा है, तो स्तुति करो, यदि स्तुति करने की इच्छा नहीं है,

तो मत करो। प्रकृतस्थल में 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च' शास्त्रद्वारा लोट्लकार का विधान होता है।

क्रियागतगर्हा 'अपि' द्वारा द्योतित होने पर क्रियाकारकसम्बन्ध के प्रतियोगी की कर्मप्रवचनीयसंज्ञा होती है, यथा 'अपि स्तुयाद् वृषलम्' अर्थात् यह तो ऐसा नीच है, कि वृषल की भी स्तुति कर सकता है। प्रकृतस्थल में 'गर्हायां लडपिजात्वोः' (पा.सू. ३.३.४२) शास्त्रद्वारा प्राप्त लट्-लकार का 'उपसंवादाशङ्कयोश्च' (पा.सू. ३.४.८) शास्त्रोक्त 'संभावनायां लिङ्' वार्त्तिकद्वारा अन्तरङ्गत्व और परत्व हेतुओं से बाध होने से लिङ्लकार का विधान होता है। 'गर्हायां लडपिजात्वोः' सूत्र की अपि और जातु पदों के योग में प्रवृत्ति होने से बहिरङ्ग कहलाता है। अपिद्योत्य क्रियागत गर्हा वृषलादिपद का समभिव्याहार होने से स्तुति की गर्हा मानी जाती है। 'धिग्देवदत्तम्, अपि स्तुयाद् वृषलम्' वाक्यघटक धिक्पद से इसी गर्हा का अनुवाद है।

समुच्चय अर्थ 'अपि' द्वारा द्योतित होने पर क्रियाकारकसम्बन्ध प्रतियोगी की कर्मप्रवचनीयसंज्ञा होती है, यथा—'अपि सिञ्च अपि स्तुहि' कर्मप्रवचनीयसंज्ञा होने से षत्व नहीं होता है।

### कालाध्वनोरत्यन्तसंयोगे ।।२.३.५।।

**इह द्वितीया स्यात्। मासं कल्याणी। मासमधीते। मासं गुडधानाः। क्रोशं कुटिला नदी। क्रोशमधीते। क्रोशं गिरिः। अत्यन्तसंयोगे किम्–मासस्य द्विरधीते। क्रोशस्यैकदेशे पर्वतः।।इति कौमुदी।।**

**शे.– अत्यन्तसंयोगो निरन्तरसम्बन्धः। स च गुणक्रियाद्रव्यैरभावेन च तेन मासं भोजनाभाव इत्यादेः सङ्ग्रहः। गुणादिभिः कालाध्वनोरत्यन्तसंयोगे प्रत्यासत्त्या कालाध्ववृत्तिभ्यां द्वितीयेत्यर्थः। मासमधीत इति–बुद्धिस्थयावदवयवसम्बन्धरूपा व्याप्तिर्द्वितीयार्थः। 'एकादश्यां रात्रौ जागृयात्' इत्यादावधिकरणविवक्षणान्न द्वितीया।**

**भैरवी– निरन्तरसम्बन्धः–व्याप्तिरूपः। स च किन्निष्ठ इत्याकाङ्क्षायामाह–स चेति। नन्वेवं गुणादिभिरत्यन्तसंयोगे द्वितीयेति समुदायान्यतमे कालाध्वनिष्ठव्याप्यतानिरूपितव्यापकतायां विवक्षितायां द्वितीयेत्यस्य लाभेऽपि द्वितीयाप्रकृत्यलाभ इत्यत आह–प्रत्यासत्येति। ननु**

**यत्रैकमासव्यापकं गणेशस्तोत्राध्ययनं तत्र मासमधीते गणेशस्तोत्रमिति न स्यान्मासान्तरे ततूस्तोत्राध्ययनस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिव्यधिकरणाभावस्य सत्त्वादत आह–बुद्धिस्थयावदवयवेति। अवयवो दिनादिरूपः। एवञ्च 'मासमधीते' इत्यत्र मास-पदं बुद्धिस्थतत्तन्मासपरं तदवयवयावद्दिननिष्ठव्याप्यतानिरूपितव्यापकता यत्र तत्रैव तादृशः प्रयोगः। मासपदञ्च त्रिंशद्दिनसमुदायपरम्। दिनपदञ्चैकसूर्योदयावधिकापरसूर्योदयपर्यन्तस्थिताखण्डजन्यद्रव्यपरम्। न तु षष्टिघटीसमुदायो दिनपदार्थः। यत्र प्रत्यहमेकघट्यां गणेशस्तोत्राध्ययनं तत्रापि घट्यन्तरेऽध्ययनस्याभावसत्त्वेन 'मासमधीते' इति प्रयोगानुपपत्तेः। मासनिष्ठा व्याप्यता च तादात्म्यसम्बन्धावच्छिन्ना। व्यापकता तु कालिकसम्बन्धावच्छिन्ना। व्यापकताघटकाभावश्च प्रतियोगिव्यधिकरणो विवक्षितः। अत एव तन्मासावयवदिनेऽपि यद्घट्यवच्छेदेन नाध्ययनं तदवच्छेदेन कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाऽध्ययनाभावस्य सत्त्वेऽपि 'न मासमधीते' इति प्रयोगानुपपत्तिः।**

**'एकादश्यां रात्रौ जागृयात्' इत्यत्र द्वितीयातिप्रसङ्गन्निराचष्टे– एकादश्यामिति। न चैवमपि 'एकादश्यां नान्नं भुञ्जीत' इति यत्रोच्यते तत्रैकादशीव्यापकस्य भोजनाभावस्य तात्पर्यविषयत्वाद् द्वितीयापत्तिरिति वाच्यम्। तादृशतात्पर्ये त्वेकादशीन्न भुञ्जीतेत्येव प्रयोगात्। प्रकृते त्वेकादशीरूपस्य कालस्य भोजनाभावाधिकरणत्वविवक्षैव। स चाभावः प्रतियोगिव्यधिकरण एव विवक्षितोऽतो नानुपपत्तिः। न च 'मासमधीते' इत्यत्र धातोरध्ययनपूर्वकव्यापने वृत्तिकल्पनया कर्त्तुरित्येव कर्मत्वं सिद्धमिति 'कालाध्वनोः' इति सूत्रवैयर्थ्यमिति वाच्यम्। 'मासन्देवदत्तस्य' 'कौटिल्यम्भोजनाभावश्च' इति यत्र प्रयोगस्तदर्थमस्यावश्यकत्वात् 'मासस्य द्विरधीते' इति यत्र प्रयोगस्तत्र मासव्यापकत्वनिवृत्तावेव तात्पर्यं न तु मासाधिकरणत्वनिवृत्ताविति 'कृत्वोऽर्थप्रयोगे' इति सूत्रेण षष्ठ्येव न त्वनेन द्वितीयेति बोध्यम्।**

प्रकृतसूत्रद्वारा गुण, क्रिया और द्रव्य के साथ काल और अध्वा का अत्यन्तसंयोग गम्यमान होने पर काल और अध्ववाचक शब्दों से द्वितीया होती है। यथा 'मासमुपवसति' स्थल में मासभर उपवास किया, अर्थात् भोजनाभाव और मास का निरन्तर संयोग है, अत एव मासशब्द से द्वितीया होकर 'मासमुपवसति' प्रयोगोपपत्ति होती है।

प्र.— काल और अध्वा का गुण, क्रिया अथवा द्रव्य के साथ अत्यन्तसंयोग होने पर द्वितीयाविभक्ति का विधान होता है, यह द्वितीया किससे आवे? काल या अध्ववाचक से अथवा द्रव्य, गुण या क्रियावाचक शब्दों से?

उ.— गुण, क्रिया एवं द्रव्य का काल अथवा अध्वा के साथ अत्यन्तसंयोग होने पर द्वितीया किससे आवे? इस आकांक्षा में प्रत्यासत्त्या 'कालाध्वनोः' पद की उपस्थिति होती है, अतः उपस्थितत्वात् काल और अध्ववाचक शब्दों से ही द्वितीयाविभक्ति का विधान होता है।

व्यवधानरहितसंयोग (निरन्तरसंयोग) को अत्यन्तसंयोग कहते हैं। 'मासमधीते' स्थल में मासभर = दिन-रात, शौचादिकार्य के समय तो मास का अध्ययन के साथ निरन्तर सम्बन्ध है नहीं, तथापि मासभर कुछ समयपर्यन्त आज और कुछ समयपर्यन्त अन्य दिन। इस प्रकार बुद्धिस्थ अवयवरूपा अध्ययनक्रिया का मास के साथ निरन्तर सम्बन्ध होने के कारण कालवाचक मासशब्द से द्वितीयाविभक्ति का विधान होता है।

प्र.— 'एकादशी को रातभर जागता है' इत्यर्थवाग्विवक्षा में जागरणक्रिया के साथ कालवाचक रात्रि का अत्यन्तसंयोग होने से कालवाचक रात्रिशब्द से द्वितीयाविभक्ति का विधान होना चाहिए?

उ.— 'एकादश्यां रात्रौ जागृयात्' वाक्यघटक कालवाचक रात्रि की अधिकरणतया विवक्षा करने से 'विवक्षातः कारकाणि भवन्ति' नियमानुसार अत्यन्तसंयोग होने पर भी रात्रिशब्द से सप्तमीविभक्ति होती है।

**।।इति द्वितीया-विभक्तिः।।**

## अथ तृतीया-विभक्तिः

### स्वतन्त्रः कर्त्ता ।।१.४.५४।।

क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्त्ता स्यात्।।इति कौमुदी।।

शे.– कारकाधिकारात् क्रियाजनने स्वतन्त्र इत्यर्थः। तदाह–क्रियायामिति। स्वातन्त्र्यञ्च कर्तृप्रत्ययसमभिव्याहारे प्रधानीभूतधात्वर्थाश्रयत्वम्। पक्वस्तण्डुलो देवदत्तेनेत्यत्र फलस्य प्राधान्येऽपि देवदत्तस्य कर्तृत्वसिद्धये कर्तृप्रत्ययसमभिव्याहारे इति। णिचस्तु वाचकत्वमेव। अतस्तत्र ण्यन्तधातुतत्प्रकृतिधातु–एतदुभयवाच्यव्यापारयोः स्वस्वार्थं प्रति प्राधान्यात् 'देवदत्तेन यज्ञदत्तः पाचयति' इत्यादौ प्रयोज्यव्यापाराश्रयस्यापि कर्तृत्वसिद्धिः। द्योतकत्वे तु नैतत् सिध्येत्। 'कारके' (पा.सू. १.४.२३) इति सूत्रभाष्यात् स्वक्रियाकारकप्रवर्त्तकत्वं स्वातन्त्र्यमिति लभ्यते प्रकृतसूत्रभाष्याच्चेति मञ्जूषायां निरूपितम्।

भैरवी– अत्र स्वतन्त्रमन्यानधीनव्यापाराश्रयपरम्। स च व्यापारो न शब्दवाच्यः, किन्तु कारकाधिकारादुपस्थितक्रियारूप इत्याह–कारकाधिकारादिति। इदं ण्यन्तेऽप्यस्तीत्याह–क्रियाजनने इति। तत्र प्रयोज्यनिष्ठव्यापारात्मक-क्रियाजनने प्रयोजकः स्वतन्त्र एव। किन्तत् स्वातन्त्र्यमत आह–स्वातन्त्र्यञ्चेति। प्रधानीभूतेति–अत्र प्राधान्यञ्च तद्धात्वर्थनिष्ठ-विशेष्यतानिरूपितप्रकारतानाश्रयधात्वर्थत्वम्। एतादृशस्य स्वातन्त्र्यस्य विवक्षितत्वात् 'काष्ठम्पचति' इत्यत्र काष्ठस्य कर्तृतोपपत्तिः। धात्वर्थाश्रयत्वञ्च व्यापारतावच्छेदकसम्बन्धेन। तेन न कालिक-सम्बन्धमादायातिप्रसङ्गः। कर्तृप्रत्ययसमभिव्याहारे इतीति–अस्य च कर्तृप्रत्ययसमभिव्याहारे यः प्राधान्येन दृष्ट इत्यर्थोऽभिप्रेतः। एतेन कर्तृप्रत्ययसमभिव्याहारे प्राधान्यं यद्यपि कर्तृव्यापारस्य तथापि कर्मप्रत्ययसमभिव्याहारे फलस्यैव प्राधान्यात्तत्र 'देवदत्तेन पच्यते तण्डुलः' इत्यादौ देवदत्तादेः कर्तृत्वन्न स्यादिति शङ्काया नावकाशः। यद्यपि धातोः फलावच्छिन्नव्यापारे व्यापारावच्छिन्नफले वा शक्तिस्तथापि तत्तत्प्रत्ययसमभिव्याहाररूपतात्पर्यग्राहकवशाद्यत्र कर्मणि विहित-प्रत्ययसमभिव्याहारस्तत्र व्यापारावच्छिन्नफलस्यैव धातुनोपस्थितिः।

**णिजन्ते प्रयोज्यस्य कर्तृतोपपत्तये आह–णिचस्त्विति। वाचकत्वमेवेति। न तु द्योतकत्वमिति शेषः। तथात्वे द्योत्यार्थस्य विशेषणत्वात् प्रयोज्यव्यापारस्य प्राधान्यापत्तौ 'गुरुः शिष्येण पाचयति' इति यत्र प्रयोग इष्यते, तत्र शिष्यो गुरुणा पाचयतीत्यादिप्रयोगापत्तेः। 'पच्यते तण्डुलः स्वयमेव' इति यत्र प्रयोगस्तत्र यद्यपि फलमेव धात्वर्थस्तथापि तत्र व्यापारत्वारोपः। अन्तर्भावितण्यर्थतायाम्प्रयोज्यस्य कर्मत्वमकथितञ्चेति सूत्रव्याख्यानावसरे उपपादितमेव। कारक इति सूत्रभाष्यादिति। तत्र ह्येवमुक्तम्– 'प्रधानसमवाये स्थाली परतन्त्राव्यवाये स्वतन्त्रा। किम्पुनः प्रधानम्? कर्त्ता। कथं ज्ञायते कर्त्ता प्रधानमिति? यत्सर्वेषु कारकेषु सन्निहितेषु कर्त्ता प्रवर्त्तयिता भवति' इति। ततः 'प्रयोज्यस्यास्वतन्त्रत्वात् कर्तृसंज्ञा न प्राप्नोति' इति पूर्वपक्षे तस्यापि स्वेच्छाधीनप्रवृत्तिकत्वात् स्वातन्त्र्यं साधितम्। प्रकृतसूत्रेऽपि 'तन्त्रशब्दस्य प्रधानवाचकत्वमस्ति प्राधान्ये वर्त्तते स्वतन्त्रोऽसौ ब्राह्मण इत्युच्यते स्वप्रधान इति गम्यते तद्यः प्राधान्ये वर्त्तते तन्त्र शब्दः 'तस्येदं ग्रहणम्' इत्युक्तम्। स्वशब्द आत्मवाची। स्व आत्मा तन्त्रं प्रधानं यस्य स स्वतन्त्रः।**

प्रकृतशास्त्र 'कारके' इत्यधिकारान्तर्गत होने के कारण 'क्रिया में स्वतन्त्रतया विवक्षित अर्थ की कर्त्तृसंज्ञा होती है' इत्यर्थोपपत्ति होती है। यथा—'देवदत्त इन्धनेन स्थाल्यामोदनं पचति' वाक्यघटक देवदत्त को प्रधान मानने से कर्तृसंज्ञा होती है। पच्धातु का धारणानुकूलव्यापार अर्थस्वीकृतिपूर्वक धात्वर्थक्रिया के प्रति स्थाली की स्वतन्त्रतया विवक्षा (स्थाली ओदन को कहती है, कि यदि हम तुम्हारा धारण न करें, तो तुम्हारा पाक संभव नहीं, अर्थात् स्थाली ओदन को पका रही है, इत्याकारिका विवक्षा करने पर स्थाली की कर्त्तृसंज्ञा होती है। इसी प्रकार 'इन्धनं पचति' इत्यादि वाक्योपपत्ति होती है। अर्थात् क्रियाजनकों में जिसकी स्वातन्त्र्येण विवक्षा करेंगे, उसकी कर्तृसंज्ञा होती है। कर्तृप्रत्ययसमभिव्याहारस्थल में धात्वर्थ-प्रधानीभूतव्यापाराश्रय को स्वतन्त्र कहते हैं, क्रियाजनकों में जिसकी स्वातन्त्र्येण विवक्षा करते हैं, उसी का व्यापार प्रधानीभूतव्यापार कहलाता है।

प्र.— 'पक्वस्तण्डुलो देवदत्तेन' वाक्य का नैयायिकानुसारेण 'देवदत्तवृत्ति-व्यापारजन्यविक्लित्त्याश्रयस्तण्डुलः', अथ च नव्यवैयाकरणमतानुसार

'देवदत्तवृत्तिव्यापारजन्या तण्डुलनिष्ठा विक्लित्तिः' बोध होता है। इस प्रकार प्रधानीभूतव्यापाराश्रय तण्डुल की कर्त्तृसंज्ञा होनी चाहिए?

उ.— कर्मप्रत्ययस्थल में प्रधानीभूतव्यापाराश्रय तण्डुल की कर्त्तृसंज्ञा न हो इसीलिए 'कर्त्तृप्रत्ययसमभिव्याहारे' कहा है। कर्त्तृप्रत्ययसमभिव्याहारस्थल में 'देवदत्तः पचति' वाक्यघटक पच्धात्वर्थप्रधानीभूतव्यापाराश्रय देवदत्त है, न कि तण्डुल, अतः देवदत्त की कर्त्तृसंज्ञा होती है, तण्डुल की कर्त्तृसंज्ञा नहीं होती है।

प्र.— आप कर्त्तृप्रत्ययसमभिव्याहारस्थल में धात्वर्थप्रधानीभूतव्यापाराश्रय की कर्त्तृसंज्ञा करते हैं। तथा च 'यज्ञदत्तः देवदत्तेन ओदनं पाचयति' वाक्यघटक यज्ञदत्त और देवदत्त दोनों की कर्त्तृसंज्ञा असंभव है, यतो हि ण्यन्त पाचिधातु का विक्लित्त्यनुकूलव्यापारानुकूलव्यापार अर्थ है। प्रकृतस्थल में जो प्रधानीभूतव्यापार है, वह धात्वर्थ नहीं, यतो हि गणोपदिष्ट धातु पच् है, अथ च गणोपदिष्ट पच्धात्वर्थव्यापार यहाँ प्रधान नहीं है?

उ.— ण्यन्तस्थल में णिच् वाचक है, अर्थात् ण्यन्त-पाचि वाचक है, 'सनाद्यन्ता धातवः' सूत्रद्वारा उसकी धातुसंज्ञा होती है, अथ च गणोपदिष्ट होने से पच् भी धातुसंज्ञक है, अत एव ण्यन्तपाचिधात्वर्थप्रधानीभूतव्यापाराश्रय तथा अण्यन्तपच्धात्वर्थप्रधानीभूतव्यापाराश्रय दोनों की ही कर्त्तृसंज्ञा सिद्ध होती है। अर्थात् ण्यन्तपाचि और णिच्प्रकृति पच्धातु उभयवाच्यव्यापार पाचिधात्वर्थ और पच्धात्वर्थ में क्रमशः प्रधानत्वेन विवक्षित होने से 'देवदत्तेन ओदनं पाचयति यज्ञदत्तः' वाक्यघटक प्रयोज्यव्यापाराश्रय और प्रयोजकव्यापाराश्रय दोनों की कर्त्तृसंज्ञा सिद्ध होती है। णिच् को द्योतक स्वीकार करने पर णिच्प्रकृति-पच्धात्वर्थव्यापार ही प्रधानीभूतव्यापार कहलाता है, तथा च 'देवदत्तः पचति, तं यज्ञदत्तः प्रेरयति' इत्याकारकवाग्विवक्षा में 'यज्ञदत्तेन पाचयति देवदत्तः' इत्याकारिका अनिष्टरूपापत्ति होने लगती। प्रकृतशास्त्र में 'कारके' सूत्र की अधिकारतः उपलब्धि होने से 'धात्वर्थक्रियानिरूपितकारकप्रवर्त्तक का स्वातन्त्र्य सिद्ध होता है' यह बात 'कारके' एवं 'स्वतन्त्रः कर्त्ता' सूत्रभाष्य में स्पष्ट है, मञ्जूषा में भी इसका निरूपण ग्रन्थकार ने किया है।

## साधकतमं करणम्।।१.४.४२।।

**क्रियासिद्धौ प्रकृष्टोपकारकं कारकं करणसंज्ञं स्यात्। तमप्ग्रहणं किम्? गङ्गायां घोषः।।इति कौमुदी।।**

शे.– यद्व्यापाराव्यवधानेन क्रियानिष्पत्तिस्तत्प्रकृष्टम्। तमप्ग्रहणं किम्–कारकाधिकारात् करणल्युडन्तकरणेति महासंज्ञया च साधकत्वे लब्धे साधकग्रहणमेव साधकतमार्थं भविष्यतीति प्रश्नः। गङ्गायामिति–अधिकरणमित्यधिकरणल्युडन्तमहासंज्ञयैव सिद्धे आधारग्रहणसामर्थ्यात् सर्वावयवव्याप्त्या य आधारः सोऽधिकरणमित्यर्थः स्यात्। एवञ्चेदं सूत्रं 'तिलेषु तैलम्' इत्यादावेव प्रवर्तेत। न हि गङ्गा तीरं वा सर्वावयवव्याप्ते। तीरधर्मस्य घोषाधारत्वस्यात्यन्तसामीप्यात् प्रवाहे आरोपोऽत्र बोध्यः। यदा तु व्यवहितो गङ्गातो घोषः, तदा गङ्गाशब्दस्य तत्तीरे लक्षणा। तमप्ग्रहणेन 'शब्दसामर्थ्यगम्यः प्रकर्षो नाश्रीयते' इति ज्ञाप्यत इति गौणाधारस्याप्यधिकरणसञ्ज्ञा सिध्यति। एवञ्च 'गङ्गायां गावः' इत्यप्युदाहरणम्। सर्वावयवव्याप्त्यभावेन मुख्याधारत्वाभावात्। गौणमप्याधारत्वादि सप्तम्यादिशक्यमेवेति बोध्यम्। इदं प्रकृतसूत्रे भाष्ये स्पष्टम्।

यदि तु महासंज्ञया तदाक्षेपकरणासमर्थं प्रति आधारादिपदं चरितार्थम्, साधकशब्दस्य यद्व्यापारानन्तरमव्यवधानेन फलोत्पादः, तत्र शक्तिः, आधारशब्दस्य चाध्रियते यस्मिन्निति व्युत्पत्त्या कर्तृकर्मणोर्धारणक्रियां प्रति सर्वावयवव्याप्त्या य आधारस्तत्र शक्तिरित्युच्यते। तदोक्तप्रयोगसाधनाय कारकप्रकरणे उद्देश्यवाचके पदे स्वरितत्वप्रतिज्ञया गौणाधारादेर्ग्रहणं वाच्यम्। स्वरितेनाधिकं कार्यमित्यर्थात्। तमपा तु प्रकृते तदभावो बोध्यते। एवञ्च व्यवधानेन फलोत्पादके करणत्वोपचारेण तृतीयान्तपदस्यासाधुत्वबोधनं तमप्फलम्, एतत्तमब्वशादेवान्यत्र स्वरितत्वमिति ज्ञायत इति दिक्। स्पष्टञ्चैतत् 'स्वरितेन' (पा.सू. १.३.११) इति सूत्रे भाष्ये।

भैरवी– 'साधकतमम्' इति सूत्रस्थतमपा प्रकर्षः सूचितः स च कारकान्तरापेक्षया। कारकपर्यायसाधकशब्दादुत्पन्नेन तमपा प्रकृत्यर्थापेक्षस्यैव प्रकर्षस्य लाभात्। तत्र करणात् करणान्तरे प्रकर्षस्याभावेन कारकान्तरापेक्षयैव प्रकर्षो वाच्यः, स च यादृशस्तमाह–यद्व्यापाराव्यवधानेनेति। करणान्तरात् प्रकर्षश्चेद् विज्ञायते तदा अश्वेन दीपिकया पथा व्रजतीत्यत्र सर्वेषां न स्यात्। अधिकशब्दोपादाननिमित्तं प्रकर्षं दूषयति–अधिकरणेति। तिलेषु तैलमित्यादावेवेति। आदिना–'दध्नि सर्पिः' इत्यस्य सङ्ग्रहः। न

चाध्रियन्तेऽस्मिन्निति व्युत्पत्त्या कर्तृकर्मणोर्धारणक्रियाम्प्रति य आधारः सोऽधिकरणसंज्ञ इत्यर्थो भविष्यतीति वाच्यम्। एवमपि यो मुख्यस्तद्-द्वाराऽऽधारस्तस्यैव स्यान्न 'गङ्गायां घोषः' इत्यादौ। गङ्गाशब्दबोध्यो न मुख्याधार इत्यभिप्रायेण 'भूतले घटः', 'स्थाल्यां पचति' इति परित्यज्य 'गङ्गायां घोषः' इत्युपात्तं तस्य मुख्याधारपरमेवाधारपदं भविष्यतीति कल्पनेन सामञ्जस्यमित्याशयात्। यथा च प्रकृते गौणत्वन्तदुपपादयति–तीरधर्मस्येति। प्रवाहे आरोप इति। एवञ्च गौणत्वं स्पष्टमेव। तीरे लक्षणेति–गङ्गापदशक्यतावच्छेदकस्य गङ्गात्वस्य तीरे आरोपः। शक्यतावच्छेदकारोप एव लक्षणा तदा गङ्गापदबोध्यस्य गौणत्वं स्पष्टमेव। प्रकर्षो नाश्रीयत इति–एवञ्च यथाकथञ्चिद् य आधारः सोऽधिकरणसंज्ञः। एवञ्च मुख्याधारत्वाभावेऽपि यथाकथञ्चिद् यस्मिन्नाधारत्वं तन्मुख्यं गौणं वा सर्वमप्यधिकरणसंज्ञम्। गौणाधारस्याप्यधिकरणसंज्ञायाम्भाष्यमपि साधकमित्याशयेनाह–एवं गङ्गायां गाव इति। इदं तत्रत्य–'कूपे गर्गकुलम्' इत्यस्याप्युपलक्षणम्। प्रकृतसूत्रभाष्ये इति–तत्र हि 'तमग्रहणं किमर्थम्। सर्वेषां कारकाणां करणसंज्ञा प्रसज्येत' इति विचारे 'पूर्वसंज्ञानामपवादत्वात् परसंज्ञानाञ्च तथैव बाधकं भविष्यति' इत्यभिधाय 'धनुषा विध्यति' इत्यत्राप्युक्तत्वादपादानसंज्ञासाधकत्वाच्च करणसंज्ञा प्राप्नोति। एवं तर्हि लोकेऽभिरूपाय कन्या देयेति। न चानभिरूपे प्रवृत्तिरस्ति तत्राभिरूपतमायेति गम्यते। एवमिहापि साधकं करणमित्युच्यते सर्वाणि च कारकाणि साधकानि न चासाधके प्रवृत्तिरिति साधकतममिति विज्ञास्यते। एवं तर्हि सिद्धे सति यत्तमग्रहणं करोति तज्ज्ञापयत्याचार्यः कारकसंज्ञायां तरतमयोगो न भवतीति। आधारमाचार्यः किं न्यायं मन्यते यत्र कृत्स्न आधारात्मा व्याप्नोति तेनेहैव स्यात्तिलेषु तैलम्, दध्नि सर्पिः। गङ्गायां गावः, कूपे गर्गकुलमित्यत्र न स्यात्। कारकसंज्ञायां तरतमयोगो न भवतीत्यत्रापि सिद्धं भवति।

पक्षान्तरमाह–यदि त्विति। चरितार्थमिति–अन्यथा संज्ञिलाभो न स्यात्। युक्त्यन्तरमाह–साधकशब्दस्येति। संसिध्यर्थकधातुनिष्पन्नत्वात्। उक्तप्रयोगादीति–गङ्गायां गावः, कूपे गर्गकुलमिति प्रयोगसाधनायेत्यर्थः। प्रकृते–उद्देश्यवाचके साधकपदे। तदभावः स्वरितत्वाभावः। तमपा तु

**प्रकर्षो बोध्यत इत्यव्यवधानलाभः। एवञ्च–उक्तव्यवस्थासिद्धौ। ननु व्यवधानेन फलोत्पादकेऽपि करणत्वं दृश्यते। यथा 'राजा चतुर्भिरुपायैः शत्रून् वशीकरोति'। अत्रामात्यभटादिद्वारैव वशीकरणन्न साक्षात्। न चाव्यवधानविवक्षया तथा प्रयोग इति वाच्यम्। तथा सति व्यवधानेन यत्र फलोत्पादस्तत्र संज्ञान्तरस्य प्राप्त्या तृतीयाया अप्राप्त्या तादृशोक्त्यसङ्गतेरिति चेन्न। 'नटस्य शृणोति' इत्यत्र नटे गीतद्वारा क्रियाजनकत्वेन कारकत्वस्वीकारात् करणत्वप्राप्त्या तद्व्यावृत्त्यर्थं तमग्रहणमित्याशयात्। करणत्वोपचारेणेत्यस्य करणत्वप्राप्तेत्यर्थः। तत्र नटस्य कारकत्वम् 'आख्यातोपयोगे' इति सूत्रस्थम् 'उपयोगग्रहणं किमर्थम्–नटस्य शृणोति' इति भाष्यमेव साधकं बोध्यमिति दिक्। दिगिति–दिगर्थस्तु पूर्वोक्तगौणाधारस्याधिकरणसंज्ञाया अप्राप्त्युपपादनाय यद्गौणमुख्यन्यायोपन्यसनं प्राचां तदसङ्गतमेव। तस्य न्यायस्य पदकार्यविषयत्वाद् विशिष्टरूपोपादानविषयत्वाच्चेति।**

क्रिया की सिद्धि में प्रकृष्टोपकारक कारक की प्रकृतशास्त्रद्वारा करणसंज्ञा होती है, अत एव 'रामः बाणेन वालिनमवधीत्' वाक्यान्तर्गत बाण की करणसंज्ञा होती है।

प्र.— राम पैंतरा नहीं बाँधते तो वाली कैसे मरता? इसी प्रकार विना धनुष के बाण चलता ही कैसे? अथ च बाण यदि वाली के शरीर में चुभता नहीं तो वाली कैसे मारा जाता? इस प्रकार प्रकृष्टोपकारकता तो राम, धनुष और बाण तीनों में है। क्या प्रकृष्टोपकारकता बाण में है कि करणसंज्ञा राम और धनुष की न होकर केवल बाण की ही होती है?

उ.— जिसके व्यापार करने के अव्यवहितोत्तर क्षण में क्रिया की सिद्धि होती है, उसे प्रकृष्ट कहते हैं। अर्थात् 'क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरं तत् प्रकृष्टम्'। राम कितने ही पैंतरा क्यों न भाँजते, धनुष द्वारा कितने ही बाण क्यों न चलाये जाते; किन्तु जब तक बाण का वाली के शरीर में 'चुभनारूप' व्यापार नहीं होता, तब तक हननक्रिया की सिद्धि नहीं होती। इस प्रकार बाण के चुभनव्यापार के अनन्तर हननक्रिया की निष्पत्ति होने से बाण की करणसंज्ञा होती है। यद्व्यापारादनन्तरक्रियासिद्धि करणसंज्ञा के लिये विवक्षित होने से 'धनुष पर बाण चढ़ाकर मारता है' इत्याकारकवाग्विवक्षा में धनुष की करणसंज्ञा नहीं होती।

तमप् किम्? 'गङ्गायां घोष:'। अर्थात् 'साधकतमं करणम्' शास्त्रापेक्षया 'करणम्' इत्येतावन्मात्र सूत्रोपदेश करना चाहिए। प्रकृतशास्त्र में 'कारके' इत्यधिकारद्वारा उपस्थित होने से अथवा 'क्रियतेऽनेन तत्करणम्' इत्यन्वर्थमहासंज्ञाविधानसामर्थ्य से कार्यसाधक की ही करणसंज्ञा होगी, साधकशब्दोपदेश व्यर्थ होकर 'प्रकृष्ट साधक की करणसंज्ञा होती है' वचन का ज्ञापन करता है। इस प्रकार साधकशब्दोपदेशसामर्थ्य से प्रकृष्टार्थोपलब्धि हो जाती है, इसलिए प्रकृष्टार्थलाभ के लिये तमप्ग्रहण करना सर्वथा व्यर्थ है। तमप्-ग्रहण व्यर्थ होकर 'अस्मिन् कारकाधिकारे शब्दसामर्थ्यगम्य: अधिकार्थो नाश्रीयते' वचन का अर्थात् 'शब्दाधिक्याद् अर्थाधिक्यं न भवति' वचन का ज्ञापन करता है। कारकाधिकार में शब्दाधिक्य से अर्थाधिक्य का ग्रहण न होने से 'गङ्गायां घोष:' प्रयोगोपपत्ति होती है। अन्यथा 'आधारोऽधिकरणम्' शास्त्रघटक अधिकरणशब्द की 'अधिक्रियतेऽस्मिन्' विग्रह में उपपत्ति स्वीकार करने से 'रखा जाय जिसमें' इत्यन्वर्थ महासंज्ञाविधान से ही आधार अर्थ का लाभ संभव है, 'आधारोऽधिकरणम्' शास्त्रघटक आधारशब्दोपदेश व्यर्थ होकर 'सर्वावयवव्याप्त आधार की ही अधिकरणसंज्ञा होती है' इत्याकारक वचन का ज्ञापन करता, तथा च 'तिलेषु तैलम्', 'दधिषु सर्पि:' 'सर्वस्मिन्नात्मा' इत्यादि सर्वावयवव्याप्त आधार की ही अधिकरणसंज्ञा होती, न कि 'गङ्गायां घोष:' वाक्यघटक गङ्गा की, यतो हि घोष की स्थिति गङ्गा के तट पर किसी एक कोने में है, न कि सर्वावयवव्यापकतया। 'साधकतमं करणम्' सूत्रघटक तमप् व्यर्थ होकर 'कारकाधिकार में शब्दाधिक्य से अर्थाधिक्य का ग्रहण नहीं होता' वचन का ज्ञापन कर चुका है। अत एव 'आधारोऽधिकरणम्' शास्त्रद्वारा सर्वावयवव्याप्त आधार की ही अधिकरणसंज्ञा न होकर एकदेशव्याप्त आधार की भी अधिकरणसंज्ञा होने से 'गङ्गायां घोष:' प्रयोगघटक गङ्गा की अधिकरणसंज्ञा सिद्ध होती है। 'आधारोऽधिकरणम्' शास्त्रघटक आधारशब्दोपदेशसामर्थ्य से अधिकार्थ का ग्रहण न करने से ही गौण और मुख्य उभयविध आधारों की अधिकरणसंज्ञा का लाभ होता है। अत एव सम्पूर्ण गङ्गा में गायों की स्थिति न होने पर भी 'गङ्गायां गाव:' प्रयोगोपपत्ति, अथ च सम्पूर्ण गङ्गातीर में घोषस्थिति न होने पर भी 'गङ्गायां घोष:' प्रयोग की उपपत्ति होती है। 'गङ्गायां गाव:' एकदेशव्याप्त मुख्याधार का और 'गङ्गायां घोष:' एकदेशव्याप्त गौणाधार

का उदाहरण है। 'गङ्गायां घोष:' वाक्य का प्रयोग दो अभिप्रायों से संभव है— १. गङ्गा के तीर पर घोष होने पर 'हमारा घर तो गङ्गाप्रवाह में ही है' इस अभिप्राय से अर्थात् हम तो गङ्गा में ही रहते हैं। २. गङ्गा से सुदूर गङ्गातीर में घर होने पर। प्रथम स्थल में तीरवृत्ति आधारत्व धर्म का गङ्गा में आरोप होता है। द्वितीय स्थल में गङ्गा के शैत्यपावनत्वादि धर्मों का तीर में आरोप होता है। इस प्रकार गौण आधार भी अधिकरणसप्तमी का शक्यार्थ ही सिद्ध होता है। यह बात 'आधारोऽधिकरणम्' सूत्र के भाष्य में मुक्तकण्ठ से उपदिष्ट है।

**यदि तु**—जो व्यक्ति अधिकरणेति अन्वर्थसंज्ञा से आधार अर्थ की, अथ च करणेति अन्वर्थसंज्ञा से साधक अर्थ की उपलब्धि स्वीकार नहीं करते हैं, उनके मतानुसार आधार: पदोपदेश एवं तमप्ग्रहण आवश्यक हैं। अन्यथा 'गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्यय:' न्यायानुसार मुख्याधार की अधिकरणसंज्ञा संभव है, न कि गौणाधार की। अथवा 'आध्रियते यस्मिन्' इति व्युत्पत्त्युपपन्न आधारशब्द की सर्वावयवव्याप्त आधार अर्थ में शक्ति मानते हैं, अथ च साधकशब्द की यद्व्यापारादनन्तरकार्यसाधक अर्थ में शक्ति स्वीकार करते हैं, तथा च तदनुसार गौणाधार की अधिकरणसंज्ञा करने के लिये 'आधारोऽधिकरणम्' शास्त्रघटक उद्देश्यबोधक 'आधार:' पद में स्वरितत्वप्रतिज्ञा स्वीकार करनी पड़ती है। स्वरतित्वप्रतिज्ञासामर्थ्य से गौणाधार की अधिकरणसंज्ञा सिद्ध होती है। इस प्रकार स्वरितत्वप्रतिज्ञा से गौण और मुख्य अर्थात् यद्व्यापारव्यवहित और यद्व्यापाराव्यवहित कार्यसाधक की करणसंज्ञा का बाध करने के लिये 'साधकतमं करणम्' सूत्र में तमप् ग्रहण किया है, तथा च प्रकृतसूत्र से यद्व्यापारादनन्तरकार्य-साधकरूप मुख्य साधक की ही करणसंज्ञा होती है। इसीलिए 'धनुष पर चढ़ाकर बाण से मारता है' इत्याकारकवाग्विवक्षा में धनुष की करणसंज्ञा नहीं होती है। स्वरविशेष अथवा दोषविशेष को स्वरितत्व कहते हैं। स्वरितत्वप्रतिज्ञा से अधिकार होता है। अधिकार का तात्पर्य अधिक: कार: अर्थात् अधिक कार्य होता है, अत: गौणाधिकार की भी अधिकरणसंज्ञा होती है, अथ च स्वरितत्वप्रतिज्ञाबल से गौणसाधक की प्राप्त करणसंज्ञा का तमप् ग्रहणसामर्थ्य से बाध होता है, यह बात 'स्वरितेनाधिकार:' सूत्र के भाष्य में स्पष्ट है।

**कर्तृकरणयोस्तृतीया ।।२.३.१८।।**

**अनभिहिते कर्त्तरि करणे च तृतीया स्यात्। रामेण बाणेन हतो वाली।।इति कौमुदी।।**

**शे.– रामेणेति–कर्तृतृतीयायाः कर्त्तृत्वादिशक्तिमान् कर्त्तृक्रियाभावसम्बन्धश्चार्थः। करणतृतीयायाः करणशक्तिमान् क्रियाकरणभावसम्बन्धश्चार्थः। तच्छक्तिमत्वञ्च व्यापारवत्येव रामकर्तृकबाणकरणकप्राणवियोगाश्रयो वालीति बोधः।**

**भैरवी– तच्छक्तिमत्वम्–करणत्वशक्तिमत्वम्। व्यापारवत्येवेति अत एव करणत्वं व्यापारनियतमिति सङ्गच्छते।**

यदीय व्यापार के अनन्तर फलनिष्पत्ति होती है, उसे प्रकृष्ट कहते हैं। बाण के चुभनरूप व्यापार के अव्यवहितोत्तर हननरूप फल की निष्पत्ति होने से बाण की करणसंज्ञाविधानपूर्वक 'कर्त्तृकरणयोस्तृतीया' शास्त्रद्वारा तृतीया का विधान होने से 'रामो बाणेन वालिनमवधीत्' प्रयोगोपपत्ति होती है। कर्म में प्रत्ययविधान करने पर अनुक्तकर्त्ता में तृतीया होने से 'रामेण बाणेन हतो वाली' प्रयोगनिष्पत्ति होती है। कर्त्तृतृतीया का कर्त्तृत्वशक्ति और कर्त्तृक्रियाभावसम्बन्ध अर्थ होता है, अथ च करणतृतीया का करणत्वशक्ति और क्रियाकरणभावसम्बन्ध अर्थ होता है। 'रामेण बाणेन हतो वाली' वाक्यघटक रामप्रातिपदिक से अनुक्तकर्त्ता में तृतीयाविभक्ति का विधान होता है, जिसका 'आश्रयोऽवधिरुद्देश्यः.....शक्तिरेव वा' नियमानुसार कर्त्तृत्वशक्ति अर्थ है, अथ च करणतृतीया का करणत्वशक्ति अर्थ है। हनन क्रिया है और राम कर्त्ता, अत एव रामेण पदघटक तृतीया का कर्त्तृक्रियाभावसम्बन्ध भी अर्थ है। इतरव्यावर्त्तकत्वरूपव्यापारवान् करण होता है, अत एव करणत्वशक्तिमत्त्वरूपव्यापार बाण में रहता है। इस प्रकार 'रामेण बाणेन हतो वाली' वाक्य से 'रामकर्तृकबाणकरणकप्राणवियोगाश्रयो वाली' इति बोधोपपत्ति होती है।

**प्रकृत्यादिभ्य उपसंख्यानम्।।(वा.)।।**

**प्रकृत्या चारुः। प्रायेण याज्ञिकः। गोत्रेण गार्ग्यः। समेनैति। विषमेणैति। द्विद्रोणेन धान्यं क्रीणाति। सुखेन दुःखेन वा यातीत्यादि।।इति कौमुदी।।**

**शे.– इदं यथायोगं सर्वविभक्त्यपवादः।**

**भैरवी– 'प्रकृत्यादिभ्यः' इत्यत्रादिशब्दः प्रकारे। समुदायघटकेभ्यस्तृतीयेत्यर्थः। 'नाम्ना सुतीक्ष्णश्चरितेन दान्तः'। अत्र नामपदार्थस्याभेदः सुतीक्ष्णशब्दे भासते। 'चरितेन दान्तः' इत्यत्र चरितशब्दार्थस्य प्रकृतिस्वरूपस्य दान्तत्वेऽन्वयः। 'घटत्वेनाभावः' अत्र तृतीयार्थोऽवच्छिन्नप्रतियोगिताकत्वम्। पट इति ज्ञाने पटत्वेन पटस्य विषयत्वन्नतु द्रव्यत्वेन इत्यत्रावच्छिन्नत्वं तृतीयार्थो बोध्यः। 'प्रकृत्या चारुः' प्रकृतिः स्वभावः। प्रकृतिसम्बन्धिचारुत्ववान्। न च कृत इत्यध्याहारेण करण एव तृतीयाऽस्तु। घटत्वेनेत्यादिष्वपि घटत्वादिपदानां घटत्वावच्छिन्न-प्रतियोगिताकत्वलाक्षणिकतया ज्ञात इत्यस्याध्याहारेण करणतृतीयाया सिद्धिरिति वाच्यम्। यदा न तस्याध्याहारस्तदा शेषलक्षणा षष्ठी प्राप्नोति तद्बाधनार्थमस्यावश्यकत्वात् 'प्रायेण याज्ञिकः' प्रायः-पदमाचारातिशयपरम्। इत्यस्य चाध्याहारः। 'आचारातिशयेन याज्ञिकः' इत्यर्थो विवक्षितः। गोत्रेण गार्ग्यः गोत्रसम्बन्धिगार्ग्यत्ववान्। सामान्यविशेषभावेनान्वयः। 'समेन, विषमेणैति' इत्यादौ द्वितीयार्थे तृतीया 'द्विद्रोणेन धान्यं क्रीणाति'। पात्रादित्वात् स्त्रीत्वाभावः। परिच्छेद्यत्वं तृतीयार्थः। तस्य धान्येऽन्वयः। 'सुखेन दुःखेन याति' इत्यत्र सुखदुःखपदं तत्साधनपरम्'। तच्च याधात्वर्थफलेऽभेदेनान्वेतीति द्वितीयायां प्राप्तायामनेन तृतीया।**

प्रकृतवार्त्तिकद्वारा अपवादत्वात् यथाप्राप्त सर्वविभक्तियों का बाध होकर प्रकृत्यादिगणोपदिष्ट शब्दों से तृतीयाविभक्ति का विधान होता है। आभूषणादि से सुसज्जित होने से सुन्दर नहीं; अपितु सहजसुन्दर है (प्रकृति- सम्बन्धिचारुत्ववान्), अर्थात् 'प्रकृत्या चारुः' स्थल में षष्ठी का बाधपूर्वक तृतीया का विधान होता है। 'गोत्रेण गार्ग्यः' अर्थात् इसका गार्ग्य गोत्र है। प्रकृतस्थल में प्रथमा का बाध होकर तृतीया होती है। समविषमकर्मक गमन अर्थात् समेनैति, विषमेणैति स्थल में प्राप्त द्वितीया का बाध होकर तृतीया होती है। द्विद्रोणसम्बन्धिधान्य, अत एव 'द्विद्रोणेन धान्यं क्रीणाति' स्थल में प्राप्त षष्ठी का बाध होकर तृतीया होती है। सुखदुःखजनक यान अर्थात् 'सुखेन दुःखेन वा याति' स्थल में क्रियाविशेषणत्वात् प्राप्त द्वितीया का बाध होकर तृतीया होती है।

## दिवः कर्म च ।।१.४.४३।।

दिवः साधकतमं कारकं कर्मसंज्ञं स्याच्चात् करणसंज्ञम्। अक्षैरक्षान् वा दीव्यति।।इति कौमुदी।।

शे.- चेन संज्ञयोः समावेशः। तेन दिवः साधकतमस्य शक्तिद्वययोगो बोध्यते। तेन 'अक्षैर्देवयते' इत्यत्र तृतीया परत्वात्, कर्मत्वाच्च कर्मत्वप्रयुक्तपरस्मैपदाभावः। अत्र विप्रतिषेधशास्त्रबलात्तृतीयैव शक्तिद्वयबोधिका। यदाऽक्षाणां फलाश्रयत्वसमानाधिकरणकर्मत्वविवक्षा तदा 'अक्षान् दीव्यति' इत्यादि साधु। 'अक्षाणां देविता' इत्यादौ तृतीयातः परत्वात् कृद्योगलक्षणा षष्ठी। 'मनसा देवः' इत्यादौ हेतुतृतीयान्तेन पचाद्यजन्तदेवशब्दस्य समासः। न च शक्तिद्वयस्वीकारेऽत्र कर्मणि लकारे करणत्वशक्तेरनुक्तत्वेन तृतीयापत्तिरिति वाच्यम्। 'अपादानमुत्तराणि' इत्यस्योदाहरणं 'गां दोग्धि' इत्यादि, तत्र कर्मणि लकारे पञ्चम्यापत्तिवारणायैकद्रव्यगतानेकशक्तिमध्ये एकस्या अभिहितत्वे परस्यापि तद्वत् प्रकाशेनाक्षतेः। एकैव शक्तिः संज्ञाद्वयोपयोगिनीति तु चिन्त्यम्। कर्मादिपदानां कर्मत्वादितत्तच्छक्तिरूपेण बोधकतया तयोर्भेदस्यैवौचित्यादिति मञ्जूषायां विस्तरः।

भैरवी- शक्तिद्वययोग इति करणत्वकर्मत्वात्मकशक्तिद्वययोग इत्यर्थः। एतेन- संज्ञाद्वयसमावेशेन। परस्मैपदाभाव इति-अणावकर्मकादिति सूत्रेण प्राप्त इत्यादिः। ननु करणरूपेऽर्थे तृतीयाया विधानेन कथं तृतीयया कर्मत्वबोधनमत आह-अत्रेति। अत्र कार्यकालपक्षे कर्मत्वसामानाधिकरण्य-विशिष्टमपि करणत्वं प्रकृतसूत्रप्रदेशोपस्थितकर्तृकरणयोरिति सूत्र-घटककरणपदेन गृह्यत तेन तृतीयैवोभयबोधिकेति भावः। ननु तर्हि 'अक्षान् दीव्यति' इति न स्यादत आह-यदाक्षाणामिति। अत्रेष्टपरिवर्त्तनाद्यनुकूलव्यापारो दीव्यतेरर्थः। फलञ्चेष्टपरिवर्त्तनं तदाश्रयत्वसमानाधिकरणकर्मत्वस्य कर्तुरिति सूत्रबोधितस्य विवक्षेत्यर्थः। यदोभयशक्तिमत्वं तदैवोक्तप्रकार इति भावः। ननु पूर्ववत् षष्ठीप्राप्त्या कथं 'मनसा देवः' इति हरदत्तोक्तः प्रयोगः स्यादित्यत आह-'मनसा देवः' इत्यादाविति। अत्र संज्ञात्वे मनसः संज्ञायामित्यलुक्। असंज्ञात्वे तु 'तत्पुरुषे कृति' इति घटकबहुलग्रहणेनालुक्। ननु मनसो दिवधात्वर्थसाधकतमत्वसमानाधिकरणकर्मत्वशक्तिमत्वात्कथं तृतीयेत्यत

**आह–हेतुतृतीयान्तेनेति। अत्र कर्मणि। 'दिवः कर्म च' इति सूत्रबोधितकर्मत्वशक्तिमति। तृतीयापत्तिरिति–'दीव्यन्तेऽक्षाः' इत्यादाविति। इदमुपलक्षणम्। 'देवना अक्षाः' इत्यत्र ल्युटा करणत्वस्याभिधानेऽपि कर्मत्वस्यानभिहितत्वात् षष्ठ्यापत्तिरिति। तद्वत्प्रकाशेन–अभिहितशक्तिवत्प्रकाशेनास्मिन्नर्थे 'अपादानमुत्तराणि कारकाणि बाधन्ते' इति भाष्यमेव मानम्। तथा हि संज्ञयोः स्वतो न विरोधः। कृत्कृत्यसंज्ञयोरिव समावेशसम्भवात्; किन्तु फलद्वारक एको वाच्यः सोऽपि चेन्नाश्रीयते यदा परत्वादित्यसङ्गतमेव स्यादिति तया कल्पनमावश्यकमिति। प्राचामुक्तिं खण्डयति–एकैव शक्तिरिति।**

प्रकृतसूत्र में 'साधकतमम्' पद की धाराप्रवाहन्याय से अनुवृत्ति है, अथ च चकारात् 'करणम्' पद का सम्बन्ध होता है, अत एव दिव्‌धातु के साधकतम कारक की कर्म और करण दोनों संज्ञाएँ एक साथ होती हैं। इसलिए 'अक्षैरक्षान् वा दीव्यति' स्थल में द्वितीया और तृतीया दोनों विभक्तियाँ होती हैं।

प्र.— दिव्‌धात्वर्थक्रियानिरूपितसाधकतम कारक कर्मत्वशक्तिमान् और करणत्वशक्तिमान् दोनों होता है। दिव्‌धात्वर्थक्रियानिरूपितकर्मत्वशक्तिमान् कारक की कर्मसंज्ञा होती है और दिव्‌धात्वर्थक्रियानिरूपित कारक करणत्वशक्तिमान् होने से करणसंज्ञा भी होती है। अत एव कर्मसंज्ञाप्रयुक्त द्वितीया और करणसंज्ञाप्रयुक्त तृतीया दोनों ही विभक्तियाँ प्राप्त होती हैं। ऐसी अवस्था में दिव्‌धात्वर्थक्रियानिरूपितसाधकतम कारक से द्वितीयाविभक्ति का विधान हो अथवा तृतीया का?

उ.— अक्ष का अर्थ है पाशा, पाशा चौकोर होता है, इसके चारों पटलों पर संख्या अङ्कित होती है। यह जुआ खेलने के काम आता है। 'अक्ष से जुआ कराता है' इत्यर्थक 'अक्षैर्देवयते' वाक्यघटक अक्षशब्द 'दिवः कर्म च' शास्त्रद्वारा कर्मसंज्ञक भी है और करणसंज्ञक भी। अत एव कर्मत्वशक्तिमान् होने से द्वितीयाविभक्ति और करणत्वशक्तिमान् होने से तृतीयाविभक्ति दोनों की प्राप्ति होती है। अतः द्वितीयाविभक्तिविधायक 'कर्मणि द्वितीया' (पा.सू. २.३.२) सूत्रापेक्षया 'कर्तृकरणयोस्तृतीया' (पा.सू. २.३.१८) इति तृतीयाविधायक सूत्र पर होने के कारण तृतीया विभक्ति होती है। 'अणावकर्मकात् चित्तवत्कर्तृकात्' सूत्रद्वारा अण्यन्तावस्था में अकर्मक और चित्तवत्कर्तृक धातु से ण्यन्तावस्था में परस्मैपद का

विधान होता है। दिव्धात्वर्थक्रियानिरूपितसाधकतम कारक की 'दिवः कर्म च' सूत्र से कर्मसंज्ञा होने से दिव्धातु सकर्मक कहलाती है, अतः आत्मनेपद नहीं होता है। अर्थात् दिव्धात्वर्थक्रियानिरूपितसाधकतम-कर्मत्वकरणत्वोभयशक्तिमत्कारक से विप्रतिषेधशास्त्रबलद्वारा तृतीया का विधान होने पर भी यह तृतीया कर्मत्व और करणत्व उभयशक्तिबोधिका होती है।

प्र.— दिव्धात्वर्थक्रियानिरूपितसाधकतम कारक की कर्म और करण दोनों संज्ञाएँ होने पर कर्मसंज्ञकत्वात् प्राप्त द्वितीया और करणसंज्ञक होने से प्राप्त तृतीया दोनों की प्राप्ति में सर्वदा परत्वहेतु से तृतीया का ही विधान होगा, तर्हि 'अक्षान् दीव्यति' प्रयोगोपपत्ति असंभव है?

उ.— इष्टपरिवर्तनानुकूलार्थक दिव्धातुघटित वाक्य में दिव्धात्वर्थक्रियानिरूपित साधकतम कारक की इष्टपरिवर्तनरूप फलाश्रय मानकर कर्मसंज्ञा होकर 'अक्षान् दीव्यति' प्रयोगोपपत्ति भी होती है।

प्र.— दिव्धात्वर्थक्रियानिरूपित साधकतम कारक की कर्मसंज्ञा और करणसंज्ञा दोनों होती हैं, अत एव दिव्धात्वर्थक्रियानिरूपित साधकतम कारक से द्वितीया या तृतीया विभक्ति का ही विधान होता है, 'अक्षाणां देविता' स्थल में षष्ठीविधान असंगत है?

उ.— दिव्धातु से कर्त्ता में तृच्प्रत्ययविधानपूर्वक 'देविता' प्रयोगोपपत्ति होती है। 'अक्ष' की फलाश्रयत्वेन कर्मसंज्ञा होती है और व्यापाराश्रयत्वेन करणसंज्ञा होती है, अत एव द्वितीया एवं तृतीया दोनों ही प्राप्त होती हैं; किन्तु 'देविता' इस कृदन्त पद के योग में अनुक्तकर्मसंज्ञक अक्ष से 'कर्तृकर्मणोः कृति' (पा.सू. २.३.६५) सूत्रद्वारा षष्ठी भी प्राप्त है। षष्ठीविधायक सूत्र, द्वितीया और तृतीया विधायक सूत्रों की अपेक्षा पर होने के कारण 'देविता' इति कृदन्त के योग में षष्ठीविभक्ति का विधान होकर 'अक्षाणां देविता' प्रयोगोपपत्ति होती है।

प्र.— यथा 'अक्षाणां देविता' स्थल में 'देविता' इति कृदन्त का योग होने से प्राप्त द्वितीया और तृतीया विभक्तियों का बाध होकर परत्वात् कृद्योगलक्षणा षष्ठी होती है। तथैव पचाद्यजन्त 'देवः' पद के योग में परत्वात् षष्ठी विभक्ति होनी चाहिए। अतः 'मनसा देवः' स्थल में तृतीयाविभक्ति का विधान असंगत है?

उ.— 'मनसा देवः' प्रयोगघटक मनस् की कर्मत्वेन अथवा करणत्वेन विवक्षा न होकर हेतुत्वेन विवक्षा होने से 'दिवः कर्म च' सूत्रद्वारा कर्मसंज्ञा ही नहीं होती है, अत एव 'कृद्योगलक्षणा षष्ठी' की प्राप्ति नहीं है। प्रकृतस्थल में हेतुतृतीया, समास, अथ च संज्ञा अर्थ में 'मनसः संज्ञायाम्' (पा.सू. ६.३.४) सूत्रद्वारा अथवा असंज्ञा अर्थ में 'तत्पुरुषे कृति बहुलम्' सूत्र द्वारा विभक्ति का अलुक् होकर 'मनसा देवः' प्रयोगोपपत्ति होती है।

प्र.— 'दीव्यन्तेऽक्षाः' वाक्यघटक अक्षनिष्ठकर्मत्वशक्ति तिङ्प्रत्यय से उक्त है, अथ च करणत्वशक्ति अनुक्त है। अतः अनुक्तकरणत्वशक्तिमत् अक्षपद से तृतीयाविभक्ति आनी चाहिए, प्रथमाविधान असंगत है?

उ.— एकनिष्ठ शक्तिद्वय के मध्य यदि एक शक्ति उक्त हो जाती है, तो तन्निष्ठ अन्यशक्ति भी उक्त ही मानी जाती है। अक्षनिष्ठ कर्मत्वशक्ति तिङ्प्रत्यय से उक्त होने के कारण तन्निष्ठ करणत्वशक्ति भी उक्त ही मानी गई, अत एव तृतीयाविभक्ति का विधान नहीं होता है।

यथा—'गोः सकाशात् पयो दोग्धि' वाक्यघटक अपादानसंज्ञक गो की 'अकथितं च' शास्त्रद्वारा कर्मसंज्ञा होती है। इस प्रकार गो में अपादानत्व और कर्मत्व उभयशक्तियों का सन्निवेश होने से पञ्चमी और द्वितीया दोनों विभक्तियों की प्राप्ति होती है; किन्तु 'अपादानमुत्तराणि कारकाणि बाधन्ते' अर्थात् अपादान को उत्तरकारक बाँधते हैं, अत एव कर्मत्वप्रयुक्त द्वितीया होकर 'गां पयो दोग्धि' प्रयोग बनता है। कर्म में प्रत्ययविधानाकांक्षा में 'गौणे कर्मणि दुह्यादेः' नियमानुसार गौणकर्म में तिङ्प्रत्यय करने पर 'गौः पयो दुह्यते' प्रयोगोपपत्ति होती है। प्रकृतस्थल में 'कर्मप्रत्ययद्वारा गोनिष्ठ कर्मत्वशक्ति के उक्त होने पर भी तन्निष्ठ अपादानत्वशक्तिप्रयुक्त पञ्चमीविभक्ति होनी चाहिए? ऐसी आशङ्का करके भाष्यकार ने उत्तर दिया कि 'एकनिष्ठ उभयशक्तिमध्य एकशक्ति के उक्त होने पर तद्द्रव्यनिष्ठ शक्त्यन्तर का भी अभिहितत्व स्वीकार किया जाता है, अत एव 'गौर्दुह्यते पयः' स्थल में गोशब्द से पञ्चमी का विधान नहीं होता है।

'दीव्यन्ते अक्षाः' स्थल में कर्मप्रत्ययद्वारा कर्मत्वशक्ति उक्त होने पर भी करणत्वशक्तिप्रयुक्त तृतीयाविभक्ति का विधान होना चाहिए। इसी प्रकार 'देवना अक्षाः' स्थल में करणप्रत्ययद्वारा करणत्वशक्ति उक्त होने पर भी कर्मत्वशक्तिप्रयुक्त द्वितीयाविभक्ति का विधान होना चाहिए? इस आशङ्का

का 'एकैव शक्तिः संज्ञाद्वयोपयोगिनी' अर्थात् दिव्धात्वर्थक्रियानिरूपित साधकतमत्वशक्ति को आधार मानकर कर्म एवं करण संज्ञाएँ होती हैं, अतः कर्म या करण में विहित प्रत्ययद्वारा उस शक्ति के उक्त होने से उभय संज्ञाओं का अभाव हो गया, इस प्रकार का कथन सर्वथा असंगत है। 'एकैव शक्तिः संज्ञाद्वयोपयोगिनी' कथनद्वारा कर्मत्व और करणत्व में परस्पर पर्यायतापत्ति आती है, जबकि भाष्यकार ने 'सप्तमीपञ्चम्यौ च कारकमध्ये' सूत्रभाष्य में कर्मत्व और करणत्व शक्ति को कण्ठरव से भिन्न-भिन्न स्वीकार किया है।

## अपवर्गे तृतीया ।।२.३.६।।

**अपवर्गः फलप्राप्तिस्तस्यां द्योत्यायां कालाध्वनोरत्यन्तसंयोगे तृतीया स्यात्। अह्ना क्रोशेन वानुवाकोऽधीतः। अपवर्गे किम्–मासमधीतो नायातः।।इति कौमुदी।।**

**शे.–** **फलप्राप्तिरिति–तस्याञ्च सत्यां प्रयोजनाभावादेव न क्रियाप्रवृत्तिरिति फलप्राप्तिशब्देन तत्पूर्वकस्त्याग उच्यते। त्यागस्य च फलप्राप्तिर्व्यङ्ग्येत्यन्यत्र विस्तरः। नायात इति–अनेन फलाप्राप्तिरिति स्फुटमुच्यते।**

**भैरवी–** **तत्पूर्वकत्यागः–फलप्राप्तिपूर्वकस्त्यागः। एवञ्च 'अह्ना क्रोशेन वा अनुवाकोऽधीतः' इत्यत्र त्यागस्तृतीयार्थः। अहर्व्यापकत्याग-प्रतियोग्यतीताध्ययनकर्मानुवाक इति शाब्दबोधः। न चात्र 'भूते' विहितनिष्ठया त्यागस्य लाभे तृतीयायास्तत्र शक्तिकल्पनं व्यर्थमिति वाच्यम्। तयाऽतीतत्वलाभेऽपि निवृत्तिरूपस्य त्यागस्याप्रतीतेः। अतीतत्वं हि–वर्त्तमानध्वंसप्रतियोगिसमयकत्वम्। निवृत्तिश्च पुनरनुत्पादनमिति भावः।**

फलप्राप्ति को अपवर्ग कहते हैं। फलप्राप्ति द्योतित होने पर कालवाचक और अध्ववाचक प्रातिपदिक से तृतीयाविभक्ति का विधान होता है। यथा— 'अह्ना क्रोशेन वाऽनुवाकोऽधीतः' अर्थात् दिनभर में क्रोशभर में अनुवाक पढ़ लिया अर्थात् जान लिया। जाननारूप फल प्राप्त हो गया। फलप्राप्ति होने पर अध्ययन के प्रयोजन की निवृत्ति हो जाने से पुनः अध्ययनादि क्रिया में प्रवृत्ति नहीं होती। अर्थात् फलप्राप्ति शब्द का प्रकृतस्थल में फलप्राप्तिपूर्वक क्रियात्याग अर्थ गृहीत होता है, क्रियात्याग फलप्राप्तिद्वारा

व्यङ्ग्य है। फल प्राप्त हो गया, इसलिए पढ़ना-लिखना छोड़ दिया। इसका विस्तारपूर्वक वर्णन ग्रन्थकार ने वैयाकरणसिद्धान्तलघुमञ्जूषा में किया है। फलप्राप्ति होने पर ही काल और अध्ववाचक शब्दों से तृतीयाविभक्ति का विधान होता है, फलप्राप्ति के अभाव में नहीं, अत एव 'मासमधीतो नायातः' वाक्य में तृतीयाविभक्ति का विधान नहीं हुआ। 'मासपर्यन्त अध्ययन करने के उपरान्त भी समझ में नहीं आया' इत्यर्थक 'मासमधीतो नायातः' वाक्य से फल की अप्राप्ति स्फुटतया उक्त है।

## सहयुक्तेऽप्रधाने ।।२.३.१९।।

**सहार्थेन युक्ते अप्रधाने तृतीया स्यात्। पुत्रेण सहागतः पिता। एवं साकं सार्धं समं योगेऽपि। विनापि तद्योगं तृतीया। 'वृद्धो यूना.' (पा.सू. १.२.६५) इत्यादिनिर्देशात्।।इति कौमुदी।।**

**शे.–** **'पृथग्विनानानाभिः' (पा.सू. २.३.३२) इतिवत् सहेनेत्येव सिद्धे युक्तग्रहणं शब्दविशेषानादरेणार्थयोगे भवत्वित्यर्थमित्याह–सहार्थेनेति। अत एव क्वचित् शब्दयोगं विनापि भवति तदाह–विनापीति। न्यायसिद्धेऽर्थे लिङ्गमप्याह–वृद्ध इति। सहार्थः साहित्यम्, तच्च स्वसमभिव्याहृतक्रियादिसमानकालिकतत्क्रियादिमत्त्वम्। क्वचित्समान-देशक्रियावत्वम्। अत एव माषवापोत्तरं तत्रैव क्षेत्रे तिलवापे 'तिलैः सह माषान् वपति' इति भवति। यद्यपि 'पुत्रेण सह आगतः' इत्यादौ आगमनक्रियाकर्तृत्वादेव पुत्रात् तृतीया सिद्धा, तथापि 'पुत्रेण सह स्थूलः' इत्यादि अस्य मुख्यमुदाहरणमिति भाष्ये स्पष्टम्।**

**भैरवी–** **क्रियादिसमानकालेति–अत्रादिना गुणद्रव्याभावसङ्ग्रहः। यदा गुणप्रधानभावेनैतेषु द्वयोः सम्बन्धस्तदा साहित्यवाचिसहशब्दस्य प्रयोगो भवति। यथा 'पुत्रेण सहागतः'। पुत्रेण सह स्थूलः' 'देवदत्तेन सह चैत्रस्य धनम्'। 'देवदत्तेन सह चैत्रस्य नाशः' यदि च नाशोऽपि क्रियैव तदा 'चैत्रेण सह मैत्रस्याभावः' इत्युदाहरणम्। अभावपदे नञो विरोध्यर्थकत्वाद्भावविरोधः पदार्थविशेष एवाभावः। स्पष्टञ्चेदं मञ्जूषायाम्। समानदेशक्रियावत्त्वम्–समानो देशोऽधिकरणरूपो यस्यास्तादृशी या क्रिया तद्वत्वमित्यर्थः। अत एव–द्वितीयस्य प्रकारस्याश्रयणादेव। एतत्सूत्रोदाहरणविषयेऽप्राधान्यञ्च शाब्दगुणाद्यन्वयित्वाभावरूपम्। यद्यपि 'पुत्रेण सहागतः पिता' इत्यादौ पुत्रशब्दार्थस्य निरुक्तसाहित्येऽ-**

**न्वयेऽर्थात्तदन्वयित्वं तथापि न शाब्दबोधविषयभूततदन्वयित्वं पुत्रसाहित्यवान् पिता आगमनकर्त्ता इत्येव हि बोध इष्यतेऽतः शाब्दत्वरूपविशेषणाभाव-कृतो विशेषणाभावस्तत्रास्ति।**

**एकेनैव सुपुत्रेण सिंही स्वपिति निर्भया।**
**सहैव दशभिः पुत्रैर्भारं वहति गर्दभी।।**

**इत्यादौ विद्यमानतावाचिसहशब्दयोगेऽप्यनेन तृतीया। पुत्रशब्दार्थे कियान्वयित्वमेव नेति विशेष्याभावाद्विशिष्टाभावोऽस्त्येव। न च विद्यमानताविशिष्ट एव सहशब्दार्थोऽस्तु। पुत्रशब्दोत्तरतृतीयाया उपपदविभक्तित्वेन षष्ठ्यपवादतया सहशब्दार्थेऽनन्वयापत्तेः। यदि विद्यमानैः पुत्रैर्युक्ता गर्दभीत्यर्थस्तत्राश्रीयते तदा कर्तृकरणयोरित्येव तृतीया भविष्यति। 'सहयुक्ते' इति सूत्रे द्विविधोऽपि सहार्थो गृह्यत इति दिक्।**

सहपदार्थ के साथ योग होने पर अप्रधान में तृतीया होती है, यथा— पुत्रेण सहागतः पिता, पुत्रेण साकमागतः पिता, पुत्रेण सममागतः पिता। अर्थात् सहार्थवाचक पदों के योग में तृतीया होती है। यदि सहपद के योग में ही अप्रधान से तृतीया का विधान अभीष्ट होता तर्हि 'पृथग्विनानानाभिः' सूत्र की भाँति 'सहेनाप्रधाने' इत्येतावन्मात्र शास्त्रोपदेश से ही सह के योग में अप्रधान से तृतीया का विधान संभव था, युक्तग्रहण व्यर्थ है। युक्तग्रहण से फलित होता है, कि सहपद का योग न होने पर भी सहार्थवाचक पद के योग में तृतीया होती है। इसीलिए ग्रन्थकार लिखते हैं, कि शब्दविशेष का प्रकृतसूत्र में आदर नहीं है, अपितु सहपदार्थ का समादर है। सहशब्द के योग का समादर न कर, सहपदार्थ का समादर करने से सहशब्द का योग न होने पर भी तृतीयाविधान होता है। इस प्रकार न्यायसिद्ध सहार्थयोग में तृतीयाविधान के लिये प्रमाण देते हुए ग्रन्थकार लिखते हैं, कि प्रकृतसूत्रद्वारा सहपद का योग न होने पर भी सहार्थयोग में तृतीयाविभक्ति का विधान होता है, इसीलिए 'वृद्धो यूना' इत्यत्र गम्यमानसहार्थयोग में यूना पद में तृतीयाविभक्ति की उपपत्ति होती है। सहपदार्थ साहित्य कहलाता है। सहपदार्थ का क्रिया, देश और काल के साथ योग होता है। अर्थात् स्वसमभिव्याहृत क्रिया, देश अथवा काल के समानकालिक क्रिया, देश अथवा काल वाले के योग को साहित्य

कहते हैं, 'पुत्रेण सहागतः' स्व = तृतीया, तत्समभिव्याहृतक्रिया = पुत्रवृत्ति आगमनक्रिया, तत्समानकालिक-आगमनक्रियावान् पिता होने से साहित्योपपत्ति, अतः तृतीयाविभक्ति का विधान होता है। अर्थात् तृतीयाविभक्ति का भी स्वसमभिव्याहृतसमानकालिकक्रियावत्त्व अर्थ सिद्ध होता है। यद्यपि आगमनक्रिया में पिता और पुत्र दोनों का अन्वय है; किन्तु शाब्दबोध में पिता प्रधान है और पुत्र अप्रधान, अतः पुत्रप्रातिपदिक से तृतीया विभक्ति आती है। यथा—'प्रधानाचार्येण सहागतश्छात्रः' वाक्यद्वारा आर्थप्राधान्य प्रधानाचार्य में बोधित होता है; तथैव 'पुत्रेण सहागतः पिता' वाक्यद्वारा आर्थप्राधान्य पुत्र में बोधित होता है; किन्तु आगमनक्रिया में प्रधानतया पिता का अन्वय होता है, अर्थात् शाब्दबोधीय प्राधान्य पिता में है। 'सहयुक्तेऽधाने' सूत्र में शाब्दबोधीय अप्राधान्य गृहीत होने से पुत्रप्रातिपदिक से तृतीयाविभक्ति होती है। किसी स्थल में स्वसमभिव्याहृतक्रियासमानकालिकक्रियावत्त्वरूप साहित्य लिया जाता है और किसी स्थल में स्वसमभिव्याहृतक्रियाधिकरणदेश- समानदेशक्रियावत्त्वरूप साहित्य लिया जाता है। अत एव 'तिलैः सह माषान् वपति' वाक्यघटक तिलप्रातिपादिक से तृतीयाविभक्ति का विधान होता है। 'तिलसाहित्यवन्माषकर्मकवपन' अर्थात् जिस देश में तिलवपन हो रहा है, उसी देश में माष को भी बोता है। तिलवपन का जो देश तत्समान-देशवपनकर्मक माष है।

प्र.— 'पुत्रेण सहागतः पिता' वाक्यघटक 'आगतः' पद में कर्त्रर्थक क्तप्रत्यय है। आगमनक्रियानिरूपित कर्तृत्व पिता और पुत्र दोनों में है। पितृगत कर्तृत्व क्तप्रत्यय द्वारा उक्त है, अथ च पुत्रगत कर्त्तृत्व अनुक्त है। अतः 'पुत्रेण सहागतः पुत्रः' वाक्यघटक पुत्रशब्द से अनुक्तकर्त्ता में ही तृतीया संभव है?

उ.— यद्यपि 'पुत्रेण सहागतः पिता' वाक्यघटक क्तप्रत्यय से पितृगत कर्तृत्व उक्त है, अत एव पुत्रशब्द से अनुक्तकर्त्ता में तृतीया संभव है; किन्तु 'पुत्रेण सह स्थूलः' वाक्यघटक पुत्रशब्द से 'सहयुक्तेऽप्रधाने' सूत्रोपदेश के विना तृतीया असंभव है। यथा—'पुत्रेण सह स्थूलः अस्ति' वाक्य का 'पुत्रनिष्ठं यत् स्थौल्यं तत्समानस्थूलत्ववान् पिता अस्ति' अर्थ होता है। प्रकृतस्थल में पुत्र का स्थौल्यगुण में ही अन्वय है, अस्धात्वर्थ

सत्ताक्रिया में नहीं, अत एव 'सहयुक्तेऽप्रधाने' सूत्र का इसी को मुख्योदाहरण मानना चाहिए। यह बात प्रकृतसूत्र के भाष्य में स्पष्ट है। यद्यपि 'पुत्रेण सहागतः पिता' वाक्यघटक गम्धात्वर्थगमनक्रियाकर्त्तृत्व पिता और पुत्र दोनों में होने पर भी अप्रधान होने से पुत्र को अनुक्त मानकर यथा अनुक्तकर्त्ता में तृतीयोपपत्ति संभव है, तथैव 'पुत्रेण सह स्थूलः पिता अस्ति' वाक्यघटक अस्धात्वर्थसत्ताक्रियानिरूपित अप्रधानकर्तृत्व पुत्र में होने से अनुक्तकर्त्ता में तृतीया संभव है, तथापि पुत्र की केवल स्थूलत्वगुण में ही अन्वयविवक्षा करने पर पुत्र में अप्रधानकर्त्तृत्व की सिद्धि नहीं होती है। इसी आशय से भाष्यकार ने 'पुत्रेण सह स्थूलः' वाक्य को 'सहयुक्तेऽप्रधाने' सूत्र का मुख्योदाहरण कहा है।

**येनाङ्गविकारः ।।२.३.२०।।**

**येन अङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते ततस्तृतीया स्यात्। अक्ष्णा काणः। अक्षिसम्बन्धिकाणत्वविशिष्ट इत्यर्थः। अङ्गविकारः किम्? अक्षि काणमस्य।।इति कौमुदी।।**

**शे.** अङ्गेन-अवयवेन। इदं सन्निधानलब्धम्। अङ्गिनः–अवयविनः। सूत्रे अङ्गशब्दोऽर्शआद्यजन्तो व्याख्यानादिति भावः। अक्ष्णा काण इति। यद्यप्यक्ष्येव काणं तथाप्यवयवधर्मस्य समुदाये आरोपाच्छरीरे तदवच्छिन्ने च व्यवहारो निरूढ इति ध्येयम्। यद्यपि काणशब्दः अक्षिगतविकारवाचक एव, तथापि 'द्वौ विप्रौ' इतिवदक्ष्णेति प्रयोगस्य साधुत्वम्। ईदृशरीत्येदृशानां साधुत्वे चेदमेव मानम्। षष्ठ्यपवादोऽयमित्याह–अक्षिसम्बन्धीति। अङ्गविकारः किमिति–अङ्गग्रहणप्रयोजनप्रश्नः अक्षि काणमिति–प्रथमां बाधित्वात्रैव स्यात्। लेशतोऽपि दर्शनसामर्थ्यहीनत्वं काणत्वम्।

भैरवी– सन्निधानलब्धमिति–अङ्गशब्दस्याङ्गिपरतया तत्सन्निधानेन यच्छब्दोऽङ्गपर इति भावः। व्याख्यानादिति–'अङ्गशब्दोऽयं समुदायः शब्दः' इति भाष्यमूलकादित्यर्थः। अक्ष्येव काणमिति–अस्याक्षि काणमिति व्यवहारस्य सुप्रसिद्धत्वात्। तथा च पुरुषे काणत्वरूपधर्माभावेनाक्ष्णा काण इति व्यवहारो नोपपद्यत इति भावः। अवयवधर्मस्य-काणत्वस्य। समुदाये–काणावयवघटितसमुदायसमवेतेऽवयविनि। तदवच्छिन्नतादृशावयवव्यवच्छेद्ये चैत्रादौ अक्षिगतविकारवाचक एवेति। तथा च काणोऽयमित्येतावता

**सर्वसामञ्जस्येऽक्ष्णोति प्रयोगो न प्राप्नोतीति भावः। द्वौ विप्राविवितवत्–एवञ्च सम्भेदेनान्यतरवैयर्थ्यमिति न्यायेन तादृशोऽत्र प्रयोगः। यद्यपि 'चक्षुर्नाशिवान्' 'सचक्षुष्कः' काणपदार्थत्वेन लोके प्रसिद्धः। तथापि 'कण निमीलने' इत्यभियुक्तवचनस्वरसादतिशायनिकप्रकरणस्थ-भाष्यस्वरसाच्चाह–लेशतोऽपीति।**

जिस अङ्ग के विकार से अङ्गी का विकार द्योतित होता है, उस विकृताङ्गवाचक शब्द से तृतीया होती है। प्रकृतसूत्रोपदिष्ट 'येन' पद का अर्शआद्यजन्त (अङ्गी अर्थवाले) अङ्गशब्द के सन्निधान से 'अङ्ग' अर्थ होता है। इनिप्रत्ययान्त अङ्गी शब्द का जो अर्थ है, वही अर्थ अर्शआद्यजन्त अङ्गशब्द का भी है। यथा आँख के फूटने से आँख में विकार आता है, अथ च कानी आँख से पुरुष काना कहलाता है।

प्र.— आँख फूटने से आँख कानी है कहना चाहिए, पुरुष काना कैसे कहलाता है?

उ.— यद्यपि काणत्वविशिष्ट अक्षि ही है; किन्तु अक्षिगत काणत्व का शरीर में आरोप करने से शरीरावच्छिन्न आत्मा काना कहलाता है।

प्र.— काणत्वविकार तो अक्षि का ही है, अत एव 'काण: पुरुष:' कहने पर भी आँख के ही कानेपन का बोध संभव है, तथा च 'अक्ष्णा काण:' वाक्यद्वारा पुरुष को काना क्यों कहा?

उ.— 'विप्रौ' पदोपदेशमात्र से ही 'दो विप्र' अर्थ-बोध होने पर भी लौकिक व्यवहार में 'द्वौ विप्रौ' कहने की प्रथा है, उसी प्रकार अक्षिगत काणत्व होने पर भी लोकव्यवहार में 'अक्ष्णा काण:' कहा जाता है। अवयवगत विकार का अवयवी में आरोप होता है, इसमें प्रकृतसूत्र ही प्रमाण है। 'अक्ष्णा काण:' स्थल में प्रकृतशास्त्रोपदेश न करने पर सम्बन्धबोधिका षष्ठी प्राप्त थी, अत: 'येनाङ्गविकार:' शास्त्रविधीयमान तृतीया, षष्ठी की अपवादिका सिद्ध होती है, अत एव 'अक्ष्णा' पद का 'अक्षिसम्बन्धी' अर्थ होता है।

**अङ्गविकारः किम्–**

प्र.— 'येन विकार:' इत्येतावन्मात्र शास्त्रोपदेश कर देते, अर्थात् अवयवद्वारा समुदायविषयक प्रश्न है?

उ.— 'येन विकारः' शास्त्रोपदेश करने पर जिस अङ्ग में विकार लक्षित होता, उसी से प्रथमाविभक्तिबाधपूर्वक तृतीया का विधान होता, यथा 'अक्षि काणमस्य'। अङ्गी का विकार लक्षित होने पर तृतीया का विधान असंभव था। अङ्गी का विकार लक्षित होने पर भी विकृताङ्गवाचक शब्द से तृतीया का विधान हो, इसलिए अङ्गशब्दघटित शास्त्रोपदेश किया है। दर्शनसामर्थ्यहीन अर्थात् जो थोड़ा भी न देख सके, उसे काणत्व कहते हैं।

## इत्थंभूतलक्षणे।।२.३.२१।।

**कश्चित्प्रकारं प्राप्तस्य लक्षणे तृतीया स्यात्। जटाभिस्तापसः। जटाज्ञाप्यतापसत्वविशिष्ट इत्यर्थः।।इति कौमुदी।।**

**शे.– इत्थंशब्दः प्रकारमात्रपरः। प्राप्त्यर्थाद् भुवः कर्त्तरि क्तः। कर्मविभक्त्यन्तेत्थंशब्देन भूतशब्दस्य समासः। लक्षणशब्दः करणसाधनः। तस्य कर्मषष्ठ्यन्तेन इत्थम्भूतशब्देन समासः, इत्याह–कश्चिदित्यादि। जटाभिरिति यद्यपि ताभिस्तापसो ज्ञात इत्यर्थे ज्ञानक्रियायां करणत्वादिदं सिद्धम्, तथापि करणत्वाविवक्षायां लक्ष्यलक्षणभावमात्रविवक्षायां तृतीयार्थमिदम्। इत्थंभूतस्य यत्र लक्षणवाचकात् पृथगुपस्थितिरेव तत्रैवानेन तृतीया। न चोत्पन्नायास्तृतीयायाः 'सुपो धातु.' (पा.सू. २.४.७१) इति लुगिति वाच्यम्। कृते समासे तस्या उत्पत्त्या समासरूपप्रातिपदिकानवयवत्वादिति कैयटे स्पष्टम्। कमण्डलुः पाणौ यस्येति बहुव्रीहिः। परे तु कमण्डलुपाणिशब्दादत्र तृतीयापत्तिः, कमण्डलुयुक्तपाणिरूपस्य कमण्डलुपाणित्वस्य लक्षणत्वेन तस्यैव तद्वाचकत्वात्। तदुक्तम् 'अनुर्लक्षणे' (पा.सू. १.४.८४) इति सूत्रे भाष्ये, 'सकृदसौ कमण्डलुपाणिश्छात्रो दृष्टस्तस्य तदेव लक्षणं भवतीति। तदेवेत्यस्य कमण्डलुपाणित्वमेवेत्यर्थः। कमण्डलोर्लक्षणत्वे हि स एवेति वदेत्। किञ्च तन्मध्यपतितन्यायेन तद्विशिष्टस्य प्रातिपदिकत्वेन तस्य तदनवयवत्वोक्तेरनौचित्येन लुको दुर्वारत्वम्। अत एव 'नरंमन्यः' इत्यादौ इजन्तस्योत्तरपदपरत्वाय पूर्वं सुपो लुक् अम्विधिसामर्थ्येन वारितः। 'इच एकाचोऽम्' (पा.सू. ६.३.६८) इति सूत्रे भाष्ये इत्याहुः।**

**भैरवी–** **प्रकारमात्रपर इति–'इदमस्थमुः' इति थमुप्रत्ययान्तो यद्यप्ययमिदं-शब्दार्थसन्निकृष्टाभिन्नप्रकारप्रतिपादक इति प्राप्तम्, एवञ्च**

**कश्चिद्धर्मप्राप्तिर्येन लक्ष्यते तद्वाचकप्रातिपदिकात् तृतीयेति सूत्रार्थः। सूत्रवैयर्थ्यमाशङ्कते–यद्यपीति। प्रकृतसूत्रविषये प्राचीनोक्तविशेषमाह–इत्थम्भूतस्येत्यादिना। लक्षणवाचकात् पृथगुपस्थितिः। शक्त्या लक्षणवाचकशब्दजन्योपस्थित्यविषयत्वम्। किन्त्वन्यशब्दजन्योपस्थिति-विषयत्वमेव। न तृतीयेति–अस्य लक्षणवाचको यः कमण्डलुपाणि-शब्दस्तज्जन्योपस्थितिविषयत्वादिति भावः। अत्र प्रमाणन्तु प्रकृतसूत्रस्थम्भाष्यमेव। तत्र हि 'इत्थम्भूतस्य लक्षणे तत्स्थे प्रतिषेधः' इति वार्त्तिकम्। तत्स्थे–लक्ष्यवाचिशब्दस्थे। अपि भवान् कमण्डलुपाणिं छात्रमद्राक्षीदिति। न वेत्थम्भूतस्य लक्षणेनापृथग्भावात्। 'यत्रेत्थम्भूतस्य पृथग्भूतं लक्षणं तत्र भवितव्यम्' इति युक्तम्। कैयट इत्यनेन सूचितामरुचिं प्रकटयति–परे त्वित्यादिना। अनुर्लक्षण इति सूत्रभाष्य इति–तत्र हि 'न ह्यवश्यन्तदेव लक्षणं भवति येन पुनः पुनर्लक्ष्यते। किन्तर्हि यत्सकृदपि निमित्तत्वाय कल्पते तदपि लक्षणं भवति' इत्युपक्रम्योक्तम्। कैयटोक्तमभ्युपेत्यापि दूषणमाह–किञ्चेति। अत एव पश्चादुत्पन्नस्यापि तन्मध्यपतितन्यायेन तदवयवत्वादेव।**

प्रकृतसूत्रोपदिष्ट 'इत्थम्' पद का प्रकारमात्र अर्थ है। प्राप्त्यर्थक भूधातु से कर्त्रर्थक क्तप्रत्यय का विधान होकर 'भूतः' पदोपपत्ति होती है। 'भूतः' पद का प्राप्तिकर्त्ता अर्थ है। 'इत्थम्' पद कर्मवाचक है। कर्मविभक्त्यन्त 'इत्थम्' उपपद रहते भूधातु से कर्त्ता में क्तप्रत्यय 'कर्तृकर्मणोः कृति' सूत्रद्वारा षष्ठीविभक्ति, उपपदसमास, प्रातिपदिकसंज्ञा, विभक्तिलुक्, स्वाद्युत्पत्ति होकर 'इत्थंभूतः' पदोपपत्ति होती है। लक्ष्यतेऽनेनेति करणविग्रहनिष्पन्न लक्षणशब्द का 'समझा जाय जिससे' अर्थात् ज्ञापक अर्थ होता है। इस प्रकार प्रकृतसूत्रद्वारा किसी प्रकारता को प्राप्त लक्षणवाचकशब्द से तृतीयाविभक्ति का विधान होता है। यथा 'जटाभिस्तापसः' अर्थात् तपस्वी तो कम है; किन्तु लम्बी-लम्बी जटाएँ रख ली हैं, जिनसे तापसत्व का बोध होता है, प्रकृतस्थल में लक्षणवाचक जटाशब्द से तृतीया विभक्ति होती है।

प्र.— 'जटाभिस्तापसः' स्थल में जटा और तापसत्व का परस्पर लक्ष्यलक्षणभावसम्बन्ध है। जटाओं के द्वारा तापसत्व का ज्ञान हुआ, अर्थात् जटाएँ तापसत्व का करण हैं। अतः प्रकृतस्थल में 'कर्तृकरणयोस्तृतीया' सूत्रद्वारा करण में तृतीयाविधान संभव है, 'इत्थंभूतलक्षणे' शास्त्रोपदेश व्यर्थ है?

उ.— लक्षण की करणत्वेन अवविक्षा करने पर सम्बन्धत्वेन विवक्षा में प्राप्त षष्ठी विभक्ति को बाँधकर तृतीयाविधान करने के लिये 'इत्थंभूतलक्षणे' शास्त्रोपदेश आवश्यक है। 'जटाभिस्तापस:' स्थल में जटा लक्षणवाचक है और तापस लक्ष्यवाचक है, अथ च लक्ष्यलक्षणभाव-सम्बन्ध-मात्र की विवक्षा है, अर्थात् लक्ष्यलक्षणवाचक शब्दों से पृथक्–पृथक् उपस्थिति हो और लक्ष्यलक्षणभावसम्बन्धमात्र की विवक्षा हो, वहीं पर प्रकृतसूत्रद्वारा लक्षणवाचक शब्द से तृतीयाविभक्ति का विधान होता है, अत एव हाथ में कमण्डलु होने से उसको छात्र समझता है। 'कमण्डलु: पाणौ यस्य' इति विग्रहोपपन्न कमण्डलुपाणि: पदघटक 'कमण्डलु' लक्षणबोधक है और कमण्डलुपाणि (छात्रादि) लक्ष्य है। प्रकृतस्थल में लक्षण से पृथक् लक्ष्य की उपस्थिति नहीं है, अत एव प्रकृतस्थल में लक्षणवाचक से प्रकृत-सूत्रद्वारा तृतीया नहीं होती है। अर्थात् समस्तपदघटक लक्षणवाचक से तृतीया नहीं होती है, अपितु लक्ष्यलक्षणवाचक पदों से पृथक्-पृथक् उपस्थिति होने पर ही लक्षणवाचक से तृतीया होती है। समस्त स्थल में लक्षण की पदार्थैकदेशरूप से उपस्थिति होती है, और असमस्त स्थल में पदार्थ रूप से।

प्र.— 'कमण्डलुपाणि:' स्थल में समासविधान से पूर्व लक्षणवाचक पद से पृथक् उपस्थिति होने से लक्षणवाचक पद से तृतीया का विधान हो गया, जिसका समासविधानानन्तर लुक् हो गया है?

उ.— समासविधान करने के अनन्तर ही 'कमण्डलु' लक्षण है, इसका ज्ञान होता है। अत एव समासविधान से पूर्व कमण्डलुशब्द से 'इत्थंभूतलक्षणे' सूत्रद्वारा तृतीया असंभव है। अथ च समासविधान के अनन्तर लक्षणवाचक कमण्डलुशब्द से समागत तृतीयाविभक्ति प्रातिपदिकावयव नहीं, अत: तृतीया का लुक् असंभव है। इससे आता है कि लक्ष्यलक्षणवाचक शब्दों से पृथक्–पृथक् उपस्थिति होने पर ही लक्षणवाचक से प्रकृतसूत्रद्वारा तृतीयाविभक्ति का विधान होता है, समासघटक लक्षणवाचक से नहीं, ऐसा कैयट और दीक्षित का मत है।

नागेश का कहना है कि—कमण्डलुपाणिशब्दघटक कमण्डलुशब्द छात्र का बोधक नहीं है, अपितु कमण्डलुपाणि शब्द छात्र का लक्षण = बोधक है, अर्थात् कमण्डलु हाथ में होने से छात्र का ज्ञान होता है। कमण्डलुपाणि

का छात्र के साथ सामानाधिकरण्य होने से प्रथमाविभक्ति प्राप्त है, अथ च कमण्डलुपाणित्वेन छात्र का लक्षण होने से तृतीयाविभक्ति की प्राप्ति है। प्रथमा कारकविभक्ति है तथा प्रकृततृतीया उपपदविभक्ति, अत एव 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' नियमानुसार कमण्डलुपाणि शब्द से प्रथमाविभक्ति होती है।

प्रकृतस्थल में 'कमण्डलुपाणिः' इति समस्तपदघटक कमण्डलुशब्द से समागत तृतीयाविभक्ति प्रातिपदिकावयव न होने से लुक् नहीं हुआ, यह कथन असंगत है, यतो हि समासविधानानन्तर भी समासघटक शब्द से समागत विभक्ति भी तन्मध्यपतितन्याय से प्रातिपदिकावयव ही कहलायेगी, यथा गङ्गा में डूबा हुआ हाथी या घड़ा गङ्गा कहलाता है। प्रकृतस्थल में कमण्डलुपाणि शब्द लक्षण है, कमण्डलु नहीं, यह बात 'अनुर्लक्षणे' (पा.सू. १.४.८४) सूत्र के भाष्य में स्पष्ट है। कमण्डलुपाणिवाला छात्र देखा गया है, अतः कमण्डलुपाणित्व ही लक्षण हो सकता है इत्यर्थप्रतिपदिक— 'सकृदसौ कमण्डलुपाणिश्छात्रो दृष्टस्तस्य तदेव लक्षणं भवति'। तदेव अर्थात् कमण्डलुपाणित्वम्। यदि कमण्डलु की लक्षणत्वेन विवक्षा होती तो, तदेव न कहकर भाष्यकार 'स एव' कहते। समुदायमध्यपतित भी समुदायावयव कहलाता है, इसीलिए भाष्यकार ने 'नरम्मन्यः' प्रयोगघटक अम् के लुक् का विधानसामर्थ्य से वारण किया है।

**यथा**— 'आत्मानं नरं मन्यते' विग्रह में 'नृ अम्' उपपद रहते मन् धातु से खश्प्रत्यय, सार्वधातुकसंज्ञा, श्यन्विकरण, 'अतो गुणे' सूत्रद्वारा पररूप 'नृ अम् मन्य' अवस्था में कृद्योग होने से कर्म में षष्ठी उपपदसमास, विभक्तिलुक् 'नृमन्य' स्थिति में 'इच एकाचोऽम्प्रत्ययवच्च' (पा.सू. ६.३.६८) सूत्रद्वारा एकाच्-पूर्वपद से अम्प्रत्यय 'ऋतो ङिसर्वनामस्थानयोः' सूत्रद्वारा गुण, स्वाद्युत्पत्ति होकर 'नरम्मन्यः' प्रयोगोपपत्ति होती है। 'नृमन्य' अवस्था में विहित सुप्सदृश अम्प्रत्यय को 'तन्मध्यपतितन्यायद्वारा प्रातिपदिकावयव मानकर 'सुपो धातुप्रातिपदिकयोः' सूत्रद्वारा प्राप्तलुक् क़ा विधानसामर्थ्य से वारण किया, समासविधान के अनन्तर अम् का विधान होने से प्रातिपदिक का अवयव नहीं कहलाया, अत एव लुक् नहीं हुआ' यह नहीं कहा। इससे सिद्ध होता है कि 'कमण्डलुपाणि' इति

समस्तपदघटक कमण्डलुशब्द लक्षण नहीं है, इसीलिए तृतीया नहीं आती है, न कि समासविधानानन्तर यदि तृतीया आती, तो दृष्टिगोचर होती। चूँकि तृतीया दृष्टिगोचर नहीं होती है, अतः तृतीया नहीं आई, अर्थात् लक्ष्यलक्षणबोधक पदों का पृथक्–पृथक् उपदेश होने पर ही तृतीया आती है, यह कथन युक्तियुक्त नहीं है।

**संज्ञोऽन्यतरस्यां कर्मणि ।।२.३.२२।।**

**सम्पूर्वस्य जानातेः कर्मणि तृतीया वा स्यात्। पित्रा पितरं वा संजानीते।।इति कौमुदी।।**

**शे.– दैवादिकस्य जनेर्न ग्रहणं तस्याकर्मकत्वात्तदाह–जानातेरिति। कर्मत्वशक्तिरेवात्र तृतीयार्थः।**

**भैरवी– तदुक्तञ्जानातेरिति तन्निमित्तमाह–जनेर्नेति।**

प्रकृतसूत्रद्वारा सम्पूर्वक-ज्ञाधातु के कर्म में विकल्प से तृतीयाविभक्ति का विधान होता है, अत एव 'देवदत्तः पित्रा पितरं वा सञ्ज्ञानीते' वाक्य-घटक ज्ञाधातु के कर्म में विकल्प से तृतीयाविभक्ति का विधान होकर 'पित्रा पितरम्' पदोपपत्ति होती है।

प्रकृतशास्त्रोक्त 'संज्ञः' पदोपपत्ति सम्पूर्वक ज्ञाधातु से भी संभव है और सम्पूर्वक जनी प्रादुर्भावे धातु से भी। प्रकृतस्थल में किस धातु का ग्रहण करें? इस प्रश्न का उत्तर देते हुए ग्रन्थकार लिखते हैं कि 'ज्ञा अवबोधने' धातु सकर्मक है, अथ च दैवादिक 'जनी प्रादुर्भावे' धातु अकर्मक है। प्रकृतसूत्रद्वारा कर्म में विकल्प से तृतीया का विधान होता है, अत एव सम्पूर्वक 'ज्ञा अवबोधने' धातुनिष्पन्न 'संज्ञः' पद का ग्रहण होता है। ज् और न् मिलकर बननेवाला 'ज्ञ्' लाक्षणिक है, जबकि 'ज्ञा अवबोधने' का ज्ञा प्रतिपदोक्त है, अतः 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' न्याय से ज्ञा अवबोधने का ही प्रकृतस्थल में ग्रहण संभव है। इसीलिए कौमुदीवृत्ति में 'सम्पूर्वस्य जानातेः कर्मणि' कहा है। प्रकृतशास्त्रद्वारा कर्म में तृतीया का विधान होता है, इसीलिए 'पित्रा सञ्ज्ञानीते' वाक्य का 'पितृकर्मकज्ञान' अर्थ होता है, अर्थात् प्रकृततृतीया का कर्मत्वशक्तिमान् अर्थ है।

## हेतौ ।।२.३.२३।।

हेत्वर्थे तृतीया स्यात्। द्रव्यादिसाधारणं निर्व्यापारसाधारणं च हेतुत्वम्। करणत्वं तु क्रियामात्रविषयं व्यापारनियतं च। दण्डेन घटः। पुण्येन दृष्टो हरिः। फलमपीह हेतुः। अध्ययनेन वसति। इति कौमुदी।

शे.– हेतुरिह कारणम्। न शास्त्रीयः, तस्य कर्तृसंज्ञाया अपि सत्त्वेन कर्तृतृतीयैव सिद्धेः। ननु लौकिकहेतुरपि करणमित्यत आह– द्रव्यादीति। आदिना गुणक्रिये। साधारणमिति–तज्जनकेऽपि वर्तत इत्यर्थः। करणं तु क्रियाजनकमेवेति भावः। वैषम्यान्तरमाह– निर्व्यापारेति। करणन्तु व्यापारवदेवेति भावः। एवञ्च करणत्वशक्तेर्भिन्नैव हेतुत्वशक्तिरत्र तृतीयार्थ इति तात्पर्यम्। स्फुटप्रतिपत्तये करणे वैलक्षण्यमाह– करणत्वन्त्विति। हेतुहेतुमद्भाव एव तृतीयार्थः। दण्डे व्यापारसत्त्वेऽपि क्रियाजनकत्वाभावान्न करणत्वम्। पुण्ये क्रियाजनकत्वेऽपि निर्व्यापारत्वान्न तत्त्वम्। फलमपीहेति–एतत्सूत्रोदाहरणे। क्वचित्फलमपि हेतुत्वेन विवक्ष्यत इत्यर्थः। तस्यापि स्वज्ञानद्वारा जनकत्वात्। एतच्च 'प्रत्ययः' (पा.सू. ३.१.१) इत्यादि सूत्रेषु कैयटे स्पष्टम्।

भैरवी– करणत्वन्त्विति–'कर्तृकरणयोः' इति सूत्रघटककरणशब्दार्थस्त्वित्यर्थः। 'साधकतमम्' इति सूत्रेण क्रियाजनकस्यैव करणसंज्ञाविधानात्। वैषम्यान्तरेति-लौकिककरणत्वस्य हेतुत्वापेक्षयेत्यादिः। भिन्नैवेति– हेतुत्वशक्तिः। हेतुत्वरूपो धर्मः। स चाखण्डोपाधिर्हेतुर्हेतुरिति पुण्यादिसदृशे व्यापाररहितेऽपि व्यवहारादिति भावः। तथा च नेदं सूत्रं कर्तृकरणयोरिति सूत्रेण गतार्थम्। एवं व्याख्यानेन हेतुत्वकरणत्वयोर्भेदो ज्ञात एवेति करणन्त्वित्यग्रिमोपपादनवैयर्थ्यमत आह–स्फुटप्रतिपत्तय इति। फलस्य हेतुत्वविवक्षायां बीजमाह–तस्यापि। जनकत्वात्–क्रियासाध्यकप्रवृत्ति-जनकत्वात्। इत्थं हि लौकिकक्रमः। फलज्ञानम्, तत फलेच्छा, ततः उपायज्ञानम्। अथोपायधर्मिकफलसाधनताज्ञानम्। तत उपायेच्छा, ततः क्रियां साधयितुं प्रवृत्तिरिति।

प्रकृतशास्त्रद्वारा हेतु के अर्थ में तृतीया का विधान होता है। इस सूत्र में 'तत्प्रयोजको हेतुश्च' शास्त्रविहित हेतुसंज्ञक का ग्रहण नहीं होता है। यथा—'देवदत्तः ग्रामं गच्छति, तं यज्ञदत्तः प्रेरयति' इति वाग्विवक्षा में 'यज्ञदत्तः देवदत्तेन ग्रामं गमयति' वाक्य होता है। प्रकृतस्थल में हेतुसंज्ञक

कर्त्ता तिङ् से उक्त है, अत: उक्तकर्ता में प्रथमा होती है। पुन: प्रयोजकान्तरविवक्षा में, अर्थात् 'यज्ञदत्त: देवदत्तं गमयति तं गुरु: प्रेरयति' इत्याकारकवाग्विवक्षा में यज्ञदत्त हेतु की कर्तृसंज्ञा होने से अनुक्तकर्त्ता में 'कर्तृकरणयो:' शास्त्र से ही तृतीयाविधान संभव है।

प्र.— 'दण्डेन घट: क्रियते' वाक्यघटक दण्ड घटोत्पत्ति में करण है। 'हेतुर्ना कारणं बीजं निदानमादिकारणम्' अर्थात् हेतु और करण पर्यायवाची शब्द हैं। अत: प्रकृतस्थल में 'कर्तृकरणयोस्तृतीया' सूत्रद्वारा ही हेतु में भी तृतीयाविधान संभव है, 'हेतौ' सूत्रोपदेश व्यर्थ है?

उ.— व्याकरणशास्त्र में हेतु और करण दोनों पथक्–पृथक् हैं। 'द्रव्यादिसाधारणं निर्व्यापारसाधारणं च हेतुत्वम्' अर्थात् द्रव्य, गुण अथवा क्रिया का जनक हो और व्यापारवत्त्व उसका साधारणधर्म हो, उसको हेतु कहते हैं। हेतु में व्यापार रह भी सकता है और नहीं भी रह सकता है, यथा—'दण्डेन घट:' वाक्यघटक दण्ड घटरूप द्रव्य का जनक है; किन्तु दण्डनिष्ठव्यापार की अविवक्षा करने से दण्ड हेतु कहलाता है अथवा दण्डनिष्ठव्यापार की विवक्षा होने पर भी भ्रमिरूप क्रिया का जनक न होने से 'दण्डेन' पद में हेतुतृतीया है। 'पुण्येन गौरवर्ण:' स्थल में गौरवर्ण गुण है, जिसका समुत्पादक पुण्य है। 'पुण्य' अदृष्टविशेष है, जिसकी समुत्पत्ति यागादि से होती है। पुण्य व्यापारवत् नहीं है, अत: 'पुण्येन' पद में हेतुतृतीया है। इसी प्रकार 'पुण्येन दृष्टो हरि:' वाक्यघटक पुण्य दर्शनक्रिया का जनक तो है, किन्तु व्यापारवत् नहीं है, इसलिए 'पुण्येन' पद में हेतुतृतीया है। उपर्युक्त विवेचन से आता है कि हेतु का व्यापारवान् होना आवश्यक नहीं है। 'करणत्वन्तु क्रियामात्रजनकं व्यापारवत्वञ्च' अर्थात् जो क्रियामात्र का जनक हो और व्यापारवान् अवश्य हो उसे करण कहते हैं, यथा— 'रामेण बाणेन हतो वाली' वाक्यघटक बाण में गमनव्यापार है और छेदनक्रिया का जनक भी है, अत: 'बाणेन' पद में करणतृतीया आती है।

प्र.— द्रव्य, गुण अथवा क्रिया के जनक तथा व्यापारवान् या व्यापाराभाववान् को हेतु कहते हैं, इस प्रकार हेतु से ही व्यापारवान् क्रिया के जनक करण का भी सङ्ग्रह हो ही जाता है, अत: पृथक् से करण में तृतीया का विधान व्यर्थ है?

उ.— 'विप्र के लिये गौ है' इत्यर्थवाग्विवक्षा में तादर्थ्ये चतुर्थीविधानपूर्वक 'विप्राय गां ददाति' प्रयोगोपपत्ति संभव होने पर भी 'विप्रसम्प्रदानक गौकर्मक दान' अर्थबोधन के लिये यथा 'सम्प्रदाने चतुर्थी' का विधान आवश्यक है, उसी प्रकार 'दण्डेन घटः' इत्यादि स्थल में 'दण्डहेतुक घट' इत्यर्थबोधन के लिये हेतु में तृतीया का विधान आवश्यक है। इसी प्रकार व्यापारवान् क्रियाजनक करण का भी हेतु से सङ्ग्रह होने पर भी करणत्वेन बोधन के लिये करण में तृतीया का विधान आवश्यक है। 'अणुरपि विशेषोऽध्यवसायकरः' यथा 'कृष्णं नमेच्चेत् सुखं यायात्' स्थल में सुखप्राप्ति के प्रति नमन हेतु है, और सुखप्राप्ति हेतुमती है, तथा सुख और प्राप्ति का परस्पर हेतुहेतुमद्भावसम्बन्ध है। उसी प्रकार 'दण्डेन घटः' वाक्यद्वारा 'दण्ड हेतु है और घट हेतुमान् है, तथा दण्ड और घट का परस्पर हेतुहेतुमद्भाव सम्बन्ध है' इसका बोध होता है। 'दण्डेन घटः' स्थल में दण्ड व्यापारवान् होने पर भी क्रिया का जनक न होकर द्रव्य का जनक है। 'पुण्येन दृष्टो हरिः' स्थल में पुण्य क्रियाजनक होने पर भी पुण्य क्रियावत् नहीं है।

फलमपीह हेतुः—'अध्ययनेन वसति' हम यहाँ रहेंगे, तो अध्ययन होगा। निवासक्रिया अध्ययन में हेतु है, अर्थात् अध्ययनफलक वास है। फल होते हुए भी अध्ययन की हेतुरूप से विवक्षा करने पर 'अध्ययनेन' पद में हेतुतृतीया सिद्ध होती है। यह विवेचन 'प्रत्ययः' सूत्र के भाष्य में स्पष्ट है।

प्र.— क्रियाकारकभावसम्बन्ध में कारकविभक्तियाँ आती हैं, यथा 'ग्रामं गच्छति' इत्यादि, किन्तु 'अलं श्रमेण' स्थल में श्रम का किसी क्रिया में अन्वय न होकर 'अलम्' पदार्थ में अन्वय है, अर्थात् अलन्निष्ठकारणता की निरूपिका कोई क्रिया ही नहीं है, करण में तृतीया कैसे?

**उ.– गम्यमानाऽपि क्रिया कारकविभक्तिप्रयोजिका। अलं श्रमेण। साध्यं नास्तीत्यर्थः। साधनक्रियां प्रति श्रमः करणम्। शतेन शतेन वत्सान् पाययति पयः। शतेन परिच्छिद्येत्यर्थः।।इति कौमुदी।।**

**शे.– ननु 'अलं श्रमेण' इत्यादौ क्रियावाचकपदाभावात् क्रियाया अप्रतीत्या कथं करणत्वमत आह–गम्यमानापीति। श्रमेणेत्यादिपदजबोध-विषयापीत्यर्थः, न तूच्चार्यमाणतद्वाचकपदजबोधविषयैवेति भावः।**

**अलंशब्दो निषेधार्थस्तदाह–साध्यं नास्तीत्यर्थः। ननु साध्यमित्यर्थज्ञानेऽपि तस्य श्रमेणेति नामार्थत्वेन न क्रियात्वमत आह–इहेति। स्ववाच्यक्रियां प्रति स्वस्य कारणत्वमित्यर्थः। स्पष्टं चेदं 'इग्यणः' (पा.सू. १.१.४५) इति सूत्रे 'प्रविश पिण्डीम्' इति वाक्यार्थे वाक्यैकदेशप्रयोग इत्यादिना भाष्ये। इति मञ्जूषायां विस्तरः।**

**भैरवी– गम्यमानापीत्यस्यानुसन्धीयमानाऽध्याहृतेत्येवं व्यवह्रियमाणेति नार्थः, क्रियारूपार्थस्याध्याहारे तादृशानुसन्धानस्य पदाजन्यतया शाब्दबोधनियामकत्वासम्भवेन तस्यार्थस्य शाब्दबोधविषयत्वासम्भवात्। नापि शब्दानुसन्धानम्। उच्चारितस्यैव शब्दस्य 'उच्चारितः शब्दः प्रत्यायको नानुच्चारितः' इति भाष्योक्तेरनुसन्धीयमानस्य शाब्दबोधजनकत्वासम्भवात् पिण्डीमित्येतन्मात्रात् पिण्डीं भक्षयेति शाब्दबोधानुपपत्तेः। किन्तु पिण्डीं भक्षयेति वाक्यस्यार्थे पिण्डीकर्मकभक्षणे पिण्डीमित्यस्यैकदेशस्य शक्तिरेव कल्प्यतेऽतस्तावन्मात्रादर्थबोधस्तथा प्रकृतेऽपीत्याशयेनाह–श्रमेणेत्यादिपदजेत्यादिना। नामार्थत्वेन–सुबन्तार्थत्वेन। स्ववाच्येति–स्ववाच्यविशिष्टाया वाक्यैकदेशसाध्यामत्यर्थसाधनक्रिया तां प्रति स्वस्य श्रमेणेत्येकदेशार्थस्य करणत्वं करणत्वव्यवहार इत्यर्थः। वस्तुतस्तु श्रमेणालमिति वाक्यैकदेशस्य श्रमकरणकसाधन-कर्मकर्तृकसत्ताऽभावरूपेऽर्थे शक्तिरेव। एवमेव 'प्रविश पिण्डीम्' इत्यादिवाक्यैकदेशप्रयोगस्थले ज्ञातव्यम्।**

'अलं श्रमेण' वाक्यघटक श्रमनिष्ठ कारणता का निरूपक कौन? ऐसी आकाङ्क्षा होने पर 'साध्यम्' पद का अध्याहार किया जाता है। 'श्रमेण साध्यमलम्' अर्थात् साध्यं नास्ति। अध्याहृत 'साध्यम्' पद में प्रकृतिभूत जो साध्-धातु उसका साधनक्रिया अर्थ है। इस क्रिया से निरूपित कारणता श्रम में है, उसका निषेध 'अलम्' पद से होता है, अर्थात् तुम्हारे श्रम से साधनक्रिया संभव नहीं है। सर्वदा उच्चारितपदबोध्यक्रियानिरूपित कर्मत्व करणत्व ही नहीं होता है—अपितु अध्याहृतपदबोध्यक्रियानिरूपित कर्मत्व करणत्वादि भी होते हैं। अत एव 'अलं श्रमेण' वाक्यघटक 'श्रमेण' पद में करणतृतीया होती है।

प्र.— श्रमेण पद से साध्यक्रिया को समझें, किन्तु 'श्रमेण' पद का तो साध्यक्रिया अर्थ नहीं, अतः 'श्रमेण' पद साध्यक्रिया का बोधक कैसे कहलाता है?

उ.— यद्यपि 'श्रम' नाम = प्रातिपदिक है, अतः श्रमेण पद साध्यक्रिया का बोधक नहीं, अपितु साध्यक्रिया के प्रति 'श्रम' करण है।

स्ववाच्यक्रियां प्रति—स्व = साध्धातु, तद्वाच्य जो साध्यक्रिया, उसका 'श्रमेण' करण है। यह विवेचन 'इग्यणः सम्प्रसारणम्' (पा.सू. १.१.४५) सूत्र के भाष्य में स्पष्ट है, कि अध्याहृतक्रियानिरूपित करणत्व और कर्मत्व शक्तियाँ भी होती हैं। अध्याहार भी होता है, इस विषय में 'वाक्य के अर्थ में वाक्यैकदेश का प्रयोग ही प्रमाण है'। इसका विस्तारपूर्वक विवेचन ग्रन्थकार ने वैयाकरणसिद्धान्तलघुमञ्जूषा में भी किया है।

**अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया।। दास्या संयच्छते कामुकः। धर्मे तु भार्यायै संयच्छति।।इति कौमुदी।।**

**शे.– अशिष्टानां सङ्कीर्णाचाराणां यो व्यवहारः क्रिया तद्बोधकपदप्रयोगे प्रत्यासत्त्या यत्सम्बन्धेन व्यवहारस्य संकीर्णाचारत्वं तद्वाचकाच्चतुर्थ्यर्थे तृतीयेत्यर्थः। दास्येति–दासीसम्प्रदानकरतिफलकं दानमित्यर्थः।**

**भैरवी– अशिष्टव्यवहारेत्यत्र कर्मधारयभ्रमनिराकरणाय–अशिष्टानामिति। अशिष्टपदमत्र न शिष्टभिन्नपरम्। श्रुतिस्मृत्यादिप्रामाण्याभ्युपगन्तॄणामपि रागौत्कट्यात् तादृशव्यवहारस्थले दास्या संयच्छत इति प्रयोगदर्शनादत आह–सङ्कीर्णाचाराणामिति। कालभेदेन धर्माधर्मफलकाचारकर्तॄणामित्यर्थः। प्रकृते च दासीशब्दार्थस्य रतिफलके दाने सम्प्रदानत्वेनान्वयात्तादृशव्यवहारस्य सङ्कीर्णाचारकर्तृकत्वमिति भावः। दास्या संयच्छत इत्यत्र 'दाणश्च सा चेच्चतुर्थ्यर्थे' इति सूत्रेणात्मनेपदम्। या तु भार्या शास्त्रोक्तरीत्या विवाहिता तस्यै दानानन्तरं यत्र तत्प्रत्यनन्तरन्तस्या उपभोगस्तत्र न चतुर्थ्यर्थे तृतीया, अशिष्टव्यवहाराभावादिति न तत्रात्मनेपदमित्याशयेनाह–धर्मे मूले त्विति।**

शास्त्रनिषिद्ध व्यवहार संकीर्णाचार कहलाता है। दानार्थक दाण्धातु के योग में संकीर्ण व्यवहार में जिससे चतुर्थी प्राप्त रहती है, वहाँ तृतीयाविभक्ति का विधान होता है। अर्थात् जिसके सम्बन्ध में संकीर्ण व्यवहार प्रतीत हो, तद्वाचक प्रातिपदिक से तृतीयाविभक्ति होती है। अतः रतिफलकदासीसम्प्रदानक दान इत्यर्थविवक्षा में सम्प्रदान में प्राप्त चतुर्थी को बाँधकर तृतीया होती है।

**।।इति तृतीया-विभक्तिः।।**

## अथ चतुर्थी-विभक्तिः

**कर्मणा यमभिप्रैति स सम्प्रदानम् ।।१.४.३२।।**

दानस्य कर्मणा यमभिप्रैति स सम्प्रदानसंज्ञः स्यात्।।

**चतुर्थी सम्प्रदाने ।।२.३.१३।।**

विप्राय गां ददाति। अनभिहित इत्येव। दानीयो विप्रः। क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्। पत्ये शेते। यजेः कर्मणः करणसंज्ञा सम्प्रदानस्य च कर्मसंज्ञा। पशुना रुद्रं यजते। पशुं रुद्राय ददातीत्यर्थः।।इति कौमुदी।।

शे.– दाधात्वर्थस्येत्यर्थः। इदमुपलक्षणं क्रियामात्रस्य। कर्मणेति सम्बन्धुमिति शेषः। अभिप्रैति–इच्छति। कर्मणा सम्बन्धश्च स्वत्वादिरूपः सम्प्रदानत्वशक्तिमान् सम्प्रदानचतुर्थ्यर्थः। स एवोद्देश्य इत्युच्यते, क्रियाकारकभावः सम्बन्धश्च तदर्थः। विप्रसम्प्रदानकं दानमिति बोधः। कर्मणेति किम्? तदभावे हि कर्मणोऽप्युद्देश्यतयाऽन्तरङ्गत्वात्तस्यैव संज्ञा स्यात्। कर्मसंज्ञया तु पर्यायो भविष्यति। यं स ग्रहणमिति किम्– तदभावे क्रियाकर्मणा योऽभिप्रैति ब्राह्मणादिस्तस्यैव स्यात्। कर्तृसंज्ञा त्वकर्मकविषये सावकाशा। न च कर्त्तुः कर्तृत्वाभावे कथं गोः कर्मत्वम्। कर्मसंज्ञायां कर्तृग्रहणस्य स्वतन्त्रोपलक्षणत्वात्। अत एव 'सार्थाद्धीयते' इत्यत्र कर्त्तुरपादानत्वेऽपि कर्मणि लकारः सिद्धः। ननु कर्मणेत्युक्तावकर्मकक्रियोद्देश्यस्य सम्प्रदानत्वं न स्यादत आह– क्रिययेति। कर्मरहितक्रियया इत्यर्थः। सकर्मकेषु कर्मसंज्ञा अस्या बाधिकेत्याशयेनाह–पत्ये शेते इति। न च दानादीनां तदर्थत्वात्तादर्थ्यचतुर्थ्यैव सिद्धे किमनया संज्ञयेति वाच्यम्, 'दाशगोघ्नौ सम्प्रदाने' (पा.सू. ३.४.७३) इत्यर्थत्वात्, तत्सम्प्रदानकं दानमिति बोधार्थं तदावश्यकत्वाच्च। अत एव तादर्थ्यचतुर्थ्यां दानकर्मणो गवादेः सम्प्रदानार्थत्वेऽपि दानक्रियायास्तदर्थत्वाभावेन चतुर्थ्यन्तार्थस्य दानक्रियान्वयानापत्तिरिति हेलाराजः। तादर्थ्यचतुर्थ्यैव सिद्धे 'चतुर्थी सम्प्रदाने' इति सूत्रे रुच्यर्थानामित्यादिविषये चतुर्थ्यर्थमिति भाष्ये स्पष्टम्। पशुनेति–कर्म तृतीयार्थः। सम्प्रदानं द्वितीयार्थः। एतच्च दानार्थकयजधातुविषयम्। पूजार्थत्वे तु पशोः करणत्वं न्यायसिद्धम्। इदं छान्दसमिति कैयटः।

भैरवी— दानस्य कर्मणेति वाक्यघटकदानेति प्रातिपदिकार्थस्य न क्रियात्वमिति दानस्य कर्मणेत्यनुपपन्नमत आह—दाधात्वर्थस्येति। इदमिति-दाधात्वर्थस्येत्येतत्। अत एव 'क्रियाग्रहणं कर्त्तव्यम्। इहापि यथा स्यात्। श्राद्धाय निगर्हते। युद्धाय सन्नह्यते। पत्ये शेते इति। तत्तर्हि वक्तव्यं न वक्तव्यम्। कथम्। क्रिया हि नाम लोके कर्मेत्युपचरन्ति। कां क्रियां करिष्यसि। किं कर्म करिष्यसि' इति भाष्ये उक्तम्। श्राद्धायेति। श्राद्धं निन्दति। नास्तिकत्वात्। युद्धायेति—युद्धविषयकं सन्नहनपूर्वकं निश्चयं करोतीत्यर्थः। पत्ये शेते इति—पतिमुपसृत्य शेते इत्यर्थः। कर्मणेत्यत्र कर्मपदं न यत्किञ्चित्क्रियाकर्मपरम्। किन्तूच्चारितवाक्यघटकधात्वर्थक्रियाकर्मपरम्। एवञ्च कर्मसम्बन्धवत्त्वे-नेच्छाविषयो यस्स सम्प्रदानं स्यादिति सिद्धम्। अत एव 'अजां ग्रामं नयती'त्यत्र न ग्रामस्य सम्प्रदानत्वम्, तत्र हि अजाग्रामसम्बन्धो जायतामित्येवेच्छा न तु ग्रामोऽजासम्बन्धो जायतामित्याकारिकेच्छा। यदा तु संयोगानुकूलव्यापारमात्रं धात्वर्थः ग्रामसंस्कारार्थञ्चाजानयनं तदा 'ग्रामायाजां नयति' इति भवत्येव। कर्मणेति तृतीयोपपत्तये आह—सम्बन्धुमिति शेष इति। स्वत्वादीति—आदिना स्वामित्वपरिग्रहः। स एवेति—सम्प्रदानत्वशक्तिमानेव। ननु कर्मणेति न कर्त्तव्यम्। यमभिप्रैतीत्युक्त्यापि उद्देश्यस्य लाभात्। क्रियाग्रहणञ्च न कार्यमित्यपरमनुकूलं भविष्यतीत्याशयेनाह—कर्मणेति किम्—उद्देश्यतया धात्वर्थफलाश्रयत्वेनेच्छाविषयत्वादस्योद्देश्यत्वम्। अत एवान्तरङ्गत्वं प्रथमतोऽस्य धात्वर्थफलाश्रयत्वप्रकारकेच्छा ततो विप्रादेस्तत्सम्बन्धित्व-प्रकारकेच्छेति। कर्मणा योऽभिप्रैति इति—कर्मणाऽभिप्रैतीत्युक्ते आख्यातार्थकर्त्तुरुपस्थितत्वाद् योऽभिप्रैतीत्यस्य लाभो भविष्यतीत्यभिप्रायः। न च यं स इत्यस्याध्याहारो भविष्यतीति वाच्यम्। श्रुतपदार्थ-सम्बन्धेनैवाकाङ्क्षाशान्तेरध्याहारे मानाभावात्। ननु कर्त्तुरीप्सितं हि कर्म भवति। न हि तदा कर्त्ताऽस्तीति कथं कर्मसंज्ञेत्याह—न च कर्त्तुरिति। स्वतन्त्रोपलक्षणत्वादिति—स्वातन्त्र्यञ्च धात्वर्थप्रधानीभूत-व्यापाराश्रयत्वं तच्च प्रकृते कर्तृसंज्ञाऽभावेऽप्यक्षतमेवेति भावः। कर्त्तुः सम्प्रदानत्वे इष्टापत्तिरिति तु न भ्रमितव्यम्। 'उपाध्यायशिष्येण गौर्दीयते' इति प्रयोगो यत्र तत्र 'शिष्यायोपाध्यायस्य गौर्दीयते' इति प्रयोगापत्तेः। अत एव—कर्तृग्रहणस्य स्वतन्त्रोपलक्षणत्वादेव।

कर्त्तुरपादानत्वेऽपीति–'सार्थ एनं त्यजति, अयं च सार्थाद्धीयते' इति ह्यत्र सम्प्रत्ययः। सार्थश्च मनुष्यसमुदायः, समुदायश्च समुदाय्यवयवाभिन्नोऽयमपि तत्समुदायावयव इति सार्थस्यापादानत्वेऽपि निरुक्तस्वातन्त्र्यं तस्यास्तीति भावः।

अकर्मकक्रियोद्देश्यस्य 'पत्ये शेते' इत्यादौ पत्यादेः। नन्वकर्मकक्रिया-स्थलेऽतिप्रसङ्गनिवारणाय कृतस्य 'क्रियया यमभिप्रैति' इति वचनस्य कर्मण्यतिप्रसङ्ग इत्यत आह–कर्मरहितेति। इदञ्च व्याख्यानं नापूर्वमित्याशयेनाह–सकर्मकेष्विति। तदर्थत्वात्–सम्प्रदानत्वेनाभिप्रेतो यो विप्रादिस्तत्पुष्ट्यादिप्रयोजकतया विप्रार्थत्वात्। दाशगोघ्नावित्येतदर्थमिति–सम्प्रदाने कारकेऽनेन सूत्रेण दाशगोघ्नशब्दयोर्निपातनात्। अत एव मूले 'दाशन्ति तस्मै दाशः। गां हन्ति तस्मै गोघ्नोऽतिथिः'। इति तयोरर्थं वक्ष्यति। ननु सम्प्रदानशब्दस्य सम्प्रदीयते यस्मै यत्पुष्ट्यादिकामनया इत्यर्थः कल्प्यतेऽतो न तत्सूत्रानुपपत्तिरत आह–तत्सम्प्रदानकमिति।

सम्प्रदानसंज्ञायाः सत्त्वे 'विप्राय गां ददाति' 'दानीयो विप्रः' इति वाक्याद् विप्रसम्प्रदानकं दानमिति, दानसम्प्रदानाभिन्नो विप्रः, इत्यादिरीत्या बोधो भवति। तादर्थ्य एव चेच्चतुर्थीविधानं तदा 'यूपाय दारु' इति शब्दाद्यथा यूपार्थं दार्विति बोधो भवति, तथा 'विप्राय गांददाति' इत्यादिशब्दाद् विप्रार्थं गोकर्मकं दानमित्याद्येव बोधः स्यादिति भावः। किञ्च सम्प्रदानत्वेन तेभ्यः शब्देभ्यो बोधश्चेत् स्वीक्रियते तदा 'कर्मणा यम्.' इति सूत्रस्य 'क्रियार्थोपपदस्य च' इति सूत्रेण गतार्थता न भवति, अन्यथा 'विप्रं पोषयितुम्' इत्याद्यर्थकल्पनयाऽस्य सूत्रस्य तेन सूत्रेण गतार्थता स्यात्। अत एवेति–सम्प्रदानसंज्ञासत्त्वादेव।

यत्तु चतुर्थीसमासे कारकपूर्वपदकत्वाद् गतिकारकोपपदादिति सूत्रं तद्विषये प्रवर्त्तत इति। तन्न। तादर्थ्यचतुर्थ्यैव सिद्धे 'चतुर्थी सम्प्रदाने' इति सूत्रं रुच्यर्थानामित्यादिविषये चतुर्थ्यर्थमिति भाष्यात्तद्विषये कारकपूर्वपदकस्वराभावस्यापि कल्पनसम्भवात्। किञ्च चतुर्थी तदर्थार्थेति सूत्रेण प्रकृतिविकृतिभाव एव समास इति वक्ष्यते। यदि तादर्थ्य एव सर्वत्र चतुर्थी तदा प्रकृतिविकृतिभावस्य सर्वत्रैव सत्त्वेन वक्ष्यमाण-व्यवस्थाप्यनुपपन्ना स्यादिति। पूजार्थत्वे त्विति–एतेन शाब्दबोधेऽपि वैलक्षण्यं सूचितम्।

दानस्य कर्मणा यमभिप्रैति स सम्प्रदानम्-दाधात्वर्थदानक्रियानिरूपित कर्म का जिससे सम्बन्ध करना चाहते हैं, उसकी सम्प्रदानसंज्ञा होती है, यथा—'विप्राय गां ददाति' स्थल में दाधात्वर्थदानक्रिया के कर्म 'गो' का विप्र से सम्बन्ध हो, ऐसा दाता चाहता है। अत: विप्र की सम्प्रदानसंज्ञा होती है। प्रकृतस्थल में प्राप्त सम्बन्धषष्ठी का बाधपूर्वक 'सम्प्रदाने चतुर्थी' सूत्रद्वारा चतुर्थी विभक्ति होती है। **दानस्य कर्मणा**—'दाधात्वर्थदानक्रिया के कर्म से....' वाक्योक्त दानक्रिया धात्वर्थक्रियामात्र का उपलक्षण है, अर्थात् क्रियासामान्य का जो कर्म, उसका जिससे सम्बन्ध करना चाहें, उसकी सम्प्रदानसंज्ञा होती है। क्रियामात्र के कर्म से सम्बन्धोद्देश्य की सम्प्रदानसंज्ञा का विधान करने से 'शिष्याय चपेटां ददाति, विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षायै निबध्नाति' इत्यादि वाक्यों में दाधात्वर्थ-संयोगानुकूलव्यापारनिरूपित चपेटाकर्म से सम्बद्धुमुद्देश्य शिष्य की एवं निपूर्वक-बन्ध्‌धात्वर्थनिबन्धनक्रियानिरूपित मङ्गलकर्म से सम्बद्धुमुद्देश्य विघ्नविघात की सम्प्रदानसंज्ञा सिद्ध होती है। प्रकृतस्थल में निबन्धनक्रियानिरूपित मङ्गलकर्म और विघ्नविघात का परस्पर विनाश्यविनाशकभावसम्बन्ध है। अथ च दाधात्वर्थक्रियानिरूपित चपेटाकर्म का शिष्य के साथ संयोगसम्बन्ध है। क्रियामात्रनिरूपित कर्म का सम्बद्धुमुद्देश्य के साथ स्वत्वादिसम्बन्ध होता है, यथा—'विप्राय गां ददाति' स्थल में दाधात्वर्थदानक्रियानिरूपित गोकर्म का विप्र के साथ स्वत्वसम्बन्ध है, अर्थात् विप्र इस गो का स्वामी बन जाय। सम्प्रदानचतुर्थी का सम्प्रदानत्वशक्तिमान् अर्थ है। विप्र का उद्देश्य करके गोदान होता है, अर्थात् 'उद्देश्यश्चतुर्थ्यर्थः'। इस प्रकार दानक्रिया फलित होती है। इसीलिए 'विप्राय गां ददाति' वाक्य की 'विप्रसम्प्रदानकगोकर्मकदान' इत्यर्थोपपत्ति होती है।

प्र.— **कर्मणेति किम्**? 'क्रियानिरूपित कर्म का जिससे सम्बन्ध करना चाहें, उसकी सम्प्रदानसंज्ञा होती है' इत्यर्थक 'कर्मणा यमभिप्रैति स सम्प्रदानम्' सूत्रोपदेश की अपेक्षा 'क्रिया का जिससे सम्बन्ध करना चाहें, उसकी सम्प्रदानसंज्ञा होती है, इत्यर्थक 'क्रियया यमभिप्रैति स सम्प्रदानम्' शास्त्रोपदेश करना चाहिए?

उ.— क्रिया से सम्बद्धुमुद्देश्य की सम्प्रदानसंज्ञा का विधान करने पर 'विप्राय गां ददाति' वाक्यघटक गोकर्म की भी सम्प्रदानसंज्ञा होने लगेगी; क्योंकि

गोकर्म का दानक्रिया के साथ कर्मतानिरूपकत्वसम्बन्ध है। सम्बद्धुमुद्देश्य की अपेक्षा कर्म का क्रिया के साथ सम्बन्ध अन्तरङ्ग है, अतः कर्म की ही सम्प्रदानसंज्ञापत्ति होने लगेगी।

प्र.— क्रिया से सम्बद्धुमुद्देश्य की सम्प्रदानसंज्ञा होने पर कर्म की सम्प्रदानसंज्ञा होकर सम्प्रदान में चतुर्थी प्राप्त होगी, अथ च कर्मसंज्ञाप्रयुक्त द्वितीया की प्राप्ति होगी, दोनों के मध्य किसका विधान हो?

उ.— निर्णायक वचन के अभाव में एक बार सम्प्रदानसंज्ञाप्रयुक्त चतुर्थी होगी तथा एक बार कर्मसंज्ञाप्रयुक्त द्वितीया होगी। इस प्रकार विकल्पापत्ति दोष आता है, अत एव 'कर्मणा' पदोपदेश आवश्यक है।

'कर्मणा यमभिप्रैति स सम्प्रदानम्' शास्त्रघटक' यं सः' पदोपदेश न कर 'कर्मणा अभिप्रैति सम्प्रदानम्' इत्येतावन्मात्र सूत्रोपदेश करना चाहिए। 'यं सः' पदोपदेश न करने पर क्रियानिरूपित कर्म से जिसका सम्बन्ध होगा, उसी की सम्प्रदानसंज्ञापत्ति होने लगेगी। इस प्रकार कर्त्ता का सम्प्रदानसंज्ञापत्तिरूप दोष समापतित होता है, अत एव 'यं, सः' पदोपदेश आवश्यक है।

प्र.— 'यं सः' पदोपदेश न करने पर प्रधानीभूतव्यापाराश्रय की कर्त्तृसंज्ञा और सम्प्रदानसंज्ञा दोनों की प्राप्ति होती है; किन्तु कर्त्तृसंज्ञाद्वारा सम्प्रदानसंज्ञा का बाध हो जायेगा, अतः 'यं सः' पदोपदेश न करने पर भी कोई क्षति नहीं है?

उ.— कर्त्तृसंज्ञा अकर्मकस्थल में चरितार्थ है, अतः सकर्मकस्थल में कर्त्तृसंज्ञाद्वारा सम्प्रदानसंज्ञा का बाध असंभव है। इसलिए दानकर्त्ता की सम्प्रदानसंज्ञा न होकर 'जिसको दिया जाय' उसकी सम्प्रदानसंज्ञाविधान करने के लिये 'यं, सः' पदोपदेश आवश्यक है।

प्र.— कर्त्तृसंज्ञा का सम्प्रदानसंज्ञाद्वारा बाध होने पर 'राजा गां ददाति' इत्यादि स्थल में गो की कर्मसंज्ञा नहीं होगी, यतो हि कर्त्ताद्वारा ईप्सित की कर्मसंज्ञा होती है। अतः 'यं सः' पदोपदेश न करने पर भी दानकर्त्ता की सम्प्रदानसंज्ञा नहीं होगी?

उ.— यद्यपि 'यं सः' पदोपदेश न करने पर 'राजा विप्राय गां ददाति' वाक्यघटक राजा की सम्प्रदानसंज्ञा होने पर 'गो' कर्त्ता से ईप्सित न होकर सम्प्रदान से ईप्सित कहलाती है, तथापि गो की कर्मसंज्ञा हो जायेगी। यतो हि

'कर्त्तुरीप्सिततमं कर्म' सूत्रघटित कर्त्तृपद कर्त्तृसंज्ञापरक न होकर स्वतन्त्रोपलक्षक है, अथ च राजा दानक्रिया में स्वतन्त्र है। अत एव स्वतन्त्रद्वारा ईप्सित 'गो' की कर्मसंज्ञा संभव है। 'कर्त्तुरीप्सिततमं कर्म' शास्त्रघटक कर्त्तृपद स्वतन्त्रोपलक्षक है, अत एव 'सार्थाद्धीयते' प्रयोगोपपत्ति होती है। यथा—'सार्थाद् एनं जहाति' वाक्यघटक 'एनम्' कर्म में प्रत्यय करने पर 'अयं सार्थाद्धीयते' प्रयोगोपपत्ति होती है। 'कर्त्तुरीप्सिततमं कर्म' सूत्रघटक कर्त्तृपद को कर्त्तृसंज्ञक स्वीकार करने पर अपादानद्वारा ईप्सित की कर्मसंज्ञा असंभव है। तथा च 'सार्थाद् एनं जहाति' वाक्य ही उपपन्न नहीं होगा, कर्मणि प्रत्यय कैसे? 'कर्त्तुरीप्सिततमं कर्म' सूत्रघटक कर्त्तृपद को स्वतन्त्रोपलक्षक मानने पर अपादानद्वारा ईप्सित की भी कर्मसंज्ञा होती है, अत एव 'सार्थाद् एनं जहाति' स्थल में कर्मणि प्रत्ययविधानपूर्वक 'अयं सार्थाद्धीयते' वाक्योपपन्न होता है। यद्यपि हिधातु के योग में अपादानसंज्ञा अप्राप्त है, तथापि तसिप्रत्ययविधायक 'अपादाने चाहीयरुहोः' शास्त्रोपदिष्ट 'अहीयरुहोः' प्रतिषेधसामर्थ्य से आता है कि हिधातु के योग में भी अपादानसंज्ञा होती है। 'सार्थसमुदाय पृथक् करता है' इत्यर्थवाग्विवक्षा में अवधित्वाभाव होने से अपादानसंज्ञा अप्राप्त है, तथापि 'अहीयरुहोः' प्रतिषेधसामर्थ्य से हिधातु के योग में अपादानसंज्ञा-विधानपूर्वक पञ्चमीविभक्ति होती है।

'कर्मणा यमभिप्रैति स सम्प्रदानम्' शास्त्रद्वारा सकर्मकस्थल में सम्प्रदानसंज्ञा का विधान होता है, अत एव अकर्मकधात्वर्थक्रिया से सम्बद्धमुद्देश्य की सम्प्रदानसंज्ञाविधानार्थ 'क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्' वार्त्तिकोपदेश किया है, यथा—'पत्ये शेते' अर्थात् पति के लिये सो रही है। पत्नी की शयनक्रिया से सम्बद्धमुद्देश्य पति की सम्प्रदानसंज्ञा होकर चतुर्थीविभक्ति होती है। सकर्मकस्थल में कर्मसंज्ञाद्वारा 'क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्' का बाध हो जाता है, अतः इसकी प्रवृत्ति अकर्मकक्रियास्थल में होती है।

प्र.— 'विप्राय गां ददाति' अर्थात् गो विप्र के लिये है, यथा—दारु यूप के लिये है, इत्यर्थवाग्विवक्षा में तादर्थ्य में चतुर्थी होकर 'यूपाय दारु' प्रयोगोपपत्ति होती है, तथैव 'विप्राय गाम्' स्थल में तादर्थ्य में चतुर्थीविधान संभव है। 'कर्मणा यमभिप्रैति' शास्त्रद्वारा सम्प्रदानसंज्ञाविधानपूर्वक 'सम्प्रदाने चतुर्थी' शास्त्रोपदेश व्यर्थ है?

उ.— १. सम्प्रदानसंज्ञाविधानपूर्वक चतुर्थी का क्रियाकारकभावसम्बन्धपुर:सर बोध होता है, इसीलिए 'विप्राय गां ददाति' वाक्यघटक विप्र का दानक्रिया में अन्वय होता है। २. सम्प्रदानचतुर्थीस्थल में कारकप्रयुक्तस्वर होता है। ३. 'कर्मणा यमभिप्रैति स सम्प्रदानम्' शास्त्रोपदेश स्वीकार करने पर ही 'दाशगोघ्नौ सम्प्रदाने' शास्त्रद्वारा सम्प्रदान में दाश और गोघ्न शब्दों की सिद्धि होती है। इसलिए सम्प्रदानसंज्ञाविधायक शास्त्रोपदेश आवश्यक है।इति हेलाराज:।।

यद्यपि 'रुच्यर्थानां प्रीयमाण:' इत्यादि शास्त्रविहित सम्प्रदान में चतुर्थीविधान करने के लिये 'सम्प्रदाने चतुर्थी' शास्त्रोपदेश चरितार्थ है; किन्तु क्रियाकारकभावसम्बन्धपुर:सर बोध के लिये सम्प्रदानसंज्ञाविधायक 'कर्मणा यमभिप्रैति स सम्प्रदानम्' शास्त्रोपदेश भी आवश्यक है। इति भाष्यम्।। 'यजे: कर्मण: करणसंज्ञा सम्प्रदानस्य च कर्मसंज्ञा' वार्तिकद्वारा यज्धात्वर्थ-क्रियानिरूपित कर्म की करणसंज्ञा और यज्धात्वर्थक्रियानिरूपित सम्प्रदान की कर्मसंज्ञा होती है, अत एव 'पशुं रुद्राय यजते' इत्यर्थवाग्विवक्षा में 'पशुना रुद्रं यजते' वाक्योपपत्ति होती है। प्रकृतवार्तिक दानार्थक यज्धातु के योग में प्रवृत्त होता है, अत एव पूजार्थक-यज्धातु के न्यायसिद्ध करण में तृतीयाविभक्ति होकर 'पशुना यजते' ही प्रयोग होता है। यह वार्तिक छन्दोविषयक है। इति कैयट:।।

### रुच्यर्थानां प्रीयमाणः ।।१.४.३३।।

**रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणोऽर्थः सम्प्रदानं स्यात्। हरये रोचते भक्तिः। अन्यकर्तृकोऽभिलाषो रुचिः। हरिनिष्ठप्रीतेर्भक्तिः कर्त्री। प्रीयमाणः किम्–देवदत्ताय रोचते मोदकः पथि।इति कौमुदी।।**

**शे.– अभिलष्यतिकर्त्रपेक्षयाऽन्यदभिलष्यतिकर्म तत्कर्तृक इत्यर्थः। यत्किञ्चि-द्विषयकप्रीत्यनुकूलव्यापाराश्रयोऽभिलष्यतिकर्त्ता हरिर्भक्तिमभिलष्यतीति प्रत्ययात्। यत्किञ्चिन्निष्ठप्रीत्यनुकूलः, प्रीतिव्यधिकरणो यो व्यापारस्तदाश्रयो रोचतेः कर्त्तेति अभिलषते रुच्यर्थत्वाभावान्न तद्योगे सम्प्रदानत्वमिति भावः। तदाह–हरिनिष्ठेति। पथीति–न च प्रीयमाणपदाऽभावे सूत्रस्य क्रियाजनकत्वमात्रविवक्षायां संज्ञान्तराप्राप्तिविषये चारितार्थ्येन परत्वादधिकरणसंज्ञया बाधसिद्धे कथमेतदिति वाच्यम्, 'देवदत्तं रोचते' इत्यस्याप्यापत्तेरित्याशयात्। तत्सत्त्वे त्वस्य कर्मसंज्ञापवादत्वान्न दोषः।**

**भैरवी– 'हरिर्भक्तिमभिलष्यति' इत्यत्र 'रुच्यर्थानाम्' इति सूत्रेण चतुर्थ्य-प्रवृत्त्यर्थमर्थभेदं दर्शयति–अभिलष्यतीत्यादिना। प्रीतिव्यधिकरणमिति–एतेन कर्मसंज्ञापवादभूतेयं सम्प्रदानसंज्ञा। न च प्रीधातोरप्येवं सति सम्प्रदानसंज्ञाप्रयोजकत्वं स्यादिति 'हरिं प्रीणयति' इत्यनुपपन्नमिति वाच्यम्। 'प्रीयमाण' इति निर्देशेन प्रीधातुयोगे सम्प्रदानत्वाभावस्य कल्पनात्। कारकाधिकारादाह–क्रियाजनकत्वमात्रेति। षष्ठीविषये। इत्यस्याप्यापत्तेरिति–अत्र कर्मसंज्ञाऽधिकरणसंज्ञावद्बाधिका स्यादिति भावः।**

प्रकृतसूत्रद्वारा रुच्यर्थक धातु के योग में प्रीयमाण की सम्प्रदानसंज्ञा होती है। यथा—'हरये रोचते भक्तिः', प्रीत्यनुकूलव्यापार रुच्धातु का अर्थ है। भक्ति क्या है? ध्यानपूर्वक नामस्मरण करना, भगवद्विग्रह में चन्दनानुलेप करना, भोगराग लगाना इत्यादि व्यापार को भक्ति कहते हैं, अर्थात् भक्ति व्यापारस्वरूपा है। यह भक्ति हरि को रुचती है। भक्ति से हरि में प्रीति उत्पन्न होती है, अत एव हरि प्रीत्याश्रय होते हैं। भक्ति हरि में समवायसम्बन्ध से रहती है। यथा—गम्धात्वर्थसंयोगरूप फल ग्राम में समवायसम्बन्ध से रहने के कारण गम्धात्वर्थ का फलतावच्छेदकसम्बन्ध समवाय कहलाता है, तथैव रुच्धात्वर्थ का फलतावच्छेदकसम्बन्ध समवाय सिद्ध होता है। फलतावच्छेदकसम्बन्ध से फलाश्रय की कर्मसंज्ञा होती है, अत एव फलाश्रय हरि की प्राप्त कर्मसंज्ञा का बाधपूर्वक प्रकृतसूत्रद्वारा सम्प्रदानसंज्ञाविधानपूर्वक चतुर्थी होकर 'हरये रोचते भक्तिः' प्रयोगोपपत्ति होती है।

प्र.— 'भक्तिमभिलष्यति हरिः' वाक्यघटक लष्धातु का भी प्रीत्यनुकूलव्यापार अर्थ है, अत एव प्रीत्याश्रय हरि की प्रकृतवाक्य में भी सम्प्रदानसंज्ञा होकर चतुर्थीविभक्ति का विधान होना चाहिए?

उ.— अभिलष्धात्वर्थक्रियानिरूपित जो कर्त्ता उससे अन्य अभिलष्धात्वर्थ-क्रियानिरूपित जो कर्म वही है कर्त्ता जिसका, उसको 'रुच्यर्थक धातु' कहते हैं। अभिलष् का कर्त्ता हरिः, उससे भिन्न कर्म हुआ 'भक्तिम्' वह है कर्त्ता जिसमें, ऐसा वाक्य हुआ 'हरये रोचते भक्तिः', अत एव एतद्वाक्यघटक रुच्धातु रुच्यर्थक कहलाती है। 'भक्तिमभिलष्यति हरिः' वाक्य में अभिलषति के कर्त्ता से भिन्न 'भक्तिम्' कर्त्ता नहीं है, अत

एव एतद्वाक्यघटक लष्धातु रुच्यर्थक नहीं कहलाती, इसीलिए 'हरि: भक्तिमभिलष्यति' वाक्यघटक प्रीत्याश्रय हरि की सम्प्रदानसंज्ञा नहीं हुई।

प्र.— अभिलष्धात्वर्थक्रियानिरूपित कर्तृभिन्न कर्म है कर्त्ता जहाँ पर, उसे रुच्यर्थक धातु कहते हैं, अथ च रुच्यर्थक धातु के योग में प्रीयमाण की सम्प्रदानसंज्ञा होती है, अत एव 'हरिं प्रीणयति भक्ति:' वाक्यघटक हरि की सम्प्रदानसंज्ञा होनी चाहिए?

उ.— 'रुच्यर्थानां प्रीयमाण:' शास्त्रोपदिष्ट 'प्रीयमाण:' पद की प्रीञ्धातु से कर्म में शानच्प्रत्ययविधानपूर्वक सिद्धि होती है। यदि प्रीञ्धातु के योग में 'भक्ति: हरिं प्रीणयति' वाक्यघटक प्रीत्याश्रय हरि की सम्प्रदानसंज्ञा हो जाय, तर्हि प्रीञ्धातु अकर्मक कहलायेगी। इत्थञ्च प्रीञ्धातु से कर्मणि शानच्प्रत्ययविधान असम्भव होगा। अत: 'प्रीयमाण:' पद में कर्मणि शानच्प्रत्ययविधानसामर्थ्य से ज्ञापित होता है, कि प्रीञ्धातु के योग में प्रीत्याश्रय की सम्प्रदानसंज्ञा नहीं होती है।

'हरये रोचते भक्ति:' वाक्यघटक रुच्धातु का प्रीत्यनुकूलव्यापार अर्थ है, अथ च 'हरि: भक्तिमभिलष्यति' वाक्यघटक लष्धातु का भी प्रीत्यनुकूलव्यापार अर्थ है; किन्तु प्रीति प्रीत्याश्रय हरि में समवायसम्बन्ध से रहती है। अथ च 'हरि: भक्तिमभिलष्यति' स्थल में प्रीति का विषय है भक्ति, अत एव लष्धातु का विषयतासम्बन्धेन प्रीत्यनुकूलव्यापार अर्थात् यत्किञ्चिद्विषयक-प्रीत्यनुकूलव्यापार लष्धात्वर्थ सिद्ध होता है। यत्किञ्चिन्निष्ठप्रीति = हरिनिष्ठा प्रीति, प्रीतिव्यधिकरणव्यापाराश्रया भक्ति, यह 'हरये रोचते भक्ति:' स्थल में कर्त्ता (कर्त्री) है, 'हरि: भक्तिमभिलष्यति' स्थल में भक्ति कर्त्ता (कर्त्री) नहीं है, अत एव लष्धातु रुच्यर्थकधातु ही सिद्ध नहीं होता, इसीलिए लष्धातु के योग में प्रीत्याश्रय की सम्प्रदानसंज्ञा नहीं हुई।

**प्रीयमाणः किम्? देवदत्ताय रोचते मोदकः पथि।।**

प्र.— 'रोचते मोदक: पथि' वाक्य में रुच्धातु का प्रयोग है, अत एव पथिन् की सम्प्रदानसंज्ञाविधानपूर्वक चतुर्थीविधान होना चाहिए?

उ.— 'रुच्यर्थानां प्रीयमाण:' शास्त्रघटक प्रीयमाण: पदोपदेशसामर्थ्यात् समवायसम्बन्ध से प्रीति के आश्रय की सम्प्रदानसंज्ञा होती है। रास्ता को तो मोदक अच्छा लगता नहीं है, अर्थात् मोदक प्रीत्याश्रय नहीं, अत एव पथिन् की सम्प्रदानसंज्ञा नहीं होती है।

प्र.— 'प्रीयमाणः' पदोपदेश न करने पर भी पथिन् की सम्प्रदानसंज्ञा का बाध संभव है। यतो हि रुच्धातु के योग में विषयतासम्बन्ध से प्रीत्याश्रय पथिन् की सम्प्रदानसंज्ञा प्राप्त है, अथ च आधारतया विवक्षा करने पर अधिकरणसंज्ञा प्राप्त है। सम्बन्धत्वेन प्राप्त षष्ठी का बाध करने से सम्प्रदानसंज्ञा चरितार्थ है, अत एव फलाश्रयत्वेन विवक्षा न कर क्रियामात्रजनकत्वेन विवक्षा करने पर अधिकरणसंज्ञाद्वारा परत्वात् हेतु से सम्प्रदानसंज्ञा का बाध होने से 'रोचते मोदकः पथि' वाक्यघटक पथिन् से सप्तमीविभक्ति हो जायेगी, इसके लिये 'प्रीयमाणः' पदोपदेश अनावश्यक है?

उ.— 'प्रीयमाणः' पदोपदेश न करने पर 'देवदत्तं रोचते' प्रयोगापत्ति होने लगेगी। यतो हि 'प्रीयमाणः' पदोपदेश करने पर फलाश्रयत्वेन विवक्षित प्रीत्याश्रय देवदत्त की रुच्धातु के योग में सम्प्रदानसंज्ञा होती है। अथ च 'प्रीयमाणः' पदोपदेश न करने पर रुच्धातु के योग में प्रीत्याश्रय की कर्मसंज्ञा होने लगेगी। सम्प्रदानसंज्ञाद्वारा कर्मसंज्ञा का बाध नहीं हो सकता; क्योंकि क्रियाजनकत्वेन विवक्षा करने पर 'देवदत्ताय रोचते' स्थल में सम्बन्धत्वेन प्राप्त षष्ठी का बाध करने से सम्प्रदानसंज्ञा चरितार्थ हो चुकी है। 'प्रीयमाणः' पदोपदेश करने पर तो सम्प्रदानसंज्ञाद्वारा 'अपवादत्वात्' हेतु से कर्मसंज्ञा का बाध हो जाता है। यतो हि फलाश्रयत्वेन विवक्षित की सकलधातु के योग में कर्मसंज्ञा होती है; किन्तु रुच्धातु के योग में प्रीयमाणः पदोपदेशसामर्थ्य से फलाश्रयत्वेन विवक्षित की सम्प्रदानसंज्ञा होती है, अत एव सम्प्रदानसंज्ञा अपवाद कहलाती है।

**श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः ।।१.४.३४।।**

**एषां प्रयोगे बोधयितुमिष्टः सम्प्रदानं स्यात्। गोपी स्मरात् कृष्णाय श्लाघते, ह्नुते, तिष्ठते, शपते वा। ज्ञीप्स्यमानः किम्–देवदत्ताय श्लाघते पथि।।इति कौमुदी।।**

**शे.– गोपी स्मरादिति–श्लाघादेः स्तुत्यादिना बोधनमर्थः। स्मरादिति हेतौ पञ्चमी। स्तुत्याऽऽत्मानुरागं कृष्णं बोधयतीत्यर्थः। स्तुतिश्च कृष्णस्यैव। एवं ह्नुत्या स्वानुरागं कृष्णं बोधयतीत्यर्थः। ह्नुतिः सपत्न्यादिभ्यः कृष्णस्यैव। एवं स्थित्या शपथेन च कृष्णं स्वानुरागं बोधयतीत्यर्थः। यद्वा स्तुत्या ह्नुत्या च कृष्णं स्वस्त्रीजनं बोधयति, स्थित्या शपथेन**

**च कृष्णं तं बोधयतीत्यर्थः। ज्ञीप्स्यमानपदे ण्यर्थकर्मणः प्रकृत्यर्थकर्मणश्च ग्रहणादित्यन्यत्र विस्तरः। स्तुत्यादिमात्रार्थत्वे कृष्णं श्लाघते कृष्णं ह्नुते इत्येव। ज्ञीप्स्यमान इति ज्ञापनवचनाज्ज्ञपेः सन्नन्तात् कर्मणि शानच्।**

**भैरवी– 'ज्ञीप्स्यमान' इत्यस्य ज्ञाधात्वर्थकर्मणि चेत्प्रत्ययस्तदा ज्ञानविषयस्यानेन सम्प्रदानसंज्ञा णिजन्तार्थकर्मणि चेत् क्रियते तदा ज्ञानाश्रयस्य लाभ इति व्याख्यानभेदेनार्थभेदं दर्शयति–श्लाघादेरिति । आत्मानुरागमिति– ण्यर्थकर्मणि प्रत्ययपक्षे इदम्। ज्ञाधात्वर्थकर्मणि प्रत्ययपक्षे आह– यद्वेति। सन्नन्तार्थकर्मत्वमुभयोरपि संभाव्यत इति विनिगमनाविरहाद् अन्यतरत्रैवेति न नियम इति भावः। उभयथापि कर्मसंज्ञापवादे इयम्। ज्ञाप्यमान इत्येव नोक्तं किन्तु ज्ञीप्स्यमान इत्यतोऽर्थभेद इति तत्त्वम्। एतेन ज्ञाधातोः प्रथमोपस्थितत्वमेव विनिगमकमित्यपास्तम्। यत्तु ण्यन्तार्थकर्मण्येव प्राधान्यादत्र प्रत्यये इति। तन्न। अनुपादानस्वारस्यविरोधात्।**

प्रकृतशास्त्रद्वारा श्लाघ्, ह्नुङ्, स्था और शप् धातुओं के योग में बोधयितुमिष्ट की सम्प्रदानसंज्ञा होती है, यथा—'गोपी स्मरात् कृष्णाय श्लाघते' अर्थात् गोपी कृष्ण की स्तुति करते हुए कहती है, कि— हे कृष्ण! आप अत्यन्त सुन्दर हैं। गोपी स्तुतिद्वारा जनाती है, कि हमारी प्रीति आप में है। स्तुत्यनुकूलव्यापार गोपीनिष्ठ है और व्यापारजन्य स्तुतिफल के आश्रय कृष्ण हैं, अत एव कर्तृवृत्तिव्यापारजन्य फलाश्रय कृष्ण की 'कर्तुरीप्सिततमं कर्म' शास्त्रद्वारा प्राप्त कर्मसंज्ञा को बाँध कर 'श्लाघ.' सूत्रद्वारा सम्प्रदानसंज्ञा होती है, अर्थात् कर्मसंज्ञाबाधिकेयं सम्प्रदानसंज्ञा।

श्लाघादिधातुओं का स्तुत्यादिद्वारा बोध कराना अर्थ है। 'गोपी स्मरात् कृष्णाय श्लाघते' स्थल में स्मरहेतुक श्लाघा है, अर्थात् कामवशात् गोपी कृष्ण की श्लाघा करती है। 'गोपी स्मरात् कृष्णाय ह्नुते' कृष्ण मार्ग में जा रहे थे, किसी गोपी ने उन्हें बुलाकर अपने घर में बैठा लिया। दूसरी गोपी ने आकर पूछा कि कृष्ण तुम्हारे घर में हैं? उसने मना कर दिया, अर्थात् कृष्ण को सपत्नियों से छुपाया, छुपाने से कृष्ण समझें कि मुझ पर इसका प्रेम है। प्रकृतस्थल में भी ह्नुत्यनुकूलव्यापारजन्य फलाश्रय कृष्ण की प्राप्त कर्मसंज्ञा का बाध होकर 'श्लाघ.' सूत्रद्वारा सम्प्रदानसंज्ञा होती है। इसी प्रकार 'गोपी स्मरात् कृष्णाय तिष्ठते शपते वा' में कर्मसंज्ञा

का बाध होता है। यथा गोपी रास्ते में खड़ी है; क्योंकि कृष्ण इसी रास्ते से जायेंगे। खड़े रहने से कृष्ण समझें कि इसका मुझ पर प्रेम है, इसीलिए यह खड़ी है। स्थित्यनुकूलव्यापारजन्य फलाश्रय कृष्ण की प्राप्त कर्मसंज्ञा का बाधपूर्वक सम्प्रदानसंज्ञा होती है। इसी प्रकार गोपी कृष्ण की शपथ ले रही है, अतिशय प्रिय की ही शपथ ली जाती है। प्रकृतस्थल में भी शपथ के द्वारा प्रीत्याश्रय कृष्ण की प्राप्त कर्मसंज्ञा का बाध होकर सम्प्रदानसंज्ञा होती है। इस प्रकार गोपी स्तुति, ह्नुति, स्थिति और शपथ के द्वारा कृष्ण पर हमारी प्रीति है, इस बात को कृष्ण और सखीजनों को जता रही है।

'ज्ञीप्स्यमानः' पद की ज्ञप्धातु से णिच्, ण्यन्त से सन् और सन्नन्त से कर्म में शानच्प्रत्ययविधानपूर्वक उपपत्ति स्वीकार करने पर 'बोधनानुकूलव्यापारानुकूलव्यापारविषयकेच्छीयविषयताश्रय' अर्थ की उपलब्धि होती है। बोधन के विषय कृष्ण होते हैं, तदनुकूलव्यापाररूप फल के आश्रय सखीजन होते हैं, अथ च तदनुकूलव्यापार छुपानेवाली गोपी में रहता है। इस प्रकार प्रकृतस्थल में कृष्ण एवं सखीजन दो कर्मों की उपस्थिति होती है। किस कर्म का ग्रहण करें? इस विषय में विनिगमक न होने से कर्मप्रत्यय से दोनों का ग्रहण करने पर 'गोपी, कृष्ण और सखीजन दोनों को कृष्णविषयक अपने अनुराग का बोधन कराती है' अर्थबोध होता है। यदि ज्ञीप्स्यमानपद से णिच्प्रकृतिकर्म का ग्रहण करते हैं, तो 'गोपी कृष्ण को स्वानुराग का बोधन कराती है' यह अर्थ होता है।

'श्लाघते पथि' स्थल में श्लाघ्धातु का योग होने पर भी पथिन् बोधयितुमिष्ट नहीं है, अतः सम्प्रदानसंज्ञा नहीं होती है।

## धारेरुत्तमर्णः ।।१.४.३५।।

**धारयतेः प्रयोगे उत्तमर्णः उक्तसंज्ञः स्यात्। भक्ताय धारयति मोक्षं हरिः। उत्तमर्णः किम्? देवदत्ताय शतं धारयति ग्रामे।।इति कौमुदी।।**

शे.– **'धृङ् अवस्थाने' इति ण्यन्तस्य ग्रहणं व्याख्यानात्। भक्तायेति– ध्रियमाणं स्वरूपेणावतिष्ठमानं मोक्षं हरिः प्रयुङ्क्ते इत्यर्थः। प्रेरणाया भक्तासत्त्वेऽभावात्तस्यापि प्रेरणाजनकत्वेन कारकत्वं बोध्यम्। अवश्यदेयत्वेन मोक्षेऽपि ऋणत्वं बोध्यम्।**

**भैरवी–** **धारेरिति सूत्रे धृञो ण्यन्तस्य ग्रहणमिति भ्रमवारणायाह–'धृङ् अवस्थाने' इति। व्याख्यानादिति–यदि धृञो हेतुमण्ण्यन्तस्यायं निर्देश इत्युच्यते तदा मोक्षस्य धृञ्धात्वर्थकर्तृकत्वासम्भवः। किञ्च धृञः सकर्मकतया मोक्षस्य कर्मत्वं न स्यात्। धृङस्त्वकर्मकतयाऽण्यन्ततायां कर्तृत्वं मोक्षस्यास्तीति हेतुमति ततो णिचि 'मोक्षस्य' गतिबुद्धि. इति सूत्रेण कर्मत्वं सम्भवतीति 'भक्ताय धारयति मोक्षं हरिः' इति प्रयोग उपपद्यते, इत्येतद्दर्शनमूलकादित्यर्थः। भक्तस्य कारकत्वमुपपादयति–प्रेरणाया इति। नन्वत्र मोक्षस्य ऋणत्वञ्चेत्तदा भक्तस्य उत्तमर्णत्वं तत्स्वामित्वादुपपत्स्यते तदेव न। ऋणं हि नाम यत्र सजातीयदानमङ्गीकृत्य परदत्तद्रव्यादानं तदुत्तरकालिकगृहीतद्रव्यसजातीयद्रव्यदाननाश्योऽ-दृष्टविशेषः। प्रकृते मोक्षस्यैवंविधऋणत्वाभावेनैतत्स्वामिनो भक्तस्य उत्तमर्णत्वासम्भवादत आह–अवश्यदेयत्वेनेति।।**

धारिधातु के योग में उत्तमर्ण की सम्प्रदानसंज्ञा होती है। धृङ्धातु का अवस्थान अर्थ है। अवस्थान अर्थात् चुपचाप स्थित रहना, यथा 'ध्रियते पृथिवी'। धृङ्धातु अकर्मक है, 'मोक्षः ध्रियते, हरिः प्रेरयति' इत्याकारक वाग्विवक्षा में अकर्मकधातु के अण्यन्तावस्था की ण्यन्तावस्था में कर्मसंज्ञा होकर 'हरिः मोक्षं धारयति' प्रयोग बनता है। भक्त ने उत्कट तपस्या की, अत एव हरि के ऊपर ऋण चढ़ गया। उससे उऋण होने के लिये हरि मोक्ष को धारण करते हैं, अर्थात् हरि भक्तसम्बन्धी मोक्ष को धारण करते हैं। इस प्रकार भक्तशब्द से षष्ठीविभक्ति प्राप्त थी, उसको बाँधकर 'धारेरुत्तमर्णः' सूत्र से भक्त की सम्प्रदानसंज्ञा होती है।

'भक्ताय मोक्षं धारयति हरिः' अर्थात् स्वरूपस्थितिरूप मोक्ष को हरि भक्त के लिये देते हैं। प्रकृतस्थल में यद्यपि भक्त प्रेरककर्त्ता नहीं है, तथापि भक्तकृत तपस्याजनित ऋण हरि पर चढ़ा हुआ है। जिस प्रकार ऋणकर्त्ता ऋण के रूपयों को ऋणदाता की प्रेरणा के बिना ही चुकता करने की चिन्ता में रहता है, अर्थात् ऋणदाता प्रेरणा के विना ही प्रेरक सिद्ध हो जाता है। उसी प्रकार भक्त के लिये हरिद्वारा मोक्ष अवश्य देय है। अतः 'मोक्ष' ऋण कहलाता है, मोक्षधारक हरि हैं और प्राप्तकर्त्ता है भक्त। इसलिए हरि अधमर्ण सिद्ध होते हैं और भक्त उत्तमर्ण कहलाता है। अत एव 'धारेरुत्तमर्णः' सूत्रद्वारा उत्तमर्ण भक्त की सम्प्रदानसंज्ञाविधानपूर्वक चतुर्थी होकर 'भक्ताय मोक्षं धारयति हरिः' प्रयोगोपपत्ति होती है।

स्पृहेरीप्सितः ।।१.४.३६।।

स्पृहयतेः प्रयोगे इष्टः सम्प्रदानं स्यात्। पुष्पेभ्यः स्पृहयति। ईप्सितः किम्-पुष्पेभ्यो वने स्पृहयति।। ईप्सितमात्रे इयं संज्ञा। प्रकर्षविवक्षायां तु परत्वात् कर्मसंज्ञा, पुष्पाणि स्पृहयति।।इति कौमुदी।।

शे.- प्रकर्षविवक्षायां त्विति-फलाश्रयत्वेन विवक्षायामित्यर्थः। परत्वादिति-इदं सूत्रं विषयतया क्रियाजनकत्वमात्रविवक्षायां चरितार्थमिति भावः। पुष्पसम्प्रदानकेच्छेति चतुर्थी समभिव्याहारे बोधः। 'कुमार्य इव कान्तस्य त्रस्यन्ति स्पृहयन्ति च'। इत्यत्र क्रियासम्बन्धित्वमात्रविवक्षया षष्ठी। अन्ये तु 'भोगाय' इत्यध्याहृत्य कान्तायेति विभक्तिविपरिणामेन व्याख्येयमित्याहुः। स्पृहधातुरिच्छामात्रवाची फलावच्छिन्नेच्छावाची च। आद्ये सम्प्रदानत्वम्, अन्त्ये कर्मत्वम्। ईप्सितत्वं धात्वर्थजन्यफलाश्रयत्वम्, न तु फलस्य धात्वर्थत्वपर्यन्तमाग्रहः। कर्मसंज्ञायान्तु यथा तल्लाभस्तथोक्तम्।

भैरवी- 'स्पृहेरीप्सितः' इति सूत्रे यदीप्सितपदं तदिच्छाविषयपरम्। 'पुष्पेभ्यः स्पृहयति' इत्युदाहरणे स्पृहिरिच्छामात्रवाची। पुष्पपदार्थस्य च विषयितायां चतुर्थ्यर्थेऽन्वयः। क्रियाजनकत्वञ्च विषयत्वेनैवेति। यदा तु प्रकर्षस्य प्रकृतधातूपात्तव्यापारजन्यफलाश्रयत्वस्य विवक्षा तदा कर्मसंज्ञेति मूलग्रन्थात् प्रतीयते। अत एव 'स्पृहणीयगुणैः' 'स्पृहणीया शोभा' इत्यत्र कर्मण्यनीयर्। 'कुमार्य इव कान्तस्य त्रस्यन्ति स्पृहयन्ति च'। इत्यत्र तु इच्छासम्बन्धित्वमात्रस्य विवक्षा न तु क्रियाजनकत्व-रूपकारकत्वस्यापीत्यतः षष्ठीत्याशयेनाह-फलाश्रयत्वेनेति। प्रकृतसूत्र-चारितार्थ्यमाह-इदं सूत्रमिति। क्रियाजनकत्वमात्रेत्यत्रत्यमात्रपदेन तादृशफलाश्रयत्वव्यवच्छेदः। स्वीयसिद्धान्तरीत्या शाब्दबोधमाह-पुष्पसम्प्रेति। यत्र तु षष्ठी तत्र विशेषमाह-कुर्माय इवेति। क्रियासम्बन्धित्वमात्रेति-मात्रपदेन क्रियाजनकत्वव्यवच्छेदः। ये तु प्रकृतसूत्रेण सम्प्रदानसंज्ञा क्रियासम्बन्धित्वविवक्षायामेव, अत एव षष्ठ्यपवादत्वमस्या इति व्यवहारः। एवं सति 'कुमार्य इव' इत्यत्र कथं षष्ठीत्याकाङ्क्षायामध्याह्रियमाणपदार्थान्वयविवक्षयेत्याहुस्तन्मतमाह-अन्ये त्विति। भोगायेत्यध्याहृत्येति। अत्र शब्दाध्याहारः। यदि तु स्पृहयतियोगविवक्षैव तदाप्याह-कान्तायेति। आहुरित्यस्वरसबीजन्तु

**अस्य सूत्रस्य कारकाधिकारीयत्वात् क्रियासम्बन्धित्वमात्र-विवक्षायामित्यसङ्गतम्। वदतो व्याघातात्। कुमार्य इवेत्यत्र शब्दाध्याहारे विभक्तिविपरिणामे वा गौरवम्, सूत्रस्यैतस्य कर्त्तुरीप्सिततममित्यस्य च विषयविभागश्चोक्त एव।**

**स्पष्टप्रतिपत्तये अत्र सिद्धान्तमाह–स्पृहधातुरिति। फलावच्छिन्न इति। फलमिच्छाया एव। तच्चान्ततो विलक्षणविषयतारूपमेवाश्रीयते, अत एवोक्तम्–प्रकर्षविवक्षायामिति। एवञ्च कर्मसंज्ञायाः शेषषष्ठ्याश्चापवाद इयमित्युक्तिः प्रत्युक्ता। त्रयाणां सूत्राणां परस्परपरिहारेणैव प्रवृत्तेः।।**

स्पृह्धातु के योग में सम्बन्धत्वेन विवक्षित ईप्सित की सम्प्रदानसंज्ञा होती है। 'प्रकर्षविवक्षायान्तु परत्वात् कर्मसंज्ञा'। पुष्पों की स्पृहा करता है, इत्यर्थवाग्विवक्षा में पुष्पों को कर्तृवृत्तिव्यापारप्रयोज्य फलाश्रय मानने पर 'कर्त्तुरीप्सिततमं कर्म' शास्त्रद्वारा कर्मसंज्ञाविधानपूर्वक द्वितीया होकर 'पुष्पाणि स्पृहयति' प्रयोगोपपत्ति होती है। यद्यपि 'स्पृहेरीप्सितः' शास्त्रद्वारा स्पृह्धातु के योग में द्वितीया का भी बाध होना चाहिए; किन्तु 'पुष्पाणि स्पृहयति' स्थल में द्वितीया का बाध नहीं करता है, यतो हि 'पुष्पसम्बन्धिवनगमनेच्छा' इत्यर्थवाग्विवक्षा में सम्बन्धत्वेन प्राप्त षष्ठी को बाँधकर सम्प्रदानसंज्ञा चरितार्थ हो चुकी है। 'पुष्पेभ्यः स्पृहयति' वाक्य का 'पुष्पसम्प्रदानक-स्पृहानुकूल-वर्तमानकालिक-कर्तृवृत्तिव्यापार' अर्थ होता है।

प्र.— 'स्पृहेरीप्सितः' सूत्रद्वारा स्पृह्धातु के योग में सम्बन्धत्वेन विवक्षित ईप्सित की सम्प्रदानसंज्ञा होती है, अत एव 'कुमार्य इव कान्तस्य त्रस्यन्ति स्पृहयन्ति च' वाक्यघटक सम्बन्धत्वेन विवक्षित कान्त की सम्प्रदानसंज्ञा होनी चाहिए?

उ.— स्पृह्धातु के योग में सम्बन्धविधया विवक्षित की क्रियाजनकरूप से विवक्षा होने पर सम्प्रदानसंज्ञा होती है। 'कान्तस्य स्पृहयन्ति' स्थल में कान्त सम्बन्धमात्रतया विवक्षित है, अत एव सम्प्रदानसंज्ञा नहीं होती है। यह ग्रन्थकार का अपना सिद्धान्त है। कुछ वैयाकरण 'भोगाय' पदाध्याहारपूर्वक 'कान्तस्य भोगाय स्पृहयन्ति' रूप से व्याख्यान कर चतुर्थीविधान की उपपत्ति स्वीकार करते हैं तथा कुछ वैयाकरण षष्ठ्यन्त कान्तस्य पद का विभक्तिविपरिणामपूर्वक 'कान्ताय स्पृहयन्ति' रूप से व्याख्यान स्वीकार

करते हैं। ग्रन्थकार का मन्तव्य है, कि—स्पृह्धातु का इच्छामात्र अर्थ भी है और फलावच्छिन्नेच्छा भी । इच्छामात्र अर्थ स्वीकार करने पर स्पृह्धातु के योग में सम्प्रदानसंज्ञा होती है, तथा फलावच्छिन्नेच्छा अर्थ स्वीकार करने पर स्पृह्धातु के योग में कर्मसंज्ञा होती है। प्रकृतसूत्र में ईप्सित शब्द का धात्वर्थक्रियाजन्य फलाश्रय अर्थ है; किन्तु वह फल धात्वर्थ हो, यह आग्रह नहीं है। कर्तुरीप्सित. सूत्रघटक ईप्सित शब्द का 'धात्वर्थक्रियाप्रयोज्य फल हो और वह फल धात्वर्थ भी हो तदाश्रय' अर्थ होता है।

**क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः ।।१.४.३७।।**

**क्रुधाद्यर्थानां प्रयोगे यं प्रति कोपः स उक्तसंज्ञः स्यात्। हरये क्रुध्यति, द्रुह्यति, ईर्ष्यति, असूयति वा। यं प्रति कोपः किम्–भार्याम् ईर्ष्यति। मैनामन्योऽद्राक्षीदिति। क्रोधोऽमर्षः। द्रोहोऽपकारः। ईर्ष्या अक्षमा। असूया गुणेषु दोषाविष्करणम्। द्रोहादयोऽपि क्रोधप्रभवा एव गृह्यन्ते। अतो विशेषणं सामान्येन–'यं प्रति कोपः' इति कौमुदी।।**

**शे.–** भार्यामीर्ष्यतीति–नात्र भार्यां प्रति कोपः, किन्तु परैर्दृश्यमानां तां न सहते इत्येव। एवञ्चात्र न कोपजन्येर्ष्या, किन्त्वन्यपुरुषदर्शनजन्येति भावः। हरेः क्रोधद्रोहाभ्यामिच्छाविषयत्वाभावात् 'क्रियया यम्' इत्यनेन न सिद्धिः' न ह्यकुपितः क्रुद्ध्यति' इति भाष्येण 'प्ररूढकोप एव क्रोधः' इति कुपेस्तदर्थत्वाभावेन न तद्योगे इदम्। 'कुप्यति कस्मैचित्' इत्याद्यसाध्वेव।

**भैरवी–** क्रुधद्रुह–एषामर्थ इव अर्थो येषामित्यर्थः। क्रोधश्चामर्षरूपो मनसो वृत्तिविशेषः। उत्कर्षविरोधिधर्मारोपानुकूलव्यापारात्मकः। द्रोहश्चापकाररूपः। स च तदीयगुणे दोषत्वारोपानुकूलव्यापाररूप इति तयोर्भेदः। ईर्ष्या चाक्षमा सा परकीयपाण्डित्यादिगुणानामसहनं तच्च गुणादिज्ञानजन्यद्वेषात्मकम्। असूया च गुणेषु दोषतादात्म्यारोप इति द्रोहादस्य भेदः। द्रोहविषये नैते देवदत्तस्य गुणाः, किन्तु दोषा एव इति ज्ञानम्। असूयाविषये तु 'देवदत्तो दुष्टः' इत्याकारकं ज्ञानम्। कोपश्च देवदत्तीयविपरीताचरणज्ञानजन्यो वृत्तिविशेष इत्येतेषां कोपप्रभवत्वोपपत्तिः। वस्तुतस्तु वाक्चक्षुरादिविकारानुमेयः प्ररूढकोप एव क्रोधः। द्रोहश्चापचिकीर्षारूपः। मूलोक्तमपकारपदमप्यपचिकीर्षापरम्।

**तान्न क्षमत इति–अत्र क्षमा च परपुरुषदर्शनप्रयोजकदेशविशेष-स्थितिरूपफलानुकूलव्यापारानुकूलव्यापार एव। अत एव तामिति कर्मत्वम्। ईर्ष्या च तदभावः। ननु क्रियया यमित्यनेनैव सिद्धेऽस्य सूत्रस्य वैयर्थ्यमत आह–हरेरिति। कुपधातुयोगे कर्मसंज्ञां वारयति–न ह्यकुपित इति। क्रोध इतीति बोधनेनेति शेषः। तदर्थत्वाभावेन–क्रोधार्थत्वाभावेन। न तद्योग इदम्। कुपधातुयोगे सम्प्रदानत्वन्न, किन्तु तद्योगे कर्मसंज्ञेति शेषः। अत एव भाष्यकैयटोक्तं व्याकुप्येतेति कर्मप्रयोगो मनोरमोक्त उपपन्नो भवति। यदि च–'शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यति नरेन्द्र यस्मै त्वम्। यस्मै प्रसीदसि पुनः स भात्युदारोऽनुदारश्च'।।इति काव्यप्रकाशस्थप्रयोगानुपपत्तिरिति विभाव्यते तदा महाकविप्रयोगदर्शनेन प्ररूढकोपार्थकत्वं कुपधातोरपि कल्पनीयम्। कोपसामान्यार्थककुपधातुयोगे तु नेति समर्थनीयम्। न च 'चित्तदोषार्थानाम्' इत्येव सूत्रमस्तु इति वाच्यम्? द्विषधातुयोगेऽतिप्रसङ्गात्। अत एव 'औषधं द्वेष्टि' इति प्रयोग उपपन्नो भवति। क्रोधादयश्चेतनविषया एव। द्वेषस्तु चेतनाचेतनविषय इति।**

क्रोधार्थक, द्रोहार्थक, ईर्ष्यार्थक एवं असूयार्थक धातु के योग में जिसके प्रति कोप हो उसकी सम्प्रदानसंज्ञा होती है, यथा 'हरये क्रुध्यति यशोदा'। यं प्रति कोप: किम्—भार्यामीर्ष्यति। भार्या छत पर अकेली घूम रही है। घूमती हुई भार्या को दूसरी छत से परपुरुष ताक-झाँक कर रहा है। इस स्थिति को देखकर पति भार्या को डाँट-फटकार रहा है। वास्तव में तो पति का क्रोध ताक-झाँक करनेवाले पुरुष के ऊपर है, कि 'यह देख क्यों रहा है'? पति की डाँट का तात्पर्य है, कि 'मा एनामद्राक्षीदन्य:' अर्थात् इसको अन्य लोग न देखें। इसीलिए प्रकृतस्थल में ईर्ष्यधातु का प्रयोग होने पर भी भार्या की सम्प्रदानसंज्ञा नहीं होती है।

प्र.— 'हरये क्रुध्यति' स्थल में क्रोधक्रियाद्वारा हरि अभिप्रेत होने से 'क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्' वार्त्तिकद्वारा ही सम्प्रदानसंज्ञा संभव है, 'क्रुधद्रुह०' शास्त्रोपदेश व्यर्थ है।

उ.— यथा 'पत्ये शेते' वाक्यघटक शयनक्रियाद्वारा पत्नी का पति से सम्बन्ध है, अर्थात् पत्नी इसलिए सो रही है कि पति भी सो जाय। 'हरये क्रुध्यति' स्थल में क्रोधक्रिया इसलिए नहीं है, कि हरि भी हम पर क्रुद्ध हो

जाँय, अपितु क्रोधकर्त्ता चाहता है, कि हरि हम पर प्रसन्न हों, उनकी कृपादृष्टि हो। इसलिए 'हरये क्रुध्यति' स्थल में 'क्रियया यमभिप्रैति' वाक्यद्वारा सम्प्रदानसंज्ञा की उपपत्ति असंभव है, अतः 'क्रुधद्रुह०' शास्त्रोपदेश आवश्यक है।

प्र.— कुप्धातु का भी क्रोध करना अर्थ है, अत एव कुप्धातु के योग में भी जिसके प्रति कोप हो उसकी सम्प्रदानसंज्ञा होनी चाहिए?

उ.— कुप्धातु के योग में जिसके प्रति कोप होता है, उसकी सम्प्रदानसंज्ञा नहीं होती है, यतो हि कुप्धातु का कोप अर्थ है, न कि क्रोध। क्रोध कोपजन्य है और कोप क्रोध का जनक है। बच्चे की दुष्टक्रिया पर अभिभावक के मन में कोप आता है, न कि क्रोध अर्थात् कुप्धातु क्रोधार्थक नहीं है। भाष्यकार भी कहते हैं 'न हि अकुपितः क्रुध्यति' अर्थात् विना कोप के क्रोधोत्पत्ति नहीं होती है। प्ररूढकोप को क्रोध कहते हैं। अत एव 'कुप्यति कस्मैचित्' इत्यादि प्रयोग असाधु माने जाते हैं।

**क्रुधद्रुहोरुपसृष्टयोः कर्म ।।१.४.३८।।**

**सोपसर्गयोरनयोर्योगे यं प्रति कोपः तत्कारकं कर्मसंज्ञं स्यात्। क्रूरमभिक्रुध्यति।। अभिद्रुह्यति।।इति कौमुदी।।**

**शे.– उपसृष्टयोरित्यस्यार्थमाह–सोपसर्गयोरिति। वैयाकरणनिकाये एष एतदर्थकत्वेन प्रसिद्धः। पूर्वसूत्रापवादोऽयम्।।**

**भैरवी– ननूपसृष्टपदस्य सोपसर्गयोरिति व्याख्यानं कथमत आह–वैयाकरणेति। निकाये–गृहे शास्त्ररूपे।**

प्रकृतसूत्रद्वारा सोपसर्ग क्रुध् और द्रुह् धातु के योग में जिसके प्रति कोप हो, उसकी कर्मसंज्ञा होती है। यथा—'क्रूरमभिक्रुध्यति' स्थल में अभि उपसर्गपूर्वक क्रुध्धातु के योग में क्रूर के प्रति कोप होने के कारण क्रूर की कर्मसंज्ञाविधानपूर्वक द्वितीयाविभक्ति होती है। उपसृष्ट शब्द का वैयाकरणसम्प्रदाय में 'सोपसर्ग' अर्थ है, इसीलिए प्रकृतसूत्रोपदिष्ट उपसृष्टशब्द के 'सोपसर्ग' अर्थ की उपपत्ति होती है। प्रकृतसूत्रद्वारा 'क्रुधद्रुह.' शास्त्रप्राप्त सम्प्रदानसंज्ञा का अपवादत्वहेतु से बाध होता है, यतो हि 'क्रुधद्रुह.' सूत्र का उद्देश्य व्यापक और 'सोपसृष्टयोः.' सूत्र का उद्देश्य व्याप्य है।

**राधीक्ष्योर्यस्य विप्रश्नः।।१.४.३९।।**

**एतयोः कारकं सम्प्रदानं स्यात्। यदीयो विविधः प्रश्नः क्रियते। कृष्णाय राध्यति ईक्षते वा। पृष्टो गर्गः शुभाशुभं पर्यालोचयतीत्यर्थः।।इति कौमुदी।।**

**शे.– यदीय इति–यदीयशुभाशुभसम्बन्धीत्यर्थः। राधीक्ष्योः प्रश्नविषयार्थ-पर्यालोचनमर्थः। कर्मणः प्रश्नविषयस्य धात्वर्थेनोपसङ्ग्रहादकर्मकावेतौ। अत एव श्यन्। 'राधोऽकर्मकादेव' इत्युक्तेः। कृष्णसम्प्रदानकं शुभाशुभपर्यालोचनमर्थः।**

**भैरवी– अत एव–पूर्वोक्तरीत्या राधधातोरकर्मकत्वस्वीकारादेव धात्वर्थैकदेशे कृष्णपदार्थान्वयः। प्रश्नविषयशुभाशुभाश्रयत्वेन कर्मत्वं कृष्णस्येति सकर्मकोऽयं धातुरिति तु न शङ्क्यम्। तस्य फलस्य प्रकृतधात्वर्थप्रधानीभूतव्यापारजन्यत्वाभावात्।**

राध् और ईक्ष् धातुओं का प्रकृतसूत्रोपदिष्ट 'विप्रश्नः' पदसामर्थ्यात् प्रश्नविषयक शुभाशुभपर्यालोचन अर्थ है। शुभाशुभरूप कर्म का धात्वर्थ में सङ्ग्रह होने से ये धातुएँ अकर्मक कहलाती हैं। इन धातुओं के योग में जिसके विषय में नाना प्रश्न किये जाँय, उसकी सम्प्रदानसंज्ञा होती है, यथा—'कृष्णाय राध्यति ईक्षते वा'। यशोदा जी गर्गाचार्य से कृष्ण के विषय में नाना प्रकार के प्रश्न कर रही हैं, कि—हे आचार्य! इनका आयुष्य कैसा है? यश कैसा रहेगा? इत्यादि-इत्यादि, गर्गाचार्य उत्तर दे रहे हैं। अत एव कृष्ण की सम्प्रदानसंज्ञाविधानपूर्वक चतुर्थी होकर 'कृष्णाय राध्यति ईक्षते वा' प्रयोगोपपत्ति होती है।

नृत्यति का 'गात्रविक्षेपं करोति' अर्थ है, यथा गात्रविक्षेप रूप अर्थ का धात्वर्थ में सङ्ग्रह होने से नृत्धातु अकर्मक कहलाती है—तथैव राध्धातु का प्रश्नविषयक शुभाशुभपर्यालोचन अर्थ होने से, शुभाशुभरूप कर्म का धात्वर्थ में संग्रह हो जाता है, अत एव राध्धातु अकर्मक कहलाती है, अत एव प्राप्त षष्ठी का बाध होकर प्रकृतसूत्र से सम्प्रदानसंज्ञा होती है। राध्धातु अकर्मक है, इसीलिए 'राध्यति' प्रयोग में 'राधोऽकर्मकादेव' नियमद्वारा श्यन्प्रत्यय होता है। 'कृष्णाय राध्यति' वाक्य का 'कृष्ण-सम्प्रदानक शुभाशुभपर्यालोचन' अर्थ है।

## प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्त्ता।।१.४.४०।।

**आभ्यां परस्य शृणोतेर्योगे पूर्वस्य प्रवर्त्तनारूपस्य व्यापारस्य कर्त्ता सम्प्रदानं स्यात्। विप्राय गां प्रतिशृणोति आशृणोति वा। विप्रेण मह्यं देहीति प्रवर्त्तितस्तं प्रतिजानीत इत्यर्थः।।इति कौमुदी।।**

**शे.– व्याख्यानात् प्रत्येकं निमित्तत्वमित्याशयेनोदाहरति– गां प्रतिशृणोतीति। अनयोः प्रवर्त्तनापूर्वकाभ्युपगमोऽर्थः। तत्र विप्रस्य कर्तृप्रयोजकत्वेन हेतुत्वे प्राप्ते वचनम्।।**

**भैरवी– व्याख्यानादिति–द्विवचननिर्देशमूलकव्याख्यानादित्यर्थः। अनयोः– तत्तदुपसर्गपूर्वकयोः। अत्र विप्रपदाच्चतुर्थ्या आश्रयत्वमर्थः। तस्य प्रवर्तनायामन्वयः। वस्तुतस्तु सम्प्रदानशक्तिमत्त्वेनैवान्वय इति।**

प्रति एवं आङ् पूर्वक श्रुधातु के योग में पूर्वप्रवर्त्तक की सम्प्रदानसंज्ञा होती है। प्रकृतसूत्रद्वारा प्रतिपूर्वक श्रुधातु एवं आङ्पूर्वक श्रुधातु के योग में पूर्वप्रवर्त्तक की सम्प्रदानसंज्ञा होती है, न कि प्रत्याङ् इत्येतत् समुदायपूर्वक श्रुधातु के योग में, इसीलिए सूत्र में 'प्रत्याङ्भ्याम्' पद द्विवचनान्ततया निर्दिष्ट है। यथा—विप्राय गां प्रतिशृणोति-आशृणोति वा। विप्र ने किसी श्रेष्ठी से कहा कि—तुम हमें गौ दो, श्रेष्ठी ने 'गौ' देना स्वीकार कर लिया। अत एव प्रकृतस्थल में पूर्वप्रवर्त्तक विप्र की सम्प्रदानसंज्ञाविधानपूर्वक चतुर्थीविभक्ति होकर 'विप्राय गां प्रतिशृणोति, आशृणोति वा, वाक्योपपत्ति होती है। प्रकृतस्थल में विप्र को कर्त्तृप्रयोजक मानने पर हेतुतृतीया की प्राप्ति थी अथवा प्रवर्त्तनारूप व्यापार में विप्र का सम्बन्धविधया अन्वय स्वीकार करने पर षष्ठी की प्राप्ति थी। उसका प्रकृतशास्त्रद्वारा बाध होता है।

## अनुप्रतिगृणश्च ।।१.४.४१।।

**आभ्यां गृणातेः कारकं पूर्वव्यापारस्य कर्तृभूतमुक्तसंज्ञं स्यात्। होत्रेऽनुगृणाति–प्रतिगृणाति वा। होता प्रथमं शंसति, तमध्वर्युः प्रोत्साहयतीत्यर्थः।।इति कौमुदी।।**

**शे.– अनुप्रतीति भिन्नं पदं लुप्तपञ्चम्यन्तम्। 'गृण' इति श्नान्तानुकरणात् षष्ठी। शंसितुः शंसनविषयहर्षानुकूलव्यापारलक्षणं प्रोत्साहनमनयोरर्थः। पूर्वव्यापारस्येति–शंसनस्येत्यर्थः। प्रोत्साहयतीति–ओथामेत्यादिशब्दैरिति शेषः।**

**भैरवी–** **'अनुप्रति' इति सूत्रे अनुप्रतिभ्यामिति समासः। यद्वा प्रकृतिवदित्यतिदेशेन लुक्, तदाह–लुप्तपञ्चम्यन्तमिति। प्रत्येकमिति शेषः। अत एव प्रत्येकं निमित्तत्वम्। तस्मादाह–अनयोरिति। शंसनस्येत्यर्थ इति–उपस्थितत्वात्।।**

अनुपूर्वक गृधातु का और प्रतिपूर्वक गृधातु का व्यापारद्वय अर्थ है। होता 'गणानां त्वा स्वाहा' कहकर प्रथम व्यापार करता है। अध्वर्यु 'ओथाम' इत्यादि कहकर प्रोत्साहित करता है, अत एव होता का व्यापार प्रथम व्यापार कहलाता है और अध्वर्यु का व्यापार द्वितीय। प्रकृतशास्त्रद्वारा प्रथमव्यापाराश्रय कर्त्ता की सम्प्रदानसंज्ञा होती है। अनुप्रतिगृणश्च शास्त्र में 'अनुप्रति' लुप्तपञ्चम्यन्त पद है, अत एव प्रकृतशास्त्रद्वारा अनुपूर्वक गृधातु और प्रतिपूर्वक गृधातु उभयत्र प्रथम व्यापाराश्रय की सम्प्रदानसंज्ञा होती है।

प्र.— गृधातु का षष्ठ्येकवचन में 'ग्रः' पदोपदेश करना चाहिए?

उ.— प्रकृतसूत्र में श्नाप्रत्ययान्त 'गृणा' का अनुकरणपूर्वक षष्ठ्येकवचन में 'गृणः' पदोपदेश किया है।

अनुपूर्वक गृधातु का और प्रतिपूर्वक गृधातु का शंसनविषय हर्षानुकूल व्यापार अर्थ है। अर्थात् शंसनरूप व्यापार का विषय जो हर्ष तदनुकूल प्रोत्साहनरूप व्यापार। शंसनरूप व्यापार होता में रहता है और प्रोत्साहनरूप व्यापार अध्वर्यु में, इस प्रकार प्रोत्साहनरूप व्यापारजन्य हर्षरूप फल के आश्रय होता की प्राप्त कर्मसंज्ञा का बाध होकर प्रकृतसूत्रद्वारा सम्प्रदानसंज्ञाविधानपूर्वक चतुर्थी होकर 'होत्रेऽनुगृणाति-प्रतिगृणाति' प्रयोगोपपत्ति होती है।

### परिक्रयणे सम्प्रदानमन्यतरस्याम् ।।१.४.४४।।

**नियतकालं भृत्या स्वीकरणं परिक्रयणं तस्मिन् साधकतमं कारकं सम्प्रदानसंज्ञं वा स्यात्। शतेन शताय वा परिक्रीतः।।इति कौमुदी।।**

**शे.–** **शतायेति–करणस्यैव सम्प्रदानत्वेन भानमत्र। शतव्यापारश्च दानरूप एवेति बोध्यम्।**

**भैरवी–** **करणत्वस्य व्यापारनियतत्वसंरक्षणायाह–व्यापारश्चेति।**

प्रकृतसूत्रद्वारा परिक्रयण के करण की विकल्प से सम्प्रदानसंज्ञा होती है। वेतनादिस्वीकृतिपूर्वक निश्चित अवधि तक कर्म करने को परिक्रयण कहते

हैं। यथा—एक सौ रूपये में तुमको दस दिन काम करना होगा। प्रकृतस्थल में शत करण है, अतः प्रकृतशास्त्रद्वारा विकल्प से सम्प्रदानसंज्ञा होकर 'शतेन शताय वा परिक्रीतः' प्रयोगोपपत्ति होती है। 'शताय परिक्रीतः' वाक्य का 'शतसम्प्रदानक भूतकालिक परिक्रयण' रूप से अर्थबोध होता है। प्रकृतस्थल में करण का ही सम्प्रदानविधया भान होता है। शतकरण का व्यापार दान है।

**तादर्थ्ये चतुर्थी वाच्या।।वा.।।**

**मुक्तये हरिं भजति।।इति कौमुदी।।**

**शे.– तादर्थ्ये–तादर्थ्यमुपकार्योपकारकभावरूपः सम्बन्धः। यदा तादर्थ्यस्य सम्बन्धत्वेन भानं तदा षष्ठी–'गुरोरिदं गुर्वर्थम्' इत्यत्र भाष्ये स्पष्टम्।।**

**भैरवी– तस्मै इदं तदर्थम्। तस्य भावस्तादर्थ्यम्। अस्याश्च चतुर्थ्या उपपदविभक्तित्वेनेयं विशेषणादेव। उपकारकत्वमत्र न साक्षादेव। किन्तु परम्परयापि। एवं 'मुक्तये हरिम्भजति' इत्यत्रेव, 'ब्राह्मणाय पायसम्' इतिवद्धीत्यत्रापि चतुर्थी सिध्यति। 'ब्राह्मणाय वेदः' इत्यत्रापि तादर्थ्य एव।**

तस्मै इदम्, तदर्थम्। तदर्थस्य भावः तादर्थ्यम्। तस्मै = कार्य के लिये, तदर्थम् = कारण है। उपकार्योपकारकभावसम्बन्ध को ही तादर्थ्य कहते हैं, यथा 'मुक्तये हरिं भजति' स्थल में उपकारक = कारण हरिभजन है और मुक्ति उपकार्य अर्थात् कार्य है। मुक्ति के लिये हरिभजन है। प्रकृतवार्त्तिकद्वारा उपकार्योपकारकभावस्थल में उपकार्यबोधक शब्द से चतुर्थी होती है।

**क्लृपि सम्पद्यमाने च।।वा.।।**

**भक्तिर्ज्ञानाय कल्पते, सम्पद्यते, जायते इत्यादि।।इति कौमुदी।।**

**शे.– क्लृपीति सप्तमी। अर्थग्रहणञ्चात्र। सम्पत्तिः उत्पत्तिः। क्लृप्यर्थकधातुयोगे उत्पद्यमानेऽर्थे वर्त्तमानाच्चतुर्थीत्यर्थः।**

**भैरवी– क्लृपीत्यत्र इका निर्देश इति भ्रमवारणायाह–सप्तमीति। अर्थग्रहणमिति–जायते इत्यादियोगे चतुर्थीदर्शनमूलकव्याख्यानात्।**

क्लृप्यर्थक धातु का योग हो, अथ च सम्पद्यमान अर्थ द्योतित हो, तदा (सम्पद्यमान) उत्पद्यमानार्थवृत्तिशब्द से चतुर्थीविभक्ति होती है। यथा

भक्ति ज्ञान के लिये समर्थ है। क्लृत्यर्थक कल्पते, सम्पद्यते और जायते के योग में उत्पद्यमानार्थवृत्ति ज्ञानशब्द से चतुर्थीविभक्ति होकर 'भक्तिर्ज्ञानाय कल्पते, सम्पद्यते, 'जायते' प्रयोगोपपत्ति होती है। अर्थात् भक्ति ज्ञान के लिये समर्थ है। 'जायते' इत्यादि के योग में चतुर्थीदर्शनरूप व्याख्यान से प्रकृतवार्त्तिक में अर्थग्रहण करते हैं।

**उत्पातेन ज्ञापिते च।।वा.।।**

अशुभसूचक भूतविकार को उत्पात कहते हैं। उत्पात से ज्ञापित अर्थ में वर्त्तमानशब्द से चतुर्थी होती है। यथा—

**वाताय कपिला विद्युद् आतपायातिलोहिनी।**
**पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत्।।**

अर्थात् वर्षर्तु में कपिला विद्युत् के चमकने पर आँधी अधिक आती है, अतिलोहिनी विद्युत् के चमकने पर गर्मी अधिक होती है, पीता विद्युत् के चमकने पर वर्षा अधिक होती है और सिता विद्युत् के चमकने पर दुर्भिक्ष होता है। प्रकृतस्थल में कपिलादि विद्युत्प्रकाशन उत्पात है और दुर्भिक्षादि ज्ञापित अर्थ है। अत एव उत्पातद्वारा ज्ञापित अर्थवृत्ति वातादि शब्दों से चतुर्थीविभक्ति होकर 'वाताय कपिला विद्युत्' इत्यादि प्रयोगों की उपपत्ति होती है।

**हितयोगे च।।वा.।।**

**ब्राह्मणाय हितम्।।इति कौमुदी।।**

**शे.– चात् सुखयोगेऽपि।**

**भैरवी– न्यूनतां वारयति–यथा–तस्मै हितमिति निर्देशाद् हितशब्दयोगे चतुर्थी तथा 'चतुर्थी तदर्थार्थबलहितसुखरक्षितैः' इति सूत्रेण चतुर्थ्यन्तस्य सुखशब्देन सह समासविधानाज्ज्ञापकात् सुखयोगेऽपि भवतीति भावः।**

हितशब्द के योग में और चकारात् सुखशब्द के योग में चतुर्थीविभक्ति होती है। 'चतुर्थी तदर्थार्थबल.' शास्त्रद्वारा चतुर्थ्यन्त का सुखशब्द के साथ समासविधान करने से हम जानते हैं, कि सुखशब्द के योग में भी चतुर्थीविभक्ति होती है।

**क्रियार्थोपपदस्य च कर्मणि स्थानिनः।।२.३.१४।।**

क्रियार्था क्रिया उपपदं यस्य तस्य स्थानिनोऽप्रयुज्यमानस्य तुमुनः कर्मणि चतुर्थी भवति। फलेभ्यो याति। फलान्याहर्त्तुं यातीत्यर्थः। नमस्कुर्मो नृसिंहाय। नृसिंहमनुकूलयितुमित्यर्थः। एवं 'स्वयंभुवे नमस्कृत्य' इत्यादावपि।।इति कौमुदी।।

शे.– क्रिया अर्थः फलं यस्य तत् क्रियार्थम्। तेन स्ववाचकं लक्ष्यते क्रियाफलकार्थवाचकमुपपदं यस्येत्यर्थः। सोऽर्थश्च प्रत्यासत्त्या क्रियारूप एव। स्थानिशब्दश्चाऽप्रयुज्यमानवाची वैयाकरणानां निकाये प्रसिद्धः। क्रियार्थक्रियोपपदत्वञ्च तुमुनादेरेवेत्याह–क्रियार्था क्रियेति। 'फलेभ्यो याति' इत्यादौ फलकर्मकाऽऽहरणफलकं यानमिति बोधः, यथा वाक्यार्थे वाक्यैकदेशप्रयोगस्थले 'प्रविश पिण्डीम्' इत्यादौ पदस्य सम्पूर्णवाक्यार्थशक्तता तथाऽस्य समुदायस्याहरणघटितोक्ताऽर्थे शक्तिरेतच्छास्त्रबलात्। स्थानिन इत्युक्तेस्तत्प्रयोगे नेति बोध्यम्। अयमेवार्थाध्याहारः। 'नमस्कुर्मो नृसिंहाय' इति–'नमः स्वस्ति.' (पा.सू. २.३.१६) इत्यनेन तु न सिद्धिः, 'उपपदविभक्तेः' इति न्यायेन द्वितीयापत्तेः। पिण्डीमित्यादावप्रयुज्यमानभक्षणक्रियाकर्मणि चतुर्थीवारणाय क्रियार्थोपपदस्येति।

भैरवी– क्रियार्थमिति–नपुंसकत्वमत्रोपपदापेक्षया। अत एव लक्षणा तथा च यत्सिद्धं तदाह–क्रियाफलकार्थेति। फलेभ्यो यातीत्यादेः फलान्याहर्तुमित्याद्याकारकबोधश्च 'उच्चारितः शब्दः' इति नियमान्न सम्भवतीति शङ्कानिवारणायाह–यथा वाक्यार्थ इति। यत्तु प्रकृतसूत्रबलादेतत्सूत्रोदाहरणघटितवाक्यात् पदानुपस्थितस्याप्याहरणस्य शाब्दबोधविषयत्वं कल्प्यते। पदजन्यपदार्थोपस्थितिरेव शाब्दबोधहेतुरित्यस्यौत्सर्गिकत्वादत्र त्याग एवेति। तन्न। उक्तरीत्या भाष्यविरोधेन सत्याङ्गतामेवं कथनस्यानुपयोगात्। 'नमस्कुर्मः' इत्यत्र नमःशब्दद्योत्यार्थे नृसिंहशब्दार्थान्वये 'नमः स्वस्ति.' इति सूत्रेणैव चतुर्थीसिद्धावस्य सूत्रस्य प्रवृत्तिवैयर्थ्यमत आह–नमः स्वस्तीत्यनेनेति। 'कर्मणि स्थानिनः' इत्येतावन्मात्रस्यैवोपादानमस्त्विति आह–पिण्डीमित्यादाविति।।

क्रियार्थक क्रिया के उपपद रहने पर तुमुन् प्रत्यय होता है। इस तुमुन्नन्त के कर्मबोधक शब्द से चतुर्थीविभक्ति होती है। तुमुन् का स्थानी हो अर्थात् तुमुन् प्रयुज्यमान न हो। स्थानी शब्द का ही अर्थ है, कि वह न हो।

'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' सूत्रद्वारा क्रियार्थक क्रिया के उपपद में रहने पर धातु से तुमुन् प्रत्यय होता है, यथा 'फलानि आहर्तुं याति' फलाहरण के लिये जाता है। याति-क्रिया का प्रयोजन है फलाहरण (फल लाना)। फलाहरण भी क्रिया है और फलाहरण के लिये गमन भी क्रिया है। प्रकृतस्थल में क्रिया है, अर्थ = प्रयोजन जिसका ऐसी याति क्रिया (गमनक्रिया) के उपपद रहते आङ्पूर्वक हृधातु से तुमुन् प्रत्यय होता है। 'किया अर्थः फलं यस्य तत् क्रियार्थम्, तेन स्ववाचकं लक्ष्यते' स्वम्= आहरण क्रिया तद्वाचकं यातिक्रिया अर्थात् एक क्रिया वाचककोटि में आती है और दूसरी क्रिया वाच्यकोटि में। 'क्रियाफलकार्थवाचकमुपपदं यस्येत्यर्थः'। क्रियाफलं यस्य सः क्रियाफलकः। क्रियाफलकश्चासौ अर्थः इति क्रियाफलकार्थः। यद्यपि 'क्रिया फलं यस्य' इस विग्रह में बहुव्रीहिसमासविधान से ही अन्यपदार्थ का लाभ हो जाता है, तथापि यथा—शुभ्रं वस्त्रं यस्येति विग्रहोपपन्न शुभ्रवस्त्रः पद से ही देवदत्तरूप अन्यपदार्थ का लाभ होने पर भी यथा 'शुभ्रवस्त्रो देवदत्तः' वाक्य का लोक में प्रयोग होता है, तथैव 'क्रिया फलं यस्य सः, इति विग्रहोपपन्न क्रियाफलकः पद से ही अर्थरूप अन्यपदार्थ का लाभ होने पर भी क्रियाफलकश्चासौ अर्थः विग्रहोपपन्न क्रियाफलकार्थः पदोपदेश किया है। फलाहरणरूप क्रिया ही है फल (प्रयोजन) जिसका ऐसी गमनक्रिया तदर्थवाचक पद = याति पद, उसके उपपद रहते आङ्पूर्वक हृधातु से तुमुन् होकर 'आहर्त्तुम्' पदोपपत्ति होती है।

क्रियाफलक रूप अर्थ भी उपस्थिततत्वात् क्रियारूप ही है। इस तुमुन् का स्थानी हो, अर्थात् तुमुन्नन्त पद अप्रयुज्यमान हो। वैयाकरणसम्प्रदाय में स्थानिशब्द का अप्रयुज्यमान अर्थ ही प्रसिद्ध है। क्रियार्थक क्रिया के उपपद रहने पर तुमुन् होता है, उसके अप्रयुज्यमान होने पर तुमुन्नन्त के कर्म में चतुर्थी होकर 'फलेभ्यो याति' प्रयोगोपपत्ति होती है। अत एव 'फलेभ्यो याति' वाक्य की 'फलकर्मक आहरणफलक वर्त्तमानकालवृत्ति यान' अर्थोपपत्ति होती है। अर्थात् फलकर्मक जो आहरण, वह आहरण है फल जिसका, ऐसा वर्तमानकालिक गमन। प्रकृतस्थल में 'फलानि आहर्तुं याति' इत्यर्थवाग्विवक्षा में 'फलेभ्यो याति' का तथैव प्रयोग है, यथा 'कस्मात् आगतः' इति वाक्यार्थविवक्षा में 'कुतः' पद का एवं 'ग्रामाद् आगतः' इति वाक्यार्थविवक्षा में 'ग्रामात्' पद का प्रयोग होता है। इसी प्रकार

'ग्रामं प्रविश, पिण्डीं भुङ्क्ष्व' इस वाक्यार्थविवक्षा में 'प्रविश, पिण्डीम्' इत्येकदेश का प्रयोग होता है। प्रकृतशास्त्रद्वारा तुमुन् के अप्रयुज्यमान होने पर ही चतुर्थी होती है, तुमुन्नन्त का प्रयोग करने पर नहीं।

यही अर्थाध्याहार कहलाता है। नमस्कुर्मो नृसिंहाय—नृसिंह भगवान् को अनुकूल करने के लिये नमस्कार करते हैं। 'फलेभ्यो याति' स्थल में यथा फलाहरणार्थक क्रिया गमनक्रिया है, तथैव प्रकृतस्थल में नृसिंहानुकूलक्रियार्थक क्रिया नमस्कार क्रिया है, इसके उपपद रहते धातु से तुमुन् होता है, उस तुमुन् के अप्रयुज्यमान होने पर, अप्रयुज्यमान तुमुन् के कर्मवाचक नृसिंहशब्द से चतुर्थी होकर 'नमस्कुर्मो नृसिंहाय' पदोपपत्ति होती है।

प्र.— 'नृसिंहाय नमस्कुर्मः' स्थल में तो 'नमःस्वस्तिस्वाहा.' सूत्रद्वारा ही चतुर्थीविभक्ति का विधान संभव है, अत एव 'नमस्कुर्मो नृसिंहाय' स्थल में 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' सूत्रद्वारा चतुर्थीविधान करना व्यर्थ है?

उ.— नमःपद के योग में 'नमः स्वस्ति॰' सूत्रद्वारा 'नमस्कुर्मो नृसिंहाय' स्थल में चतुर्थी प्राप्त है, अथ च नमस्कारक्रियानिरूपित कर्म में 'द्वितीया प्राप्त है। अतः प्रकृतस्थल में 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' सूत्रप्रवृत्ति न करने पर 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' परिभाषाद्वारा द्वितीया का विधान हो जायेगा। अत एव द्वितीया का बाध करने के लिये 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' शास्त्रद्वारा चतुर्थीविधान आवश्यक है।

प्र.— 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' शास्त्रोपदिष्ट क्रियार्थोपपदस्य पद का प्रयोजन क्या है?

उ.— 'क्रियार्थोपपदस्य' पदोपदेश न करने पर प्रकृतशास्त्र की 'अप्रयुज्यमान कोई हो, तदा अप्रयुज्यमान के कर्म में चतुर्थी होती है' इत्यर्थोपपत्ति होगी। इत्थञ्च 'भुङ्क्ष्व' पद के अप्रयुज्यमान होने पर अप्रयुज्यमान भुङ्क्ष्व के 'पिण्डीम्' कर्म में द्वितीया न होकर चतुर्थी होने लगेगी। अत एव तुमुन्नन्त के अप्रयुज्यमान होने पर अप्रयुज्यमान तुमुन्नन्त के कर्म में चतुर्थी विभक्ति का विधान करने के लिये प्रकृतसूत्र में 'क्रियार्थोपपदस्य' पदोपदेश आवश्यक है।

**तुमर्थाच्च भाववचनात् ।।२.३.१५।।**

**'भाववचनाश्च' इति सूत्रेण यो विहितस्तदन्ताच्चतुर्थी स्यात्। यागाय याति। यष्टुं यातीत्यर्थः।।इति कौमुदी।।**

**शे.– 'तुम्'शब्देन तदर्थो लक्ष्यते, सोऽर्थो यस्येत्यर्थः। इति शास्त्रेणेति–भावे ये प्रत्यया वक्ष्यन्ते ते क्रियार्थक्रियायामुपपदे भविष्यति स्युरिति तदर्थः। यागायेति–यागफलकं यानमित्यर्थः।**

**भैरवी– तुम्शब्दस्तु तुमुन्प्रत्ययपरः स च न कस्यापि भाववचनस्यार्थ इत्यत आह–तुम्शब्देनेति। भाववचनग्रहणसामर्थ्यात् सूत्रविशेषस्य लाभे सिद्धे स्पष्टप्रतिपत्तये तस्य सूत्रस्यार्थमाह–भावे य इति। 'यागाय याति' इत्यादौ फलप्रयोजकत्वरूपसम्बन्धो विभक्त्यर्थः। तादर्थ्ये चतुर्थीत्यनेन तु नैतत्सूत्रोदाहरणविषये चतुर्थीसिद्धिः। घञादिना तादर्थ्यस्योक्तत्वेनोक्तार्थानामप्रयोग इति न्यायेन चतुर्थ्याः अप्राप्तेः। एवञ्च प्रातिपदिकार्थेति सूत्रप्राप्तप्रथमाबाधनार्थमिदं सूत्रम्। 'द्विषां विघाताय विधातुमिच्छतः' इत्यादिस्थले तु तादर्थ्ये एव चतुर्थी। अन्यथा तुमुन्नन्तस्य प्रयोगात् स्थानिन इत्युक्तत्वाच्च चतुर्थी न स्यात्। न च 'उक्तार्थानाम्' इति न्यायात् तादर्थ्यचतुर्थ्यपि कथमिति शङ्क्यम्। विधानक्रियातादर्थ्यस्येच्छानिष्ठस्योक्तत्वेऽपि विधानक्रियानिष्ठं यद्विधानतादर्थ्यं तस्यानुक्तत्वात्।**

प्रकृतशास्त्रद्वारा क्रियार्थक क्रिया के उपपद रहते भाव में 'भाववचनाश्च' सूत्रद्वारा तुमुन् के अर्थ में विधीयमान घञ्प्रत्ययान्त से चतुर्थी होती है। क्रियार्थक क्रिया के उपपद रहने पर भविष्यत्काल में 'तुमुन्ण्वुलौ क्रियार्थायां च क्रियायाम्' सूत्रद्वारा तुमुन् और ण्वुल् प्रत्ययों का विधान होता है। यथा—यजनक्रियार्थक गमनक्रिया (याति) के उपपद रहते भविष्यकाल में होने वाली यजनक्रिया है, अतः तद्वाचक यज्धातु से तुमुन्प्रत्यय होकर 'यष्टुं याति' प्रयोगोपपत्ति होती है। प्रकृतस्थल में तुमुन्प्रत्यय के अर्थ में घञ्प्रत्यय होने पर भावघञन्त यागशब्द से प्रकृतसूत्रद्वारा चतुर्थी होकर 'यागाय याति' प्रयोगोपपत्ति होती है। 'यागाय याति' वाक्य का 'यागसम्बन्धी' गमन, अर्थ है अर्थात् सम्बन्ध-सामान्य में प्राप्त षष्ठी को बाँधकर चतुर्थीविभक्ति का प्रकृतसूत्रद्वारा विधान होता है।

**नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च।।२.३.१६।।**

एभिर्योगे चतुर्थी स्यात्। हरये नमः। 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' नमस्करोति देवान्। प्रजाभ्यः स्वस्ति। अग्नये स्वाहा। पितृभ्यः स्वधा। अलमिति पर्याप्त्यर्थग्रहणम्। तेन दैत्येभ्यो हरिरलं प्रभुः समर्थः शक्त इत्यादि। प्रभ्वादियोगे षठ्यपि साधुः। तस्मै प्रभवति-'स एषां ग्रामणीः' इति निर्देशात्। तेन 'प्रभुर्बुभूषुर्भुवनत्रयस्य' इति सिद्धम्। वषडिन्द्राय। चकारः पुनर्विधानार्थः, तेनाशीर्विवक्षायां परामपि 'चतुर्थी चाशिषि-' इति षष्ठीं बाधित्वा चतुर्थ्येव भवति। स्वस्ति गोभ्यो भूयात्।।इति कौमुदी।।

शे.- उपपदविभक्तेरिति-वाचनिकमेवेदं भाष्ये पठितमिति केचित्, क्रियाकारकयोः सम्बन्धोऽन्तरङ्गः, उपपदार्थेन तु यत्किञ्चित् क्रियाकारकभावमूलकः सम्बन्ध इति तन्निमित्ता विभक्तिर्बहिरङ्गेति 'अन्तरान्तरेण' (पा.सू. २.३.४) इति सूत्रे कैयटः। अत्राहुः। एवं सति 'नमस्यति देवान्' इत्यादौ नमःपदार्थे क्रियाकारकभावेनैवान्वये परत्वाच्चतुर्थीमाशङ्क्यानेन वारणस्य भाष्योक्तस्यासङ्गतिः। एतेन प्रधानत्वात् क्रियायास्तत्सम्बन्धनिमित्तकत्वेन बलवत्त्वमित्यपि परास्तम्। कारकविभक्तित्वं च क्रियाजनकत्वसमानाधिकरणकर्त्रादि-षट्कान्यतमार्थत्वम्। अन्याभिहितानुद्भूतकर्त्राद्यन्यतमार्थत्वं प्रथमाया अपि। 'अभिहिते प्रथमा' इति वार्त्तिकस्वारस्यात्। अतः प्रथमापि कारकविभक्तिरिति बोध्यम्। द्वावित्यादौ द्वित्वादेरिव 'देवदत्तः पचति' इत्यादौ उभाभ्यामेकस्यैव कर्त्तृत्वस्य बोध इति न तद्बोधावृत्तिः। नमस्करोति देवानिति-उत्कृष्टनिष्ठो यः स्वनिष्ठापकृष्टत्वबोध-स्तदनुकूलव्यापाररूपनमस्कारफलस्य तादृशबोधस्याश्रयतया देवानां कर्मत्वम्। स्वशब्देन प्रयोक्ता। नमःशब्दस्य 'साक्षात्प्रभृतिषु' 'उपर्यादिषु' वा पाठेन गतित्वात् सत्त्वम्। एकस्या एवोपपदविभक्तित्वे कारकविभक्तित्वे चायं न्याय इति तु न युक्तम्। 'नमस्यति देवान्' इत्यत्रैतत्परिभाषोपन्यासपरभाष्यविरोधात्। 'सहयुक्ते' (पा.सू. २.३.१९) इत्यादिसूत्रस्थभाष्यविरोधाच्च। अलमितीति-अलमित्यनेन पर्याप्त्यर्थानां ग्रहणं व्याख्यानादित्यर्थः। ज्ञापकमाह-तस्मै प्रेति। षष्ठ्या अपि साधुत्वे बीजम्-स एषामिति। आशीर्विवक्षायामिति-आशीर्विषयत्व-

विवक्षायामित्यर्थः। स्वस्त्यर्थः कुशलं मङ्गलं वा। स्वस्तियोगे चतुर्थ्या अवकाशः स्वस्ति जाल्मायास्तीति तत्त्वकथनम्। कुशलार्थै-राशिषीत्यस्यावकाशः स्वस्तिभिन्नाः कुशलार्थाः स्वस्तिशब्दोऽनव्ययमपि।

प्रतिगृह्णामि ते धेनुं कुटुम्बार्थे विशेषतः।

स्वस्तिर्भवतु मे नित्यं सुखञ्चानुत्तमं तथा।।इति भविष्योत्तरे प्रयोगात्।

भैरवी– वाचनिकमेवेति–अत एव 'तत्र च दीयत' इत्यत्र 'यस्य च भावेन' इति सूत्रविहितसप्तम्यपेक्षयाऽधिकरणसप्तम्या बलवत्त्वं कैयटोक्तं सङ्गच्छते। केचित्–भाष्यतत्त्वविदः। 'अन्तरान्तरेण' इति सूत्रस्थकैयटोक्तं दूषयितुं तन्मतमाह–क्रियाकारकयोरिति। अन्तरङ्ग इति–तयोः परस्पराकाङ्क्षाया उत्थिततत्वात्। यथा प्रकृते कृधात्वर्थः स्वनिष्ठापकृष्टत्वबोधानुकूलो व्यापारः, तस्यैव नमःशब्दो द्योतकतयोपकारकः। तद्घटकबोधश्च किन्निष्ठ इत्याकाङ्क्षा। देवाश्च किम्फलाश्रया इत्याकाङ्क्षात्र द्रष्टव्या। यदि च प्रकृते नमःशब्दो वाचकः स्यात्तदा नमःशब्दार्थोऽत्र तादृशबोधमात्रम्। व्यापारश्च कृधात्वर्थस्तयोः शीघ्रं परस्पराकाङ्क्षयाऽन्वयोत्तरं देवानां प्रधानीभूत-व्यापारप्रयोज्यकृधात्वर्थफलाश्रयत्वविरहात् कर्मत्वन्न स्यात्। नमःपदस्य द्योतकत्वे तु धात्वर्थव्यापारप्रयोज्यफलाश्रयत्वात्तन्निर्वाहः। एवञ्च क्रियाकारकयोः साक्षात् सम्बन्धो जन्यजनकभावरूपो नियताकाङ्क्षाप्रयोजकः। नमःपदेन सम्बन्धश्च स्वद्योत्य-व्यापारप्रयोज्यबोधाश्रयत्वरूप इति बहिरङ्ग इत्येवं कल्पनीयम्। जन्यस्य जनकाकाङ्क्षाया उत्थितत्वादन्तरङ्गः। एवमेव सर्वत्रोपपदार्थेन सहान्वयस्य बहिरङ्गत्वमुपपादनीयमिति तेषामाशयः। तदेतद् दूषयति–अत्राहुरित्यादिना। क्रियाकारकभावेनैवेति–'नमस्यति' इत्यत्र करणरूपेऽर्थे 'नमोवरिवश्चित्रङः क्यच्' इति सूत्रेण क्यचो विधानात्तत्र क्यजन्तार्थान्वयेनैव नमःशब्दार्थान्वियो वाच्यः। सत्युभयविभक्त्योः समत्वादन्तरङ्गन्यायस्येह सम्भवाभावः। एतेन–प्रकृते उभयोरपि समत्वेन। 'सहयुक्तेऽप्रधाने' इति सूत्रे अप्रधानग्रहणं शक्यमकर्त्तुम्। न च 'पुत्रेण सहागतः पिता' इत्यत्र पितृशब्दादपि तृतीयापत्तिः। 'उपपदविभक्तेरिति न्यायेन प्रथमा भविष्यति' इत्युक्तम् तत्र प्रथमाया येनाभिप्रायेण कारकविभक्तित्वमुक्तम् तदाविष्कर्त्तुमाह–कारकविभक्तित्वमिति। कर्त्रादिषट्कान्यतमेत्यत्र कर्त्रादिपदं

कर्तृत्वादिशक्तिपरम्। अतस्तत्सामानाधिकरण्योपपत्तिः अभिहितकर्तृत्वादौ प्रथमास्वीकारेऽपि कर्तृत्वादेर्वारद्वयं शाब्दबोधे भानापत्तिं वारयति-द्वावित्यादाविति। न च स्वनिष्ठापकृष्टत्वबोधानुकूलव्यापारस्य नमःशब्दार्थत्वे देवोद्देशेन यत्र नमस्कारः कृतस्तत्र तादृशफलबोधस्य शूद्रादावपि सत्त्वाच्छूद्रं नमस्करोतीत्यपि प्रयोगः स्यादिति वाच्यम्। फलतावच्छेदकसम्बन्धेन फलाश्रयत्वस्यैव द्वितीयाप्रयोजकत्वात्। प्रकृते च स्वविषयापकर्षावधित्वसामानाधिकरण्यविशिष्टसमवायस्य फलतावच्छेदकसम्बन्धत्वमनेन सम्बन्धेन फलाश्रयत्वन्नोद्देश्यातिरिक्त इति। अयमर्थो 'नमस्करोति' इत्यत्र धातोरेव। नमःशब्दस्तु द्योतकस्तदभिप्रायेणोक्तम्-नमस्कारफलस्येति। 'विष्णवे नमः' इत्यादौ तु नमःशब्दो निपातः। स चोक्तार्थे निरुक्तसमवायविशिष्ट-तादृशबोधानुकूलव्यापारे शक्त इत्यतस्तत्रापि न 'शूद्राय नमः' इत्याकारको द्विजस्य कर्त्तृत्वे प्रयोगः। 'नमस्करोति' इत्यत्र गतित्वं साक्षात्प्रभृतिषु पाठेनेति न युक्तम्। साक्षात्प्रभृतिषु च्व्यर्थवचनं कर्त्तव्यम्' इति वार्त्तिकविरोधादत आह-ऊर्यादिषु वेति। प्राचीनोक्तं खण्डयति-एकस्या एवेति। यथा-'मासे दीयते' इत्यत्राधिकरणसप्तमी 'यस्य च भावेन' इति सप्तम्यपेक्षया बलवत्त्वात्प्रवर्त्तत इति कैयटेनोक्तम्। पर्याप्त्यर्थानामिति-अत्र पर्याप्तिः सामर्थ्यम्। तदभिप्रायेण मूले-'दैत्येभ्यो हरिरलं प्रभुः समर्थः' इत्युक्तम्। व्याख्यानादिति-भूषणवारणार्थकालंशब्दस्य 'कन्यामलङ्करोति', 'हरिदिने भोजनमलङ्करोति' इत्यादौ क्रियावाचकधातुसमभिव्याहारे प्रयोगात्तत्रोपपदविभक्तेरिति न्यायेन द्वितीयैवेति प्राचीनकृतव्याख्यानादित्यर्थः। अत्र 'तस्मै प्रभवति सन्तापादिभ्यः' इति निर्देशादर्थविवक्षा अलंशब्दविषयेऽवश्यं कार्यैव, सोऽर्थो भूषणाद्यर्थकालंशब्दप्रयोगे न प्रतीयत इति न तत्र चतुर्थी; किन्तु तद्भिन्नेति व्याख्यानात् कल्प्यते। 'अलमिति पर्याप्त्यर्थग्रहणं कर्त्तव्यम्' इहापि यथा स्यात्। 'अलं मल्लो मल्लाय। प्रभुर्मल्लो मल्लाय' इति भाष्यमप्यत्र मानम्। अत एवालं श्रमेणेत्यत्र न भवति। यथा पर्याप्त्यर्थकशब्दयोगे 'तस्मै प्रभवति' इति निर्देशाच्चतुर्थी तथा तादृशे विषये 'स एषाम्' इति निर्देशात् षष्ठ्यपि भवतीति मूले उक्तम्।

आशीर्विषयत्वेति-स्वस्त्यर्थस्याशीर्विषयत्वविवक्षायामित्यर्थः। यदुक्तं मूले परामपीति तच्च परस्परविषयपरिहारेण सम्भवतीत्याशयेन तथा

**दर्शयति–स्वस्तियोग इत्यादिना। स्वस्तिशब्दार्थश्च मङ्गलम्। यथा 'स्वस्ति गोभ्यो भूयात्' इत्यादौ। स्वस्त्यर्थस्याशीर्विषयत्वमेवेति तु न नियमः। अत एव 'स्वस्ति वृषलाय' इत्यत्र तत्त्वकथनेऽपि चतुर्थी भवति। सूत्रे पूर्वोत्तरसाहचर्यात् स्वस्तिशब्दोऽव्ययसंज्ञक एव गृह्यते तदेतदाह–स्वस्तिशब्द इति।**

प्रकृतशास्त्रद्वारा नमः, स्वस्ति, स्वाहा, स्वधा, अलम् और वषड् इन छः पदों के योग में चतुर्थीविभक्ति का विधान होता है। यथा—हरये नमः। 'हरये नमः' वाक्य का 'हरिसम्बन्धी नमस्कार' अर्थ है, अर्थात् प्रकृतस्थल में प्राप्त षष्ठी का बाधपूर्वक चतुर्थीविभक्ति का विधान होता है। स्वावधिकोत्कर्षप्रकारकज्ञानानुकूलव्यापार को नमस्कार कहते हैं। नमस्कार-कर्त्ता यह जानता है, कि श्रीहरि हमारी अपेक्षा उत्कृष्ट हैं। ज्ञान के आश्रय श्रीहरि हैं और ज्ञानानुकूलव्यापार नमस्कर्त्ता में रहता है। नमःपद के समभिव्याहार में कृधातु का नमस्कार अर्थ होता है, अर्थात् नमस्कार का वाचकतया बोधक कृधातु कहलाता है और द्योतकतया बोधक नमःपद होता है। 'नमस्करोति देवान्' स्थल में कृधात्वर्थनमस्कारक्रिया-निरूपितफलाश्रयतया देव की कर्मसंज्ञा प्राप्त है, अथ च नमः पद का योग होने से 'नमःस्वस्ति.' सूत्रद्वारा चतुर्थी प्राप्त है। 'उभयोर्मध्ये कतरेण भाव्यम्' की अकाङ्क्षा होने पर 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' न्यायद्वारा द्वितीयाविभक्ति होती है।

प्र.— 'नमस्करोति देवान्' स्थल में द्वितीया और चतुर्थी दोनों की युगपत् प्राप्ति न होने से 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' न्यायाश्रयणपूर्वक द्वितीयाविधान असंगत है। यतो हि नमःपदार्थान्वयविवक्षा में चतुर्थी प्राप्त होती है, अथ च कृधात्वर्थनमस्कारान्वयविवक्षा में नमस्कारक्रियानिरूपितफलाश्रयत्वेन द्वितीया की प्राप्ति होती है? युगपत् दोनों की प्राप्ति न होने से 'उपपदविभक्तेः' न्याय की विषयता नहीं है।

उ.— नमस्काररूप अर्थ नमःपद एवं कृधातु उभयवाच्य है, अन्तर इतना ही है, कि नमःपद का द्योत्यतया वाच्य है और कृधातु का शक्यतया वाच्य है, अत एव नमःपदार्थ में अन्वयविवक्षा करने पर भी कृधात्वर्थ में अन्वय फलित होता है और कृधात्वर्थ नमस्कार में अन्वयविवक्षा करने पर नमःपदार्थ में अन्वय फलित होता है। इस प्रकार युगपत् द्वितीया

और चतुर्थी दोनों की प्राप्ति होने से 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' न्यायद्वारा द्वितीयाविभक्ति का विधान युक्तियुक्त है।

'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' परिभाषा भाष्य में वचनरूप से पठित है, अत एव प्रकृतस्थल में 'उपपदविभक्तेः कारक.' परिभाषा प्रवृत्त होती है। इति भाष्यतत्त्वविदः।

प्र.— 'उपपदविभक्तेः कारकविभक्ति.' परिभाषा अन्तरङ्गमूलिका है। अत एव 'नमस्करोति देवान्' में प्रकृतपरिभाषा की गति ही नहीं है। 'असिद्धं बहिरङ्गमन्तरङ्गे' अर्थात् अन्तरङ्गशास्त्र की दृष्टि में बहिरङ्गशास्त्र असिद्ध होता है। 'पूर्वं धातुः साधनेन युज्यते' पक्ष में क्रियाकारकभावसम्बन्ध से अन्वय करने पर द्वितीया प्राप्त होती है, अथ च नमःपदार्थ में अन्वय करने पर चतुर्थी की प्राप्ति होगी। क्रियाकारकभावसम्बन्ध प्रथम होता है। अतः क्रियाकारकभावसम्बन्ध से अन्वय करते ही प्रथमतः द्वितीया हो जायेगी, तदनन्तर 'नमस्करोति देवान्' पदोपपत्ति होने पर नमःपदार्थ का देवपदार्थ के साथ अन्वयविवक्षा करने पर 'नमःस्वस्ति.' सूत्रद्वारा चतुर्थी की प्राप्ति होगी अर्थात् युगपत् द्वितीया और चतुर्थी की प्राप्ति न होने के कारण 'नमस्करोति देवान्' स्थल में 'उपपदविभक्तेः' न्याय की विषयता नहीं है, इति केचित्। यह कथन 'अन्तरान्तरेण.' (पा.सू. २.३.४) सूत्र के भाष्य में स्पष्ट है।

उ.— वस्तुतः 'उपपदविभक्तेः' परिभाषा अन्तरङ्गमूलिका न होकर वाचनिकी है, अत एव 'नमस्करोति देवान्' स्थल में 'उपपदविभक्तेः.' 'परिभाषाद्वारा द्वितीयाविधान युक्तियुक्त है। यतो हि 'उपपदविभक्तेः' परिभाषा को अन्तरङ्गमूलिका स्वीकार करने पर 'नमस्यति देवान्' में भाष्यकारद्वारा द्वितीयाविधान असंगत होगा। यथा—'नमः करोति' विग्रह में क्यच्प्रत्यय विधानपूर्वक 'नमस्यति' पदोपपत्ति होती है। प्रकृतस्थल में क्यजन्त 'नमस्य' धात्वर्थ में नमःपदार्थ का भी अन्तर्भाव होने से नमःपदार्थान्वयपूर्वक 'नमःस्वस्ति.' सूत्रद्वारा प्राप्त चतुर्थी, अथ च नमस्यधात्वर्थनमस्कारक्रिया-निरूपितफलाश्रयत्वेन प्राप्त द्वितीया दोनों ही अन्तरङ्ग हैं, जबकि 'उपपदविभक्तेः' परिभाषा को अन्तरङ्गमूलिका स्वीकार करने पर प्रकृतपरिभाषा की प्रवृत्ति अन्तरङ्गबहिरङ्गभावस्थल में ही संभव होगी। 'नमस्यति देवान्' स्थल में भाष्यकारद्वारा 'उपपदविभक्तेः' परिभाषाद्वारा

**भैरवी–** **तद्घटकमिति–प्रत्यासत्त्याऽयमेव येनेत्यत्र यच्छब्दार्थः। स चान्तर्द्धिर्यद्यपि इच्छतिशब्दघटकाख्यातार्थकर्त्तुर्निष्ठा तथापि वृक्षे शाखेतिवदन्तर्द्धाविति सप्तमी उपपदविभक्तेरिति न्यायात्, न तु सति सप्तमी। ननु मातुर्निलीयते इत्याद्युदाहरणे व्यवहितदेशस्थितेर्धातुना प्रतिपादनेऽपि इच्छायाः कथं लाभ इत्यत आह–आक्षेपलभ्येति। इच्छायाः प्रयत्नप्रयोजकत्वादाक्षेपः।**

व्यवधान में यत्कर्तृकदर्शनाभाव की इच्छा होने पर दर्शनाभाव के कर्त्ता की अपादानसंज्ञा होती है। यथा—'मातुर्निलीयते कृष्णः' स्थल में कृष्ण चाहते हैं, कि माता न देखे अर्थात् मातृकर्त्तृक दर्शनाभाव की कृष्णेच्छा है, अत एव दर्शनाभाव की कर्त्री माता की अपादानसंज्ञा होकर पञ्चमीविभक्ति होती है। अन्तर्द्धिशब्द का 'अन्यकर्त्तृकस्वकर्मकदर्शनाभावानुकूल व्यवहितदेश में स्थिति' अर्थ है। इस अर्थ का अवयव जो यत्कर्तृकदर्शनाभावरूप अंश अर्थात् जिस कर्त्ता में दर्शन का अभाव रहता है, उस कर्त्ता की अपादानसंज्ञा होती है। इससे अर्थात् सिद्ध होता है, कि व्यवधान रहना चाहिए, इसीलिए कौमुदीवृत्ति में 'व्यवहिते सति' रूपेण फलितार्थ कथन अङ्गीकार किया है।

प्र.— 'येनादर्शनम्' प्रयोगान्तर्गत येन कर्त्तृबोधक पद है और अदर्शन है कृत्प्रत्ययान्त शब्द, अत एव 'कर्तृकर्मणोः कृति' सूत्रद्वारा कर्तृबोधक पद में षष्ठी-विभक्ति होनी चाहिए?

उ.— 'छन्दोवत्सूत्राणि भवन्ति' अर्थात् वेद में यथोपदिष्ट की साधुता के समान पाणिनिसूत्र भी यथोपदिष्ट साधु कहलाते हैं, अर्थात् येन पद में सौत्रत्वात् षष्ठीविभक्ति नहीं होती है।

यत्कर्त्तृक दर्शनाभाव कहने पर किसके दर्शन का अभाव? यह आकाङ्क्षा उठती है। किसके दर्शन का अभाव? यह आकाङ्क्षा होने पर उपस्थित 'आत्मनः' का लाभ होता है, अर्थात् इच्छति का कर्त्ता अपने दर्शन का अभाव चाहता है।

प्र.— 'यत्कर्त्तृक दर्शनाभाव की इच्छा में दर्शनाभाव के कर्त्ता की अपादानसंज्ञा होती है। 'मातुर्निलीयते कृष्णः' वाक्य में इच्छति पद का प्रयोग ही नहीं है, अतः प्रकृतस्थल में दर्शनाभाव के कर्त्ता की अपादानसंज्ञा नहीं होनी चाहिए?

उ.— 'कृष्ण मातृकर्त्तृक दर्शन का अभाव चाहता है' इत्यर्थवाग्विवक्षा में, अर्थात् आक्षेपद्वारा इच्छति पद का लाभ होने से दर्शनाभाव के कर्त्ता की अपादानसंज्ञा होकर 'मातुर्निलीयते कृष्णः' प्रयोगोपपत्ति होती है।

**अन्तर्द्धौ किम्–चौरान् न दिदृक्षते। इच्छतिग्रहणं किम्–अदर्शनेच्छायां सत्यां सत्यपि दर्शने यथा स्यात्।।इति कौमुदी।।**

**शे.– चोराििति–चोरकर्मकदर्शनेच्छाभाव इति शाब्दोऽर्थः। स च चोरकर्तृकस्वदर्शनाभावायेति प्राप्तिः। इच्छामात्रस्याक्षेपलभ्यत्वे इव विशिष्टस्याक्षेपलभ्यत्वेऽपि स्यादिति भावः। प्रकृते नान्तर्द्धिरिति दोषः। येनेत्यस्याभावे हि स्वकर्मकदर्शनाभावं य इच्छति इत्यर्थे कर्त्तुरिव स्यादतस्तत्। इच्छतिग्रहणं किमिति–अन्तर्द्धौ सति यत्कर्तृक-दर्शनस्याभावस्तदपादानमित्यर्थोऽस्त्विति भावः। सत्यपीति अदर्शनेच्छया तदनुकूलव्यापारकरणे दैववशाद्दर्शने सत्यपीत्यर्थः। अन्यथा यत्र दर्शनाभाव एव तत्रैव स्यादिति भावः।**

**भैरवी– ननु 'दिदृक्षते' इत्यत्र सन्नन्ताद्दर्शनेच्छालाभेऽपि येनादर्शनमित्यर्था-लाभात्कथमपादानत्वप्राप्तिरत आह–इच्छामात्रस्येति। विशिष्टस्येति–चोरकर्तृकस्वकर्मकदर्शनाभावरूपविशिष्टस्येत्यर्थः। य इच्छतीत्यर्थ इति–इच्छतिशब्देन कर्त्तुरुपस्थितत्वात् कर्तृलाभ इति भावः।**

रात्रि में लघुशङ्का करने घर से बाहर निकला, चोर जा रहे थे। चोर को देखने की इच्छा नहीं है, यतो हि देखने पर चोर मार डालेंगे। इसलिए उसने अपनी गर्दन नीचे झुका ली। उसकी इच्छा है, कि चोर हमको न देखें। प्रकृतस्थल में आत्मकर्मक-चौरकर्तृक-दर्शनाभाव की इच्छा होने पर भी व्यवधान न होने के कारण दर्शनाभाव के कर्त्ता चोर की अपादानसंज्ञा नहीं होती है।

यद्यपि 'चोरान् न दिदृक्षते' वाक्य का 'चोरकर्मकदर्शनाभावेच्छानुकूलव्यापार' शाब्दिक अर्थ है, तथापि चोर हमको न देखे, इसलिए चोरों को नहीं देखता। इस प्रकार 'चोरकर्तृक आत्मकर्मकदर्शनाभाव की इच्छा का' अर्थात् लाभ होने से अपादानसंज्ञा की प्राप्ति थी। प्रकृतस्थल में इच्छा का जिस प्रकार आक्षेप द्वारा लाभ होता है, तथैव चोरकर्त्तृक आत्मकर्मक दर्शनाभावरूप विशिष्टेच्छा की भी आक्षेपद्वारा ही उपपत्ति होती है; किन्तु

प्रकृतस्थल में व्यवधान न होने के कारण दर्शनाभाव के कर्त्ता की अपादानसंज्ञा नहीं होती है।

**येनेति किम्?** 'व्यवधान होने पर दर्शनाभावेच्छा में अपादानसंज्ञा होती है' इत्येतदर्थक 'अन्तर्द्धौ अदर्शनमिच्छति' एतावन्मात्र सूत्रोपदेश करने पर जो दर्शनाभाव चाहता है, उसकी भी अपादानसंज्ञा होने लगेगी, अत एव 'येन' पदोपदेश किया है।

'इच्छति' ग्रहणं किम्? माता आ रही है, कृष्ण चाहते हैं कि माता हमको न देखे; किन्तु माता ने देख लिया। इस प्रकार दर्शनाभाव के कर्त्ता द्वारा देखने, न देखने-उभयस्थिति में यत्कर्तृकदर्शनाभावेच्छा में अभिलषित दर्शनाभाव के कर्त्ता की अपादानसंज्ञा का विधान हो, इसीलिए 'इच्छति' पदोपदेश किया है। इच्छति पदोपदेश न करने पर तो 'न देखने' पर ही दर्शनाभाव के कर्त्ता की अपादानसंज्ञा संभव थी।

## आख्यातोपयोगे ।।१.४.२९।।

**नियमपूर्वकविद्यास्वीकारे वक्ता प्राक्संज्ञः स्यात्। उपाध्यायादधीते।।इति कौमुदी।।**

**शे.– नियमेति–उपयोगशब्दस्य तत्रैव रूढेर्नियमो ब्रह्मचर्यादिः।**

**भैरवी– उपयोगशब्दस्य प्रयोजनादिपरत्वभ्रमनिरासायाह–उपयोगशब्दस्येति।**

उपयोग में वक्ता की अपादानसंज्ञा होती है। नियमपूर्वक विद्याग्रहण करने अर्थ में उपयोग शब्द रूढ है, अर्थात् स्नान, ध्यान एवं ब्रह्मचर्यादिव्रतपालनपूर्वक विद्या स्वीकार करना।

**यथा–उपाध्यायादधीते। उपयोगे किम्–नटस्य गाथां शृणोति।।इति कौमुदी।।**

**शे.– नटस्येति–नटजन्यं श्रवणमिति बोधात् कारकत्वम्। नियमपूर्वक विद्यावक्तृत्वाभावान्नेत्युत्तरम्।**

**भैरवी– नटजन्यमिति–क्वचित्तु गाथामिति पाठः स चायुक्तः। षष्ठ्यन्तार्थस्य स्वान्वययोग्यानामसमभिव्याहारे तत्रैवान्वयस्य क्लृप्ततया कारकत्वानुपादानात्।**

'नटस्य गाथां शृणोति' नट से गाना सीख रहा है। नट आज इस ग्राम में, कल उस ग्राम में गाना गाता है। सीखनेवाला भी खाकर,

सोकर गानविद्या सीखता है, अर्थात् प्रकृतस्थल में नियमपूर्वक विद्यास्वीकरण न होने से अपादानसंज्ञा नहीं होती है।

प्र.— 'नटस्य गाथां शृणोति' स्थल में 'नट' शृणोतिक्रिया का कारक ही नहीं, इस प्रकार कारकत्वाभावादेव नट की अपादानसंज्ञा अप्राप्त है। अत: 'नटस्य गाथां शृणोति' को 'उपयोगे किम्'? का उदाहरण देना असंगत है?

उ.— नट के मुखान्तर्गत-दन्त्यादि-उच्चारणस्थान में वायुसंयोगादिद्वारा नि:सृत होनेवाले नटगायन का श्रवण होता है, इस प्रकार शृणोति क्रियानिरूपित कारकत्व नट में रहने से अपादानसंज्ञा संभव थी; किन्तु उपयोगे पदोपदेशसामर्थ्य से 'नटस्य गाथां शृणोति' स्थल में अपादानसंज्ञा नहीं होती है।

**जनिकर्त्तुः प्रकृतिः ।।१.४.३०।।**

**जायमानस्य हेतुरपादानं स्यात्। ब्रह्मणः प्रजाः प्रजायन्ते।।इति कौमुदी।।**

**शे.– प्रकृतिरुपादानकारणं ब्रह्म च मायाशबलञ्जगदुपादानकारणम्। वृत्तौ हेतुपदमप्युपादानकारणपरमेवेति बोद्ध्यम्। विभाषेत्येव सिद्धे इदमपादानत्वेन बोधनार्थम्। तत्र 'गुणेऽस्त्रियाम्' इति प्रायिकं बाहुलकं प्रकृतेस्तनुदृष्टेरिति वार्त्तिकप्रयोगात्।**

**भैरवी– प्रकृतिरुपादानकारणमिति–अस्मिन्नेवार्थे प्रकृतिशब्दस्य लोकप्रसिद्धेः। मूलासङ्गतिपरिहारायाह–वृत्ताविति। एवमेवेति–वेदान्तसिद्धान्तात्। ननु ब्रह्मशब्दार्थस्य गुणत्वाभावात् कथं विभाषेत्यस्य प्राप्तिरत आह–तत्र हीति।**

जनिशब्द का प्रादुर्भाव, अर्थात् उत्पत्त्यनुकूलव्यापार अर्थ है, अत एव प्रकृतसूत्रद्वारा उत्पत्ति का जो कर्त्ता, उसका जो उत्पत्तिस्थान, उसकी अपादानसंज्ञा होती है। यथा—'ब्रह्मण: प्रजा: प्रजायन्ते' प्रजा की उत्पत्ति होने से, प्रजा उत्पत्ति का कर्त्ता है, उसकी उत्पत्ति का मूलस्थान है ब्रह्म, अत एव ब्रह्म की अपादानसंज्ञाविधानपूर्वक पञ्चमीविभक्ति होने से 'ब्रह्मण: प्रजा: प्रजायन्ते' प्रयोगोपपत्ति होती है। प्रकृति का तात्पर्य होता है—उपादानकारण, उपादानकारणशब्द से प्रकृतस्थल में अभिन्ननिमित्तोपादानकारण का ग्रहण होता है, यतो हि उपादानकारण का क्वचित् कार्य के नाश

होने के अनन्तर नाश हो जाता है, यथा पटनाश से तन्तुनाश; किन्तु प्रजा के नष्ट होने पर भी ब्रह्म नष्ट नहीं होता है। ब्रह्म अविनाशी है। स्वतन्त्र कालकृत-वस्तुकृत-स्थानकृत-परिच्छेदशून्य निरवच्छिन्न ब्रह्म के 'एकोऽहं बहु स्याम्' इत्याकारकेच्छाशबलितस्वरूप की प्रकृतस्थल में विवक्षा है। इस प्रकार प्रकृतस्थल में प्रकृति का तात्पर्य है हेतु, अर्थात् उपादानकारण, अर्थात् मायाशबलित ब्रह्म, जिसे अभिन्ननिमित्तोपादानकारण कहते हैं, अर्थात् बनानेवाला और बननेवाला दोनों वही है।

प्र.— 'विभाषा गुणेऽस्त्रियाम्' सूत्रद्वारा अस्त्रीलिङ्गवृत्ति गुणवाचक-शब्द से विकल्पेन पञ्चमीविभक्ति का विधान होता है। यथा—जाड्येन जाड्याद्वा बद्धः। किन्तु प्रकृतसूत्रोपदिष्ट विभाषाशब्द बाहुलक का उपलक्षण है। अत एव क्वचित् स्त्रीलिङ्गवृत्तिशब्द से भी, अगुणवाचक से भी और नित्य भी पञ्चमीविभक्ति का विधान होता है। इस प्रकार 'ब्रह्मणः प्रजाः प्रजायन्ते' वाक्यघटक ब्रह्मणः पद में पञ्चमीविभक्ति का विधान 'विभाषा गुणेऽस्त्रियाम्' सूत्रद्वारा ही संभव है, 'जनिकर्तुः प्रकृतिः' शास्त्रोपदेश व्यर्थ है?

उ.— यद्यपि 'विभाषा गुणेऽस्त्रियाम्' सूत्रोपदिष्ट विभाषा पद का बाहुलक अर्थ स्वीकार करने पर 'ब्रह्मणः प्रजाः प्रजायन्ते' वाक्यघटक ब्रह्मणः पद में पञ्चमी विभक्ति की उपपत्ति संभव है; किन्तु ब्रह्मणः पदघटक पञ्चमी से अपादानतया शाब्दबोधोपपत्ति के लिये 'जनिकर्तुः प्रकृतिः' शास्त्रोपदेश आवश्यक है।

'विभाषा गुणेऽस्त्रियाम्' शास्त्रोपदिष्ट विभाषाशब्द बाहुलकार्थक है। इसीलिए स्त्रीलिङ्गवृत्ति तनुदृष्टिशब्द से पञ्चमीविभक्ति का विधान होकर 'बाहुलकं प्रकृतेस्तनुदृष्टेः' वार्तिकोपदिष्ट 'तनुदृष्टेः' पदोपपत्ति संभव होती है।

**भुवः प्रभवः।।१.४.३१।।**

**भवनं भूः। भूकर्तुः प्रभवस्तथा। हिमवतो गङ्गा प्रभवति। तत्र प्रकाशत इत्यर्थः।।इति कौमुदी।।**

**शे.– प्रभवनं प्रथमप्रकाशः प्रग्रहणात् तदधिकरणमपादानमित्यर्थः। 'प्रभवो जलमूले स्याज्जन्महेतौ पराक्रमे। ज्ञानस्य चादिमस्थाने' इति विश्वः। प्रकाशत इत्यस्य योगे तु न, प्रथमप्रकाशार्थत्वाभावात्तदाह–तत्र प्रकाशत इत्यर्थ इति।।**

**भैरवी–** **'भुवः प्रभवः' इति सूत्रघटकप्रभवशब्देऽधिकरणेऽबित्याशयेनाह– तदधिकरणमिति। जन्महेतौ। जन्मभूमौ। अतिप्रसङ्गं वारयति–प्रकाशत इति। प्रशब्दोपादानात् प्रथमप्रकाशार्थकधातुयोग एवेदमिति भावः।**

'भवनं भूः' अर्थात् उत्पत्ति उसका जो प्रभवस्थान, उसकी अपादानसंज्ञा होती है। यथा—'हिमवतो गङ्गा प्रभवति'। गङ्गा का उत्पत्तिस्थान हिमवान् है। पूर्वसूत्रद्वारा अभिन्ननिमित्तोपादान की अपादानसंज्ञा का विधान होता है। अथ च प्रकृतसूत्रद्वारा समवायिकारण की अपादानसंज्ञा होती है। हिमवान् गङ्गा के प्रति समवायिकारण है। हिमवान् के न रहने पर गङ्गा की स्थिति भी नहीं रहेगी। दूसरी बात 'जनिकर्त्तुः प्रकृतिः' शास्त्रोपदिष्ट प्रकृतिशब्द का प्रथमोत्पत्तिस्थान अर्थ है, अत एव 'हिमवतो गङ्गा प्रभवति' स्थल में 'जनिकर्त्तुः प्रकृतिः' सूत्रद्वारा अपादानसंज्ञा संभव नहीं है। अथ च 'भुवः प्रभवः' शास्त्रोपदिष्ट प्रभवशब्द का प्रथमप्रकाशस्थान अर्थ है। गङ्गा का प्रकाश यद्यपि ब्रह्मा के कमण्डलु से, विष्णुभगवान् के चरणों से, भगीरथ के तप से इत्यादि विभिन्न-स्थानों से वर्णित है; किन्तु गङ्गा के जल का मूलस्थान हिमवान् होने से उसकी अपादानसंज्ञाविधानपूर्वक पञ्चमी विभक्ति होकर 'हिमवतो गङ्गा प्रभवति' प्रयोगोपपत्ति होती है। प्रभवशब्द की जलमूल, जन्महेतु, पराक्रम और ज्ञान के प्रथमस्थान अर्थों में शक्ति है।।इति विश्वः।। 'भुवः प्रभवः' शास्त्रद्वारा 'प्रकाशते' पद के योग में अपादानसंज्ञा नहीं होती है, यतो हि 'प्रकाशते' पद का प्रथमप्रकाशस्थान अर्थ न होकर प्रकाशमात्र अर्थ है।

**'ल्यब्लोपे कर्मण्यधिकरणे च'।।वा०।।**

**प्रासादात् प्रेक्षते, आसनात् प्रेक्षते। प्रासादमारुह्य, आसन उपविश्य, प्रेक्षत इत्यर्थः। श्वशुराज्जिह्रेति। श्वशुरं वीक्ष्येत्यर्थः।।इति कौमुदी।।**

**शे.–** **ल्यब्लोप इति–ल्यबन्तशब्दाज्ञाने इत्यर्थः। कर्मणीति। प्रत्यासत्त्या ल्यबन्तधात्वर्थस्येति भावः। प्रासादादिति। फलेभ्यो यातीत्यत्रेव बोधप्रक्रिया। 'आजघ्ने विषमविलोचनस्य वक्षः' इत्यत्र कर्मणः शेषत्वविवक्षया षष्ठी, 'वक्षः' इत्यस्य प्राप्येति शेषः।**

**भैरवी–** **ननु ल्यब्लोपविधायकशास्त्रस्यानुपलम्भात् 'ल्यब्लोपे' इत्यनुपपन्नमत आह–ल्यबन्तशब्दाज्ञान इति। बोधप्रक्रियेति–वाक्यैकदेशन्यायेनेत्यर्थः। नन्वाजघ्ने इत्यत्र यथाश्रुतान्वयेऽकर्मकत्वस्वाङ्गकर्मत्वयोरभावेन**

**कथमात्मनेपदमत आह–आजघ्ने इति। कर्मणः। विषमविलोचन शब्दार्थस्य। वक्ष इत्यस्यानन्वितत्वं वारयति–प्राप्येति शेष इति। एवञ्चात्र प्राप्येति शब्दाध्याहारेण ल्यबन्तशब्दज्ञानसत्त्वान्न ल्यब्लोप इति पञ्चम्यापत्तिरिति भावः।**

यत्र ल्यबन्त का उच्चारण न हो; किन्तु ल्यबन्तपद के अर्थ की प्रतीति होती हो, तत्र ल्यबन्त के कर्म और अधिकरण में प्रकृतवार्त्तिकद्वारा पञ्चमीविभक्ति का विधान होता है। 'ल्यब्लोपे कर्मण्यधिकरणे च' वार्त्तिकद्वारा प्रत्यासत्त्या ल्यबन्तधात्वर्थक्रियानिरूपित कर्म या अधिकरण में ही पञ्चमीविभक्ति का विधान होता है, यथा 'फलेभ्यो याति' स्थल में 'आहर्तुम्' इति तुमुन्नन्त पद का अध्याहारपूर्वक 'फलेभ्यः' पद में चतुर्थीविभक्ति की उपपत्ति होती है, तथैव 'आसनात् प्रेक्षते' स्थल में ल्यबन्त 'उपविश्य' पदाध्याहारपूर्वक ल्यबन्तधात्वर्थक्रियानिरूपित अधिकरण में पञ्चमीविभक्ति का विधान होता है।

प्र.— 'विषमविलोचन शिव जी के वक्ष में अर्जुन ने बाण मारा' इत्यर्थवाग्विवक्षा में प्रयुक्त 'विषमविलोचनस्य वक्षः आजघ्ने' वाक्य में ल्यबन्त का प्रयोग नहीं है, अत एव विषमविलोचन शब्द से प्रकृतवार्त्तिकद्वारा पञ्चमी का विधान होना चाहिए?

उ.— ल्यबन्त पद के अभाव में ल्यबन्तार्थप्रतीति होने पर ल्यबन्तधात्वर्थ-क्रियानिरूपित कर्म और अधिकरण में प्रकृतवार्त्तिकद्वारा पञ्चमीविभक्ति का विधान होता है। 'विषमविलोचनस्य वक्षः आजघ्ने' स्थल में ल्यबन्तपद का ज्ञानपुरःसर ल्यबन्तार्थ की प्रतीति है, अत एव विषमविलोचनशब्द से पञ्चमी न होकर सम्बन्धत्वविवक्षा में षष्ठी होती है।

**'गम्यमानापि क्रिया कारकविभक्तीनां निमित्तम्'–कस्मात्त्वम्, नद्याः। इति कौमुदी।**

**शे.– गम्यमानापीति–विशिष्य तद्वाचकपदानुपात्तापीत्यर्थः। 'कस्मात् त्वम्' इत्यादौ 'फलेभ्यो याती'त्यत्रेव बोधप्रक्रिया।**

**भैरवी– इत्यत्रेवेति–वाक्यैकदेशन्यायेनेत्यादिः।**

प्र.— 'कस्मात् त्वम्? नद्याः' स्थल में क्रिया का योग नहीं है, जबकि अपादानसंज्ञा क्रियायोग में ही संभव है। अत एव प्रकृतस्थल में अपादानसंज्ञा कैसे होती है?

उ.— 'गम्यमानापि क्रिया कारकविभक्तीनां प्रयोजिका' अर्थात् अध्याहृत क्रिया भी कारकविभक्तियों के विधान में निमित्त होती है। 'कस्मात्त्वं? नद्याः' स्थल में 'आगतः' इति अध्याहृत क्रिया का योग होने से अपादानसंज्ञा होती है, यथा—'फलेभ्यो याति' स्थल में 'आहर्त्तुम्' पद का अध्याहारपूर्वक फलशब्द से चतुर्थीविभक्ति का विधान होता है।

**अन्यारादितरर्तेदिक्छब्दाञ्चूत्तरपदाजाहियुक्ते ।।२.३.२९।।**

**एतैर्योगे पञ्चमी स्यात्। अन्येत्यर्थग्रहणम्। इतरग्रहणं प्रपञ्चार्थम्। अन्यो भिन्न इतरो वा कृष्णात्। आराद् वनात्। ऋते कृष्णात्। पूर्वो ग्रामात्। दिशि दृष्टः शब्दो दिक्शब्दः। तेन सम्प्रति देशकालवृत्तिना योगेऽपि भवति। चैत्रात् पूर्वः फाल्गुनः। अवयववाचियोगे तु न 'तस्य परमाम्रेडितम्' इति निर्देशात्। पूर्वं कायस्य। अञ्चूत्तरपदस्य तु दिक्शब्दत्वेऽपि 'षष्ठ्यतसर्थ.' इति षष्ठीं बाधितुं पृथग्ग्रहणम्। प्राक् प्रत्यग् वा ग्रामात्। आच्–दक्षिणा ग्रामात्। आहि–दक्षिणाहि ग्रामात्। 'अपादाने पञ्चमी' इति सूत्रे 'कार्त्तिक्याः प्रभृति' इति भाष्यप्रयोगात् प्रभृत्यर्थयोगे पञ्चमी। भवात् प्रभृति आरभ्य वा सेव्यो हरिः। 'अपपरिबहिः–' इति समासविधानाद् ज्ञापकाद् बहिर्योगे पञ्चमी। ग्रामाद् बहिः।।इति कौमुदी।।**

**शे.– अन्येत्यर्थेति–तदर्थश्च भेदवान्। अत एव 'घटाद् भिन्नः' इत्यादि-सिद्धिः। परे तु ध्रुवमिति सूत्रे अपायशब्देन भेदस्यापि ग्रहणम्। 'पञ्चमी विभक्ते' (पा.सू. २.३.४२) इत्यत्र विभागार्थकविभक्तपदेन भेदस्य व्याख्यानात्। 'भिदिर्विदारणे' इत्यत्र भेदज्ञानविषयत्वमपि विदारणम्। एकत्वेन गृहीतस्य तथा बोधे बुद्धिविदारणस्य तत्रापि सत्त्वात्। अत एव 'घटाद् भेदः' इति सिद्धम्। तद्योगेऽप्यपादानत्वात्। तस्यैव सम्बन्धत्वेन विवक्षायां घटीयो भेद इत्यपि। अन्यशब्दार्थस्याक्रियात्वात्तद्योगे एतद् विधानम्। अत एव 'घटः पटो न' इत्यादौ न पञ्चमी। नञो भेदवदर्थकत्वेऽपि अक्रियात्वात्। घटादेक इत्याद्यसाध्वेव। अत एवेतरग्रहणञ्चरितार्थम्। अत एव भाष्येऽर्थग्रहणं नोक्तमित्याहुः।**

'आराद्दूरसमीपयोः' एतद्योगे। 'दूरान्तिकार्थैः' (पा.सू. २.३.३४) इति प्राप्तम्। नन्वयं देशवाची न दिक्शब्दः, अत आह–दिशि दृष्ट इति– शब्दग्रहणादिति भावः। ते च रूढ्या दिग्विशेषवाचकाः पूर्वादय एव गृह्यन्ते नैन्द्रीककुबादयो व्याख्यानात्। अवयववाचीति– तद्वाचिपूर्वादियोगेऽवयविवाचकान्नेत्यर्थः। ज्ञापकस्य सजातीयापेक्षत्वात्। अत एवास्मादयं पूर्वो भागः कायस्येति सिद्धम्। अवयवे पूर्वत्वम् अवयवान्तरापेक्षया। प्रथमकालोत्पत्तिकत्वेन बोध्यम्। अञ्चूत्तरपदस्येति– दिक्शब्दसाहचर्येण तस्य दिग्वाचकस्यैव ग्रहणं तेन 'सध्र्यङ्' इत्याद्यर्थं तन्नेति भावः। बाधितुमिति–परत्वात् प्राप्तमित्यादिः। यदि तु 'षष्ठ्यतसर्थ.' (पा.सू. २.३.३०) इत्यत्र प्रत्ययग्रहणात्तस्य श्रूयमाणप्रत्यय एव प्रवृत्तिस्तदेदं मास्त्विति तत्त्वमिति भाष्ये स्पष्टम्। दक्षिणा ग्रामादिति– दक्षिणस्यां दिशि इत्यर्थे 'दक्षिणादाच्' (पा.सू. ५.३.३७) इति 'आहि च दूरे' (पा.सू. ५.३.३७) इत्याजाही षष्ठ्यतसर्थेत्यस्यापवादः। प्रभृतियोग इति–प्रभृत्यर्थयोग इत्यर्थः। 'अपादाने पञ्चमी' (पा.सू. २.३.२८) इति सूत्रे 'यतश्चाध्वकालनिर्माणं ततः पञ्चमी, 'कार्तिक्याः आग्रहायणी मासे' इति वार्त्तिकप्रत्याख्यानाय इदमत्र प्रयोक्तव्यं सन्न प्रयुज्यते कार्तिक्याः प्रभृत्याग्राहायणीमासे' इति भाष्येण प्रभृति– शब्दाभावेऽपि तदर्थसत्तामात्रेण पञ्चमीत्यर्थकेन 'प्रभृत्यर्थयोगे पञ्चमी' इति वचनसत्त्वस्य भगवता बोधितत्वात्। अन्यथा प्रभृतिपदाभावे पञ्चम्यर्थं वचनस्यावश्यकत्वेन तत्प्रत्याख्यानासङ्गतिरिति भावः। एवञ्च तदर्थकारभ्यशब्दयोगेऽपि पञ्चमी यथा–'आवीचिमारभ्य मेरुपृष्ठपर्यन्तं भूलोको, मेरुपृष्ठादारभ्य ध्रुवपर्यन्तं ग्रहनक्षत्रतारागण- चित्रितोऽन्तरिक्षलोकः' इति पातञ्जलभाष्यप्रयोगे। प्रभृतीत्यस्य चावधिमादायेत्यर्थः। आरभ्येत्यस्यैतदर्थकतापि, अवधौ पञ्चम्यन्तार्थ- स्याभेदेनान्वयः। तद्विशेषणत्वेऽपि न द्वितीया, प्रभृत्यर्थयोगे पञ्चमीति भाष्यकृद्बोधितवचनात्। आरभ्येत्यस्य गृहीत्वेत्यर्थेनावीचिमारभ्येत्यादौ द्वितीया। वस्तुतोऽवधित्वन्तस्य समभिव्याहृतपदार्थनिरूपितं गम्यमानक्रियापेक्षमित्यपादानत्वादेवात्र पञ्चमी सिद्धा। कार्त्तिकीतो विभक्ते। अत एव कार्तिक्यवधिके आग्रहायणीघटिते मासे कार्तिकीमादाय गते आग्रहायणीति बोधः। 'भवात्प्रभृति आरभ्य वा' इत्यत्र भवकालाद्विभक्ते। अत एव भवावधिके मरणान्ते काले भवकालमादाय हरिः सेव्य इति बोधः। एवमन्यत्राप्यूह्यमित्यलं विस्तरेण।

ज्ञापकादिति–पञ्चम्यन्तेन समासविधानाज्ज्ञापकादित्यर्थः। अयं भावः– परस्परसाहचर्यात्तत्रापपरी वर्जनार्थौ कर्मप्रवचनीयावेव। तद्योगे 'पञ्चम्यपाङ्परिभिः' (प.सू. २.३.१०) इति वचनात्। लक्षणप्रतिपदोक्तपरिभाषयाऽपपरिनिमित्तकसुबन्तस्यैव ग्रहणाच्च पञ्चम्यैव सिद्धः समासः, तत्साहचर्यादुक्तपरिभाषया चाञ्चूत्तरपदेनापि तन्निमित्तपञ्चम्यैव सिद्धः समास इति व्यर्थं तद् बहिःशब्देन पञ्चम्यन्तेन समासविधानद्वारा तद्योगे पञ्चम्या अपि ज्ञापनार्थमिति। इदमपपरिबहिरिति सूत्रे भाष्ये स्पष्टम्। पञ्चमीति–सापीत्यर्थः। तेन 'करस्य करभो बहिः' इति सिद्धम्।

भैरवी– अत एव अन्यशब्दस्य भेदविशिष्टार्थकत्वादेव। मूलोक्तरीत्याऽन्यशब्दस्यार्थपरत्वेन व्याख्यानस्य प्रयोजनमुक्त्वा स्वमतमाह–परे त्विति। भेदस्यापीति–अपिना पूर्वोक्तार्थसङ्ग्रहः। ननु तस्य न धात्वर्थत्वमत आह–भिदिरिति। अत एव–तस्यापि तस्मिन् सूत्रेऽपायशब्देन ग्रहणादेव। तस्य–नञर्थभेदवतः। ननु मूलोक्तरीत्या 'घटादेक' इति भवति, अन्यशब्दस्यार्थपरत्वाभावे तन्न सिध्येदत आह–घटादेकेति। अत एव– अर्थपरत्वाभावादेव। अत एव–घटाद्भिन्न इत्यादौ 'ध्रुवमपाय' इति सूत्रेणैव पञ्चम्युपपत्तेरेव। ननु 'चैत्रात्पूर्वः' इत्यत्र पूर्वशब्दः कालवाचको न दिक्शब्द इति कथं पञ्चमीत्याशयेनावतारयति–नन्वयमिति। नन्वेवमैन्द्र्यादिशब्दयोगेऽपि प्राप्नोतीत्यत आह–ते चेति। व्याख्यानादिति– तेषां यत्र योगस्तत्र पञ्चम्यदर्शनमूलकाद् व्याख्यानादित्यर्थः। तद्वाचीति– अवयववाचीत्यर्थः। अत एव–अवयविवाचकादेव ज्ञापकेन पञ्चम्यभावस्वीकारादेव। अस्मादिति–भागविशेषावित्यर्थः। अत्र पूर्वशब्दः पूर्वकालावच्छिन्नपरः। तस्य–अञ्चूत्तरपदस्य। प्रत्ययग्रहणादिति– प्रत्ययशब्दस्य प्रत्यायकपरतया श्रूयमाणत्वलाभः। श्रूयमाण एव हि प्रत्यायको भवति। भाष्ये स्पष्टमिति–तत्र ह्येवमुक्तम्–'अथ प्रत्ययग्रहणं किमर्थम्? इह मा भूत्। प्राग् ग्रामात्'। प्रत्यग् ग्रामात्। अञ्चूत्तरपदस्याप्येतत्प्रयोजनमुक्तम्, तत्रान्यतरच्छक्यमवक्तुमिति।

'कार्त्तिक्याः प्रभृति' इति भाष्यप्रयोगात् प्रभृतिशब्दयोगे पञ्चमीति भ्रमनिराकरणायाह–प्रभृत्यर्थेति। अन्यथा–प्रभृतिशब्दयोगे एव पञ्चम्यङ्गीकारे। एवं सति यत्फलितं तदाह–एवञ्चेति। प्रभृत्यर्थयोगे

**पञ्चमीत्यर्थस्वीकारे च। नन्वेवमावीचिमारभ्येत्यत्रापि पञ्चमी कुतो नेत्यत आह–आवीचिमारभ्येति। प्रभृतीत्यारभ्येत्यर्थकमव्ययम्। एतदर्थकतापि–अवधिमादायेत्यर्थकतापि। अपिना गृहीत्वेत्यर्थकतायाः सङ्ग्रहः। मेरुपृष्ठादारभ्येति वाक्यस्योपपत्तिमाह। नन्वावीचिमारभ्येत्यस्य कथमुपपत्तिरित्यत आह–आरभ्येत्यस्येति। आवीचिर्नरकविशेषः। इत्यादाविति–अत्रादिना प्रातःकालमारभ्य पठतीत्यादिसङ्ग्रहः। ज्ञापनं विनापि 'कार्तिक्याः प्रभृति' इति प्रयोगोपपत्तिमाह–वस्तुत इति। समभिव्याहृतपदार्थो मासादिः। गम्यमानक्रियापेक्षमिति–गम्यमाना या क्रिया गमनादिरूपा तदपेक्षमित्यर्थः। तदेवोपपादयति–कार्तिकीत इति। ननु 'अपपरिबहिरञ्चवः' इति सूत्रस्थपञ्चम्या इत्यस्यापादियोगे चारितार्थ्यात् पञ्चम्यन्तेन समासविधानाद् ज्ञापकादित्यस्यानुपपत्तिरत आह–अयम्भाव इति। सिद्धः समास इति–एवञ्च पञ्चम्या इत्यस्याभावेऽपि तृतीयान्तस्य सुपेत्यस्यानुवृत्त्यैवेष्टसिद्धिरित्यर्थः। अञ्चूत्तरपदस्य पञ्चम्यन्तेन समासार्थमपि न पञ्चम्या इत्यत आह–तत्साहचर्यादिति। पञ्चम्या अपि ज्ञापनार्थमिति भावः। एतेन पञ्चम्येत्यस्यापादियोगे चारितार्थ्यात् सामर्थ्येनासुबन्तेन षष्ठ्यन्ते वा समासोऽस्त्विति परास्तम्। ननु ज्ञापकेन बहिःशब्देन योगे पञ्चमी चेत् स्वीक्रियते तदा पञ्चमीप्रकरणे 'अन्यारादितरर्त्ते०' इति सूत्रे एव बहिःशब्दपाठः कर्त्तुमुचित इत्यत आह–सापीति। अपिना षष्ठी-समुच्चयः।**

'अन्यारादितरर्त्ते.' शास्त्रद्वारा अन्य, आरात्, इतर, ऋते, दिक्शब्द, अञ्चूत्तरपद, आच् और आहि इनके योग में पञ्चमीविभक्ति का विधान होता है। यथा—'पटादन्यो घटः' स्थल में अन्य शब्द के योग में प्रकृतसूत्र-द्वारा पञ्चमीविभक्ति होती है। अन्येत्यर्थग्रहणम्—प्रकृतशास्त्रोपदिष्ट अन्यशब्द से अन्यार्थक शब्द का ग्रहण होता है, अत एव 'घटाद् भिन्नः' स्थल में भी प्रकृतशास्त्रद्वारा पञ्चमीविभक्ति का विधान सिद्ध होता है। अन्यशब्द के भिन्न, इतर आदि अर्थ हैं, इसीलिए कौमुदीवृत्ति में प्रकृतसूत्र में इतरग्रहण को प्रपञ्चार्थ कहा है।

अन्यशब्द का अर्थ होता है भेदवान्। भेदवान् पद में दो भाग है—१. भेद, २. वान्। इस प्रकार 'पटादन्यो घटः' कहने पर 'पटात् + भेद + वान् + घटः' रूप से व्यवस्थिति स्वीकार करते हैं। प्रकृतस्थल

में पट का भेद में स्वप्रतियोगिताकत्वसम्बन्ध से अन्वय होता है, अथ च मतुप् प्रत्ययार्थ (वान्) का स्वरूपसम्बन्ध से घट में अन्वय है अथवा भेद का घट में अन्वय होने के कारण 'घट' भेद का अनुयोगी कहलाता है, अत एव स्वानुयोगिताकत्वसम्बन्ध से घट का भेद में अन्वय होता है। इस प्रकार 'पटादन्यो घटः' वाक्य की 'पटप्रतियोगिक जो भेद तादृश भेदानुयोगिक घट' इत्यर्थोपपत्ति होती है।

परे तु से ग्रन्थकार अपने मत का उपस्थापन करते हुए कहते हैं कि अन्यशब्द का भेदविशिष्ट अर्थ नहीं है, अपितु भेद अर्थ है। भेदशब्द में भिद्धातु है। भेदनक्रिया है, इसकी कोई न कोई अवधि अवश्य होगी क्रिया के प्रति अवधि को ही 'ध्रुव' कहते हैं, इस प्रकार भिन्न शब्द के योग में 'ध्रुवमपायेऽपादानम्' सूत्रद्वारा ही अपादानसंज्ञा होकर पञ्चमीविभक्ति का विधान सम्भव है। अत एव प्रकृतसूत्रोपदिष्ट अन्यशब्द को अन्यार्थक मानना व्यर्थ है? अन्य क्रिया नहीं है, अतः अन्यशब्द के योग में 'ध्रुवमपायेऽपादानम्' सूत्रद्वारा अपादानसंज्ञा असम्भव है। इस प्रकार 'अन्यारादितरर्ते.' शास्त्रद्वारा अन्यशब्द के योग में पञ्चमीविभक्ति का विधान करना, अथ च सूत्र में इतरशब्द का ग्रहण करना चरितार्थ होता है। प्रपञ्चार्थक नहीं कहलाता है। इसीलिए शेखरकार लिखते हैं कि—'ध्रुवमपायेऽपादानम्' शास्त्रोक्त अपायशब्द से विश्लेषजनक भेद करनारूप व्यापार भी लिया जाता है। 'पञ्चमी विभक्ते' शास्त्र में भी 'विभागो विभक्तम्' कहकर विभागार्थक विभक्तशब्द का भेद अर्थ किया है। 'भिदिर् विदारणे' धातु से घञ्प्रत्यय करने पर भेदशब्दोपपत्ति होती है। भेदज्ञान के विषय को विदारण कहते हैं, अर्थात् 'अलग करना' भेद कहलाता है। भेदशब्द का विश्लेषजनक क्रिया अर्थ होने से भेदशब्द के योग में 'ध्रुवमपायेऽपादानम्' सूत्रद्वारा अपादानसंज्ञा संभव है। एकत्वेन गृहीत विषय में भेदबुद्धि करने पर भेदस्थल में बौद्धिकविदारण की सिद्धि होती है। भेदशब्द का विश्लेषजनकव्यापार अर्थ है। अर्थात् भेदशब्द के क्रियार्थक होने से ही अपादानसंज्ञा होकर 'घटाद् भेदः' स्थल में पञ्चमीविभक्ति की उपपत्ति होती है। अन्यशब्द को अन्यार्थक स्वीकार करने पर भी 'घटाद् भेदः' स्थल में पञ्चमीविभक्ति का विधान असंभव है, यतो हि अन्यशब्द का भेदवान् अर्थ है, भेदमात्र अर्थ नहीं है। भेदवान् की

सम्बन्धितया विवक्षा करने पर 'घटीयो भेदः' प्रयोग भी होता है। अन्यशब्द क्रियार्थक नहीं है, अत एव अन्यशब्द के योग में अप्राप्त पञ्चमी का विधान होता है। 'अन्यारादितरर्त्ते.' शास्त्र अन्यशब्द के योग में पञ्चमीविभक्ति करता है, अन्यार्थक शब्द के योग में नहीं, इसीलिए 'घटो न पटः' स्थल में पञ्चमीविभक्ति नहीं होती है। अन्यथा अन्यार्थक शब्द के योग में 'अन्यारादितरर्त्ते.' सूत्रद्वारा पञ्चमीविधान स्वीकार करने पर यथा 'घटाद् भिन्नः पटः' स्थल में अन्यार्थक भिन्नशब्द के योग में पञ्चमीविभक्ति होती है, तथैव नञ् का भी भिन्न अर्थ होने के कारण अन्यार्थक नञ् के योग में 'घटो न पटः' स्थल में प्रकृतसूत्रद्वारा पञ्चमीविभक्ति होनी चाहिए थी। यथा अन्यशब्द क्रियावाचक नहीं है, तथैव नञ्शब्द भी क्रियावाचक नहीं है। अथ च 'अन्यारादितरर्त्ते.' शास्त्रद्वारा अन्यशब्द के योग में पञ्चमी होती है, अन्यार्थक शब्दों के योग में नहीं, अत एव 'घटो न पटः' स्थल में अपादानसंज्ञाविधानपूर्वक अथवा प्रकृतसूत्रद्वारा पञ्चमी विभक्ति नहीं होती है।

प्र.— 'अन्यारादितरर्त्ते.' शास्त्रद्वारा अन्यशब्द के योग में पञ्चमी होती है, अन्यार्थक शब्द के योग में नहीं, अत एव 'घटो न पटः' स्थल में पञ्चमी विभक्ति नहीं होती है; किन्तु अन्यार्थक एकशब्द के योग में 'घटादेकः' स्थल में पञ्चमीविभक्तिविधान करने से सिद्ध होता है, कि प्रकृतसूत्रद्वारा अन्यार्थकशब्द के योग में भी पञ्चमीविभक्ति का विधान होता है। एकशब्द अन्यार्थक भी है—

**एकोऽन्यार्थे प्रधाने च समाने केवले तथा।**
**साधारणे समानेऽल्पे संख्यायाञ्च प्रयुज्यते।।**

उ.— अन्यारादितरर्त्ते॰ शास्त्रद्वारा अन्यशब्द के योग में ही पञ्चमीविभक्ति होती है, अन्यार्थक शब्द के योग में नहीं। अत एव 'घटादेकः' प्रयोग असाधु कहलाता है। एतच्छास्त्रोक्त अन्यशब्द अन्यार्थक नहीं है, इसीलिए प्रकृतशास्त्रोपदिष्ट इतरशब्दोपदेश चरितार्थ होता है, प्रपञ्चार्थोपदेश स्वीकार नहीं करना पड़ता है। भाष्यकार ने भी अन्यशब्द का अन्यार्थकोपदेश स्वीकार नहीं किया है। प्रकृतशास्त्रद्वारा आरात् पद के योग में पञ्चमी विभक्ति का विधान होता है। 'आरात्' पद दूर एवं अन्तिक = समीप उभयार्थक है। अत एव आरात् पद के योग में 'दूरान्तिकार्थैः' (पा.सू.

२.३.३४) शास्त्रद्वारा तृतीयाविभक्ति का प्रकृतसूत्रद्वारा बाध होता है। दिग्वाचक शब्द के योग में प्रकृतसूत्रद्वारा पञ्चमीविभक्ति का विधान होकर 'पूर्वो ग्रामात्' प्रयोगोपपत्ति होती है।

प्र.— अन्यारादितरर्त्ते. शास्त्रद्वारा दिग्वाचक शब्द के योग में पञ्चमीविभक्ति का विधान होता है, अत एव 'चैत्र से पूर्वकाल में फाल्गुन मास की सत्ता है' इत्यर्थवाग्विवक्षा में प्रयुक्त 'चैत्रात् पूर्वः फाल्गुनः' वाक्यघटक कालवाचक पूर्वशब्द के योग में पञ्चमीविभक्ति का विधान नहीं होना चाहिए?

उ.— अन्यारादितरर्त्ते. शास्त्र में मात्र 'दिक्' पद का उपदेश न कर '.दिक्छब्द.' इत्याकारिका आनुपूर्वी का उपदेश करते हुए 'दिशि दृष्टः शब्दः' विग्रहपूर्वक दिक्छब्दोपपत्ति स्वीकार करने से सिद्ध होता है, कि दिशा अर्थ में देखे गये शब्द के योग में भी प्रकृतशास्त्रद्वारा पञ्चमीविभक्ति का विधान होता है। अत एव 'चैत्रात् पूर्वः फाल्गुनः' वाक्यघटक पूर्वशब्द की कालवाचकता होने पर भी दिगर्थ में पूर्वशब्द के दृष्टपूर्व होने के कारण इसके योग में प्रकृतसूत्रद्वारा पञ्चमीविभक्ति होती है। प्रकृतशास्त्रद्वारा 'दिक्छब्द के योग में पञ्चमीविभक्ति होती है' इत्येतदर्थवाग्विवक्षा में समुपदिष्ट 'दिक्शब्दयोगे पञ्चमी' वाक्य की व्याख्यानसामर्थ्य से 'दिशा अर्थ में रूढ एवं दिशा अर्थ में दृष्टपूर्व शब्दों के योग में पञ्चमीविभक्ति होती है' इत्यर्थोपपत्ति होती है, अत एव 'ऐन्द्री एवं ककुप्' आदि शब्दों के योग में प्रकृतशास्त्रद्वारा पञ्चमीविभक्ति का विधान नहीं होता है, यतो हि ऐन्द्री और ककुप् आदि शब्द दिगर्थवाचक होने पर भी दिशा अर्थ में रूढ नहीं हैं और न ही दिशा अर्थ में दृष्टपूर्व ही हैं।

अवयववाचियोगे तु न 'तस्य परमाम्रेडितम्' (पा.सू. ८.१.२) इति निर्देशात्। दिशा अर्थ में दृष्टपूर्व शब्द की अवयव अर्थ में वृत्तिता होने पर इसके योग में अवयविवाचक शब्द से पञ्चमीविभक्ति नहीं होती है। यह तथ्य 'तस्य परमाम्रेडितम्' सूत्रनिर्देश से सिद्ध होता है। 'तस्य परमाम्रेडितम्' शास्त्रद्वारा द्विरुक्तपदघटक उत्तरावयव की आम्रेडितसंज्ञा का विधान होता है। प्रकृतशास्त्रोपदिष्ट दिशा अर्थ में दृष्टपूर्व अवयववाचक परशब्द के योग में अवयविवाचक तत्शब्द से पञ्चमीविभक्ति का विधान सूत्रकार ने नहीं किया है। ज्ञापक सजातीयापेक्ष होते हैं, अत एव दिशा

अर्थ में दृष्टपूर्व अवयववाचक शब्दों के योग में अवयविवाचकशब्द से ही पञ्चमीविभक्ति के विधान का अभाव सिद्ध होता है। इसीलिए 'पूर्वं कायस्य' स्थल में पञ्चमीविभक्ति नहीं होती है। प्रकृतवाक्यघटक पूर्वशब्द अवयववाचक होते हुए दिशा अर्थ में दृष्टपूर्व है, अथ च कायशब्द अवयविवाचक है, ज्ञापक सजातीयापेक्ष होते हैं, अत एव अवयविवाचक शब्द से ही पञ्चमीविभक्ति का निषेध होता है। इसीलिए 'पर अवयव की अपेक्षा यह अवयव प्रथमकाल में उत्पन्न हुआ' इत्यर्थवाग्विवक्षा में प्रयुक्त 'अस्मादयं पूर्वो भागः कायस्य' वाक्यघटक अवयववाचक पूर्वशब्द के योग में अवयवबोधक इदम् शब्द से पञ्चमी का बाध नहीं होता है, अत एव 'अस्मादयं पूर्वो भागः' प्रयोगोपपत्ति होती है। प्रकृतस्थल में उत्पत्तिकाल को लेकर अवयवों में पूर्वत्व और परत्व का व्यवहार हुआ है। अञ्चूत्तरपद के योग में भी प्रकृतशास्त्रद्वारा पञ्चमीविभक्ति का विधान होता है, यथा—'प्राक् प्रत्यक् वा ग्रामात्। अञ्चूत्तरपदस्य तु दिक्छब्दत्वेऽपि 'षष्ठ्यतसर्थ.' (पा.सू. २.३.३०) इति षष्ठीं बाधितुं पृथक् ग्रहणम्'।

प्र.— 'प्राक् प्रत्यक् वा ग्रामात्' स्थल में प्राक् और प्रत्यक् दोनों ही दिग्वाचक शब्द हैं, अत एव प्रकृतस्थल में 'दिक्छब्दयोगे पञ्चमी' कथन से ही पञ्चमीविभक्ति का विधान संभव है, 'अञ्चूत्तरपदयोगे पञ्चमी' कथन अनावश्यक है?

उ.— प्राक् एवं प्रत्यक् दोनों यद्यपि दिग्वाचक शब्द हैं, अत एव प्रकृतस्थल में 'दिक्छब्दयोगे पञ्चमी' कथन से ही पञ्चमीविभक्ति का विधान संभव है; किन्तु प्राक् और प्रत्यक् स्थल में अस्ताति-प्रत्ययविधानपूर्वक 'अञ्चेर्लुक्' (पा.सू. ५.३.३०) सूत्रद्वारा अस्तातिप्रत्यय का लुक् होकर प्राक् और प्रत्यक् शब्द अस्ताति निष्पन्न होनेवाले प्रत्ययान्त न होने पर भी 'यः शिष्यते स लुप्यमानार्थाभिधायी' नियमद्वारा अस्तातिप्रत्ययार्थबोधक हैं। अस्तातिप्रत्यय से लेकर आहिप्रत्ययपर्यन्त दिग्देशकालवाचक शब्दों से स्वार्थ में प्रत्ययों का विधान होता है, अत एव इस प्रकरण में 'दक्षिणोत्तराभ्यामतसुच्' सूत्रविहित अतसुच् प्रत्यय का दिग्देश और काल अर्थ कहलाता है। दिग्देशकाल अर्थ में होनेवाले प्रत्ययों को अतसर्थ-प्रत्यय कहते हैं।

'षष्ठ्यतसर्थप्रत्ययेन' (पा.सू. २.३.३०) सूत्रस्थान में 'षष्ठ्यतसर्थेन' मात्रोपदेश करने पर भी 'अतसर्थप्रत्ययान्त के योग में षष्ठीविधान संभव है। अर्थात् अतसर्थशब्द का ही 'अतसर्थप्रत्यय' अर्थ होगा, यतो हि अतसर्थप्रत्ययों से भिन्न अतसर्थ नाम की कोई वस्त्वन्तर नहीं है। इस प्रकार प्रत्यय अर्थ का प्रत्ययशब्दोपदेश के विना ही लाभ संभव है। 'षष्ठ्यतसर्थप्रत्ययेन' शास्त्रघटक प्रत्ययपदोपदेश व्यर्थ होकर ज्ञापन करता है, कि 'प्रकृतशास्त्रद्वारा अतसर्थप्रत्यय के योग में षष्ठीविधान होता है'। अथ च अतसर्थ गम्यमान होने पर भी षष्ठो का विधान होता है। इस प्रकार लुप्त-अस्तातिप्रत्ययान्त प्राक् और प्रत्यक् शब्द अतसर्थबोधक होने से 'षष्ठ्यतसर्थप्रत्ययेन' शास्त्रद्वारा प्राप्त षष्ठीविभक्ति का बाध करने के लिये 'अन्यारादितरर्ते.' शास्त्र में अञ्चूत्तरपद का उपदेश किया है। प्रकृतशास्त्रद्वारा आच् एवं आहि प्रत्ययान्त शब्दों के योग में भी पञ्चमीविभक्ति का विधान होता है। यथा—**दक्षिणा ग्रामात्** एवं **दक्षिणाहि ग्रामात्**। प्रकृतस्थल में आच् और आहि प्रत्यय साक्षात् श्रुत हैं, अत एव इनके योग में 'षष्ठ्यतसर्थप्रत्ययेन' शास्त्रद्वारा षष्ठी का बाध करने के लिये प्रकृतशास्त्र में आजाहिशब्दोपदेश किया है। 'षष्ठ्यतसर्थप्रत्ययेन.' शास्त्र का 'अन्यारादितरर्ते.' शास्त्रद्वारा अपवादतया बाध होता है।

प्र.— प्रभृतिशब्द के योग में पञ्चमीविधायक शास्त्रोपदेश आचार्य ने नहीं किया है। अत एव 'कार्त्तिक्या: प्रभृति' स्थल में पञ्चमीविधान असंगत है?

उ.— 'अपादाने पञ्चमी' (पा.सू. २.३.२८) शास्त्र के भाष्य में भाष्यकारद्वारा 'कार्त्तिक्या: प्रभृति' प्रयोगोपदेशसामर्थ्य से प्रभृतिशब्द के योग में पञ्चमीविभक्ति का विधान होता है। 'अपादाने पञ्चमी' शास्त्रोपदिष्ट प्रभृतिशब्द का भाष्यकारद्वारा प्रभृत्यर्थ विवक्षित है, अत एव प्रभृति एवं आरभ्य इत्यादि प्रभृत्यर्थक समस्तशब्दों के योग में पञ्चमीविभक्ति की उपपत्ति होती है। 'जिसे अवधि मानकर काल और अध्वा का निर्माण होता है, उस अवधिबोधकशब्द से पञ्चमीविभक्ति होती है। पञ्चम्यन्त से युक्त अध्ववाचकशब्द से प्रथमा और सप्तमी विभक्ति होती है तथा कालवाचक से सप्तमी विभक्ति होती है'। इत्येतदर्थक 'यतश्चाध्वकालनिर्माणं तत: पञ्चमी', 'तद्युक्तात् प्रथमासप्तम्यौ' तथा 'कालात् सप्तमी च वक्तव्या' वार्त्तिकों के मध्य 'यतश्चाध्वकालनिर्माणं तत: पञ्चमी' वार्त्तिक का

प्रत्याख्यान करते समय भाष्यकार ने कहा कि 'यतश्चाध्वकाल.' वार्त्तिकोदाहरणरूप से समुपदिष्ट 'कार्त्तिकी पूर्णिमा से एकमास व्यतीत होने पर आग्रहायणमास की पूर्णिमा आती है' इत्येतदर्थक 'कार्त्तिक्या आग्रहायणी मासे' अर्थात् 'कार्त्तिक्याः मासे गते सति आग्रहायणी' स्थल में 'कार्त्तिक्याः प्रभृति आग्रहायणी मासे' इत्याकारक प्रयोगोपदेश करना चाहिए था; किन्तु 'कार्त्तिक्या आग्रहायणी मासे' इत्याकारक प्रयोगोपदेश किया। इस भाष्यप्रतिपादन में प्रभृतिशब्द के योग में उच्चारणपूर्वक भाष्यकार ने पञ्चमीविधान किया है। साथ ही यह भी कहा कि 'कार्त्तिक्या; प्रभृति आग्रहायणी' उपदेश करना चाहिए था; किन्तु इसी अर्थ में 'कार्त्तिक्या आग्रहायणी मासे' कहा है। इससे स्फुट ध्वनित होता है, कि प्रभृत्यर्थ गम्यमान होने पर भी पञ्चमी होती है। प्रकृतभाष्यप्रतिपादन से 'प्रभृत्यर्थयोगे पञ्चमी' वचन की सिद्धि होती है। यदि प्रभृतिशब्द के योग में ही पञ्चमीविधान भाष्यकार को अभीष्ट होता, तो 'कार्त्तिक्या आग्रहायणी मासे' प्रयोग में पञ्चमीविधानार्थ 'यतश्चाध्वनिर्माणं ततः पञ्चमी' वार्त्तिकोपदेश आवश्यक सिद्ध होता है। भाष्यकारद्वारा यतश्चेति वार्त्तिक का प्रत्याख्यान असंभव था। भाष्यकारीय प्रत्याख्यान से सिद्ध होता है, कि प्रभृत्यर्थक शब्दों के योग में भी पञ्चमीविभक्ति होती है।

प्र.— प्रभृत्यर्थक शब्दों के योग में पञ्चमीविभक्ति के विधान का निश्चय होने पर 'आवीचि नामक नरक से लेकर मेरुपृष्ठपर्यन्त भूलोक है, मेरुपृष्ठ से लेकर ध्रुवपर्यन्त ग्रह, नक्षत्र और तारागणों से चित्रित अन्तरिक्षलोक है' इत्यर्थवाग्विवक्षा में प्रयुक्त 'आवीचिमारभ्य मेरुपृष्ठपर्यन्तं भूलोको, मेरुपृष्ठादारभ्य ध्रुवपर्यन्तं ग्रहनक्षत्रतारागणचित्रितोऽन्तरिक्षलोकः' वाक्यघटक आरभ्य पद के योग में 'मेरुपृष्ठाद्' पद में पञ्चमी का विधान है, तथैव 'आवीचिमारभ्य' स्थल में भी पञ्चमीविभक्ति होनी चाहिए?

उ.— आरभ्यपद का अवधि अर्थ है। अवधि में पञ्चम्यन्तपदार्थ का अभेदसम्बन्ध से अन्वय है। यद्यपि आरभ्यपद का अवधि अर्थ है; किन्तु विभाग न होने के कारण 'ध्रुवमपायेऽपादानम्' सूत्रद्वारा अपादानसंज्ञा नहीं होती है। मेरुपृष्ठ यद्यपि अवधि में विशेषणविधया अन्वित होता है, तथापि 'प्रभृत्यर्थयोगे पञ्चमी' इस भाष्यवचन के बल से मेरुपृष्ठशब्द से पञ्चमी विभक्ति होती है। अथ च 'आवीचिमारभ्य' स्थल में 'आवीचिं गृहीत्वा

आरभ्य' इत्याकारिका अर्थविवक्षा स्वीकार करने पर आवीचिशब्द से पञ्चमी नहीं होती है।

वस्तुतः 'कार्त्तिक्या आग्रहायणी मासे' स्थल में कार्त्तिकी-समभिव्याहृतमासरूपपदार्थनिरूपितविभागादिगम्यमानक्रिया का अध्याहार करने से क्रियाकारकभाव की उपपत्तिपुरःसर अर्थात् 'कार्त्तिकी से एकमास बीतने पर आग्रहायणी पूर्णिमा आती है' इत्याकारकवाग्विवक्षा में कार्त्तिकी पूर्णिमा से आग्रहायणी पूर्णिमा का विभाग है। इस प्रकार कार्त्तिकी पूर्णिमा में मासनिरूपित अवधित्व रहने के कारण कार्त्तिकी की 'ध्रुवमपायेऽपादानम्' सूत्रद्वारा अपादानसंज्ञा होकर पञ्चमीविधान संभव है। 'यतश्चाध्वकालनिर्माणं ततः पञ्चमी' वार्त्तिकोपदेश व्यर्थ है।

**'अपपरिबहि.' (पा.सू. २.१.१२) इति समासविधानाज्ज्ञापकाद् बहिर्योगे पञ्चमी।**

'अपपरिबहि.' शास्त्रद्वारा अप, परि और बहिःशब्द का पञ्चम्यन्त के साथ समास होता है; किन्तु बहिः का पञ्चम्यन्त के साथ समास असंभव है, यतो हि बहिःशब्द के योग में पञ्चमीविधायक शास्त्र ही नहीं है। इस प्रकार 'अपपरिबहि.' शास्त्रद्वारा बहिःशब्द का पञ्चम्यन्त के साथ समासविधान व्यर्थीभूय ज्ञापन करता है, कि बहिःशब्द के योग में भी पञ्चमीविभक्ति होती है।

प्रकृतप्रसङ्ग में किसी आचार्य का कथन है, कि 'अपपरि.' शास्त्रद्वारा समासविधानसामर्थ्य से 'बहिर्योग में पञ्चमीविभक्ति होती है' इस ज्ञापन के साथ-साथ यह भी ज्ञापित होता है, कि बहिःशब्द का पञ्चम्यन्त के साथ ही समास होता है। यतो हि ज्ञापकशास्त्रद्वारा बहिःशब्द का पञ्चम्यन्त के साथ ही समासविधान किया गया है'; परन्तु यह कथन उचित नहीं है, यतो हि—'अपपरी वर्जने' (१.४.८८) सूत्रद्वारा वर्जनार्थक अप और परि की कर्मप्रवचनीयसंज्ञा का विधान होता है। प्रकृतशास्त्र में वर्जनार्थक 'अप' के साहचर्य से 'परि' भी वर्जनार्थक लिया जाता है। 'आङ् मर्यादावचने' (१.४.८९) शास्त्रद्वारा मर्यादावचन में वर्त्तमान 'आङ्' की कर्मप्रवचनीय संज्ञा का विधान होता है। आङ् के मर्यादा और अभिविधि दोनों ही अर्थ हैं। 'आङ् मर्यादावचने' सूत्रापेक्षया लाघवात् 'आङ् मर्यादायाम्' सूत्रोपदेश करने पर भी मर्यादावचन में आङ् की

कर्मप्रवचनीयसंज्ञा का विधान संभव था, वचनग्रहण व्यर्थ है। अत एव वचनग्रहण सामर्थ्य से अभिविधि अर्थ में भी 'आङ्' की कर्मप्रवचनीयसंज्ञा होती है। कर्मप्रवचनीयसंज्ञक आङ्, परि और अप के योग में 'पञ्चम्यपाङ्परिभि:' (पा.सू. २.३.१०) शास्त्रद्वारा पञ्चमीविभक्ति का विधान होता है। इसलिए प्रतिपदोक्तपरिभाषाद्वारा अप, परि निमित्तक पञ्चम्यन्त सुबन्त लिया जाता है, षष्ठ्यन्तादि सुबन्त नहीं। इस प्रकार बहि:शब्द का पञ्चम्यन्त के साथ ही समास होगा, षष्ठ्यन्त के साथ समास की प्राप्ति ही नहीं है। अत एव षष्ठ्यन्त के साथ समासवारण करने के लिये 'बहि:शब्द का पञ्चम्यन्त के साथ ही समास होता है' यह ज्ञापन आवश्यक नहीं है। अर्थात् 'बहि:शब्द के योग में पञ्चमी होती है' इस ज्ञापन के साथ 'अप, परि और अञ्चूत्तरपद का पञ्चम्यन्त के साथ ही समास होता है' षष्ठ्यन्तादि के साथ नहीं' यह ज्ञापन स्वीकार करना व्यर्थ है, यतो हि षष्ठ्यन्तादि सुबन्त के साथ समास की निवृत्ति तो लक्षणप्रतिपदोक्तपरिभाषाद्वारा ही सिद्ध है।

प्र.— बहि:शब्द के योग में ज्ञापन से पञ्चमीविभक्ति का विधान करने की अपेक्षा 'अन्यारादितरर्ते.' सूत्र में ही बहि:शब्दोपदेशपूर्वक पञ्चमीविभक्ति का विधान क्यों नहीं करते हैं?

उ.— 'अन्यारादितरर्ते.' शास्त्र में बहि:शब्दोपदेशपूर्वक पञ्चमीविभक्ति का विधान न कर ज्ञापनसामर्थ्य से बहि:शब्द के योग में पञ्चमीविभक्ति का विधान करने से 'ज्ञापकसिद्धं न सर्वत्र' सिद्धान्तानुसार 'करस्य करभो बहि:' स्थल में षष्ठीविभक्ति की भी बहिर्योग में उपपत्ति होती है।

**प्रतिः प्रतिनिधिप्रतिदानयोः ।।१.४.९२।।**

प्रकृतशास्त्रद्वारा प्रतिनिधि और प्रतिदान अर्थ गम्यमान होने पर 'प्रति' की कर्मप्रवचनीयसंज्ञा होती है।

**प्रतिनिधिप्रतिदाने च यस्मात् ।।२.३.११।।**

प्रकृतशास्त्रद्वारा कर्मप्रवचनीयसंज्ञक 'प्रति' के योग में जिसका प्रतिनिधि हो अथवा जिसका प्रतिदान हो तद्वाचक प्रातिपदिक से पञ्चमीविभक्ति का विधान होता है।

**शे.– यस्मादिति पञ्चम्यर्थः सम्बन्धः। अस्मादेव निपातनात् षष्ठ्यर्थे पञ्चमी। प्रतिनिधिप्रतिदानशब्दौ कर्मणि भावल्युडन्तौ।**

**भैरवी– सम्बन्धः– प्रतियोगित्वादिरूपः। अस्मादेवेति–यस्मादिति निपातनादित्यर्थः। मूले एतत्सूत्रवृत्तौ बहुवचनं प्रयोगभेदात्।**

प्र.— प्रकृतसूत्र का 'जिसका प्रतिनिधि हो अथवा जिसका प्रतिदान हो' इत्याकारक अर्थाश्रयण करने पर तो 'यस्मात्' पदोपदेश की अपेक्षा 'यस्य' पदोपदेश करना चाहिए था?

उ.— प्रकृतसूत्र में 'यस्य' पदोपदेश न कर 'यस्मात्' पदोपदेशसामर्थ्य से ज्ञापित होता है कि 'क्वचित् षष्ठ्यर्थेऽपि निपातनात् पञ्चमी भवति'। प्रति एवं निपूर्वक धाधातु से कर्म में किप्रत्यय विधानपुरःसर प्रतिनिधिपदोपपत्ति होती है। अथ च प्रतिपूर्वक दाधातु से भाव में ल्युट्प्रत्ययविधान करने से प्रतिदानपदोपपत्ति होती है।

**शे.– प्रतिनिधिप्रतिदाने यत्सम्बन्धिनी ततः कर्मप्रवचनीययुक्तात् पञ्चमीत्यर्थः।**

प्रतिनिधि और प्रतिदान अर्थ गम्यमान होने पर जिसका प्रतिनिधि हो अथवा जिसका प्रतिदान हो, तद्वाचक प्रातिपदिक से कर्मप्रवचनीयसंज्ञक प्रति के योग में प्रकृतसूत्रद्वारा पञ्चमीविभक्ति का विधान होता है।

**शे.– प्रतिनिधिः सदृशः, प्रतिदानं दत्ततुल्यमूल्यस्य वस्तुनः प्रत्यर्पणम्।**

**भैरवी– दत्ततुल्येति–दत्तस्यैव प्रत्यर्पणं सर्वत्र न सम्भवतीत्येवमुक्तिः।**

प्रतिनिधि शब्द का सदृश अर्थ है। प्रदत्तवस्तु के तुल्य मूल्यवाली वस्तु का प्रत्यर्पण करना प्रतिदान कहलाता है।

## अकर्तर्यृणे पञ्चमी ।।२.३.२४।।

**कर्तृवर्जितं यदृणं हेतुभूतं ततः पञ्चमी स्यात्।।शताद् बद्धः। अकर्तरि किम्-शतेन बन्धितः।।इति कौमुदी।।**

**शे.– कर्तृवर्जितमिति–कर्तृसंज्ञारहितमित्यर्थः। ऋणत्वं वस्तुसन्निमित्तं न तु तृतीयावाच्यकोटिप्रविष्टम्। हेतुभूतमिति–तेन करणत्वविवक्षायां तृतीयैवेति भावः।**

**भैरवी– कर्तृवर्जितमित्यस्य कर्तृत्वावच्छिन्नप्रतियोगिताकभेदवदित्यर्थः प्रतीयते स चासङ्गतः। शतपदार्थस्यापि स्वस्वरूपधारणात्मकव्यापाराश्रयत्वेन कर्तृत्वादत आह– कर्तृसंज्ञेति। एवञ्च कर्तृसंज्ञायाः क्रियायोग एव प्रवृत्त्या 'शताद्बद्धः' इत्यत्र या बन्धनक्रिया तद्योगनिमित्तककर्तृसंज्ञाभावस्य**

**तत्र सत्त्वाददोषः। हेतुतृतीयापवादभूतेयं पञ्चमी। न तु तृतीयावाच्य-कोटिनिविष्टम्। अत एव ऋणत्वेन शाब्दबोधविषयत्वन्न। प्रकृतसूत्रोदाहरणे 'शताद्बद्धः' इत्यत्र शतस्य हेतुत्वविवक्षैव न तु कर्तृसंज्ञा। प्रत्युदाहरणे 'शतेन बन्धितः' इत्यत्र 'तत्प्रयोजको हेतुश्च' इति सूत्रेण शतस्य हेतुसंज्ञा कर्तृसंज्ञा च।।**

१. कर्त्ता न हो, २. ऋण हो, ३. वह ऋण हेतुभूत हो, उससे पञ्चमीविभक्ति होती है। अर्थात् प्रकृतसूत्रद्वारा कर्तृभिन्नहेतुभूत ऋणवाचक प्रातिपदिक से पञ्चमीविभक्ति का विधान होता है, यथा—'शताद्बद्धः'। किसी व्यक्ति ने एकसौ रूपया ऋण लिया, वह लौटा नहीं रहा था, अतः बाँधा गया। प्रकृत स्थल में (१) शत ऋण है, (२) बन्धन में हेतुभूत है, (३) कर्तृसंज्ञक नहीं है। अत एव शतशब्द से पञ्चमीविभक्ति होती है। प्रकृतस्थल में 'हेतौ' तृतीया प्राप्त थी, उसको बाँधकर पञ्चमीविभक्ति होती है। प्रकृतप्रसङ्ग में ऋण पञ्चमी का वाच्य नहीं है, अपितु हेतु ही पञ्चमीवाच्य है। ऋणवाचक शतशब्द है। ऋण बन्धन में निमित्त है, अतः हेतुत्वविवक्षा में पञ्चमी होती है और करणत्वविवक्षा में तृतीया। 'शतेन बन्धितः' स्थल में ण्यन्त के प्रयोजककर्त्ता की कर्तृसंज्ञा होने से पञ्चमी नहीं होती है।

## विभाषा गुणेऽस्त्रियाम् ।।२.३.२५।।

**गुणे हेतावस्त्रीलिङ्गे पञ्चमी वा स्यात्। जाड्याज्जाड्येन वा बद्धः। गुणे किम्? धनेन कुलम्। अस्त्रियां किम्–बुद्ध्या मुक्तः। विभाषेति योगविभागादगुणे स्त्रियां च क्वचित्। धूमादग्निमान्। नास्ति घटोऽनुपलब्धेः।।इति कौमुदी।।**

**शे.–** **योगविभागादिति–'बाहुलकं प्रकृतेस्तनुदृष्टेः' इत्युक्तवार्त्तिकप्रयोगाद् गुणेऽस्त्रियामिति प्रायिकमित्यन्ये। धूमादिति–धूमपदं स्वज्ञानेऽग्निमत्पदं स्वज्ञानविषये लाक्षणिकं बोध्यम्।**

**भैरवी–** **'विभाषा गुणेऽस्त्रियाम्' इति सूत्रे योगविभागस्य पदमञ्जर्युक्तस्यापि भाष्येऽदर्शनादाह–बाहुलकमिति। इत्युक्तेति–अस्य उणादय इति सूत्रभाष्य इत्यादिः। प्रकृतसूत्रोदाहरणे जाड्यादित्यत्र जाड्यस्यान्तःकरणविशेषा-वच्छिन्नशरीरनिष्ठधर्मस्य बन्धनक्रियाकारणत्वं सम्भवति। गुणत्वञ्च तस्य संज्ञाक्रियाजातिभिन्नत्वात् सम्भवति। 'धूमादग्निमान्' इत्यत्र**

**धूमपदस्य जात्याश्रयवाचकतया कथं गुणत्वम्। कथञ्चाग्निमन्निरूपितं हेतुत्वं धूमपदार्थस्य तत्कारणत्वाभावादत आह–धूमपदं स्वज्ञान इति। एवञ्च धूमज्ञानजन्याग्निज्ञानेऽनुमितिरूपे कारणतायाः प्रसिद्धत्वान्न सूत्रोदाहरणत्वानुपपत्तिरिति भावः।**

प्रकृतसूत्रद्वारा गुणवाचकशब्द से विकल्प से पञ्चमीविभक्ति का विधान होता है, यदि वह गुणवाचक शब्द (१) हेतुभूत हो। (२) स्त्रीलिङ्ग में वर्तमान न हो। अर्थात् अस्त्रीलिङ्ग में वर्त्तमानहेतुभूतगुणवाचक शब्द से प्रकृतसूत्रद्वारा विकल्प से पञ्चमीविभक्ति होती है। यथा—जाड्यात् जाड्येन वा बद्धः। प्रकृतस्थल में जाड्य गुणवाचक है, बन्धन में हेतु है और अस्त्रीलिङ्ग में वर्त्तमान है। गुणे किम्—धनेन कुलम्। 'सत्त्वे निविशतेऽपैति' अर्थात् जीव में जो प्रविष्ट हो सके अथवा हट सके, उसे गुण कहते हैं। 'धनशब्द' गुणवाचक नहीं है, अत एव विकल्प से पञ्चमीविभक्ति नहीं हुई। धनेन कुलम्।

**'विभाषेति योगविभागादगुणे स्त्रियां च क्वचित्'।**

'विभाषा गुणेऽस्त्रियाम्' सूत्र का योगविभागपूर्वक दो सूत्र स्वीकृतिपुरःसर 'विभाषा' योग का 'हेतुवाचक से विकल्प से पञ्चमी विभक्ति होती है' अर्थ स्वीकार करते हैं। अथ च 'गुणेऽस्त्रियाम्' योग में 'विभाषा' पदानुवर्त्तनपूर्वक प्रकृतयोग की 'अस्त्रीलिङ्ग में वर्त्तमान हेतुभूत गुणवाचकशब्द से विकल्प से पञ्चमीविभक्ति होती है' इत्यर्थोपपत्ति होती है।

अस्त्रीलिङ्ग में वर्त्तमान हेतुभूत गुणवाचकशब्द से 'विभाषा' सूत्रद्वारा ही विकल्प से पञ्चमीविभक्ति का विधान संभव था। अत एव 'गुणेऽस्त्रियाम्' इति सूत्रोपदेश व्यर्थ होकर 'गुणवाचक प्रातिपदिक से विकल्प से यदि पञ्चमी विभक्ति हो, तर्हि अस्त्रीलिङ्ग में वर्त्तमान हेतुभूत गुणवाचक प्रातिपदिक से ही हो' इत्याकारक नियम करता है। अस्त्रीलिङ्ग में वर्त्तमान हेतुभूत गुणवाचक प्रातिपदिक से पञ्चमीविभक्ति का विकल्प से विधान तो 'विभाषा गुणेऽस्त्रियाम्' इत्येकयोग उपदेश करने पर भी संभव है। इस प्रकार 'विभाषा' इति पृथक् योगविभागाश्रयण व्यर्थीभूय ज्ञापन करता है, कि 'क्वचित् अगुणेऽपि स्त्रियां च वर्त्तमानात् प्रातिपदिकादपि पञ्चमीविभक्तिर्विकल्पेन भवति'। अत एव जातिवाचक हेतुभूत धूमप्रातिपदिक से पञ्चमीविभक्ति होकर 'धूमादग्निमान्' प्रयोगोपपत्ति होती है, अथ च

स्त्रीलिङ्ग में वर्त्तमान हेतुभूत गुणवाचक अनुपलब्धिप्रातिपदिक से भी पञ्चमीविभक्ति का विधान सिद्ध होता है।

प्रकृत योगविभाग की भाष्य में अनुपलब्धि होने के कारण कुछ वैयाकरण 'बाहुलकं तनुदृष्टेः' वार्त्तिकोक्त स्त्रीलिङ्गवृत्ति हेतुभूत गुणवाचक तनुदृष्टिप्रातिपदिक से पञ्चमीविभक्तिविधानपूर्वक 'तनुदृष्टेः' पदोपपदेश सामर्थ्य से 'अस्त्रियाम्' अंश की प्रवृत्ति प्रायिक मानकर 'नास्ति घटोऽनुपलब्धेः' प्रयोगघटक अनुपलब्धिप्रातिपदिक से पञ्चमीविधान स्वीकार करते हैं। अथ च 'धूमादग्निमान्' स्थल में धूम हेतु न होकर धूमज्ञान हेतु है, अत एव धूमशब्द का लक्षणाद्वारा 'धूमज्ञान' अर्थ स्वीकृतिपुरःसर धूमशब्द की गुणवाचकता सिद्ध करके पञ्चमीविभक्ति का विधान स्वीकार करते हैं। अर्थात् 'धूमादग्निमान्' स्थल में लक्षणाद्वारा धूम का धूमज्ञान एवं अग्निमत् शब्द का अग्निमद्विषयक ज्ञान अर्थ होता है।

**पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम् ।।२.३.३२।।**

**एभिर्योगे तृतीया स्यात् पञ्चमीद्वितीये च। अन्यतरस्यां ग्रहणं समुच्चयार्थम्। पञ्चमीद्वितीयेऽनुवर्त्तेते। पृथग् रामेण रामाद् रामं वा। एवं विना नाना।।इति कौमुदी।।**

**शे.– समुच्चयार्थमिति–स्पष्टच्चेदं भाष्ये। एतेनान्यतरस्य–आम् = अङ्गीकार इत्यर्थकं पदद्वयमेतदित्यपास्तम्। विकल्पविषयेऽप्यर्थासङ्गतेश्च।**

**परे तु द्वितीयासमुच्चयो न फलम्। विना वातं विना वर्षमित्यादौ ऋतेशब्दयोग इव 'ततोऽन्यत्रापि दृश्यते' इत्यनेन द्वितीयासिद्धेः। अत एव भाष्ये द्वितीयासमुच्चयो नोक्तः। 'पञ्चम्या अधिकारे द्वितीयाषष्ठीविषये प्रतिषेधो वक्तव्यः, दक्षिणेन ग्रामं दक्षिणतो ग्रामस्य' इति प्रकृतसूत्रस्थभाष्येण 'एनपा द्वितीया' (पा.सू. २.३.३३) इति सूत्रं 'षष्ठ्यतसर्थ.' (पा.सू. २.३.३०) इत्यतः प्रागिति च सूचितम्। अन्यथा सौत्रक्रमत्यागे न्यायविपरीतपूर्वनिपातकरणे च बीजानापत्तिः। अत एव 'करणे च' (पा.सू. २.३.३३) इति सूत्रे द्वितीयासमुच्चयो नेत्याहुः।**

**भैरवी– स्पष्टश्चेदमिति–'न चान्यतरस्याङ्ग्रहणस्य विकल्पार्थत्वेऽपि तृतीयाया अभावे प्रकृतसूत्रे पञ्चमीद्वितीयाया अनुवर्त्तनादेव तयोः पर्यायेण**

**प्रवृत्तिर्भविष्यतीति किं समुच्चयार्थत्ववर्णनेनेति वाच्यम्। पृथगादिषु पञ्चमीविधानम्। पृथगादिषु पञ्चमी विधेया। पृथग् देवदत्तात्। किं कारणम्। न प्रकृतं पञ्चमीग्रहणमनुवर्त्तते, क्व प्रकृतम्। अपादाने पञ्चमीति। अनधिकारात्। अनधिकारः सः। अधिकारे हि द्वितीयाषष्ठीविषये प्रतिषेधो वक्तव्यः। दक्षिणेन ग्रामं दक्षिणतो ग्रामस्य। एवं तर्हि अन्यतरस्याङ्ग्रहणसामर्थ्यात् पञ्चमी भविष्यति' इति भाष्यदर्शनेन समुच्चयार्थत्ववर्णनात्। निपातानामनेकार्थत्वात् समुच्चयार्थत्वञ्च नानुपपन्नम्। न चैवं पञ्चमीद्वितीये अनुवर्त्तेते इति मूले यदभिहितं तदसङ्गतिरिति वाच्यम्। अनुवृत्त्यभिधानस्य तद्भाष्योत्तरभाष्यग्रन्थे नानुवृत्तिरप्यभिहितेत्यभिप्रायादिति न सन्दर्भविरोधः। एतेन इति–उक्तभाष्यविरोधेन। अन्यतरस्यामित्यस्य शब्दस्यैतदर्थकत्वे 'हृक्रोरन्यतरस्याम्' इत्यत्राप्ययमेवार्थो वाच्यः स चासङ्गतः। अभावस्य विधेयप्रतियोगिकस्य तत्रानुपस्थिततत्वेन तत्रान्यतरशब्देन भावस्याभावस्य च ग्रहणासम्भवात् तन्मते भाष्यान्तरविरोधोऽपीत्याह–विकल्पविषय इति। प्राचीनमतं दूषयन् स्वसिद्धान्तमाह–परे त्विति। विना वर्षमिति–'केनेमौ पातितौ द्रुमौ' इति शेषः। द्वितीयासमुच्चयो नोक्त इति–अन्यतरस्याङ्ग्रहणसामर्थ्यात् पञ्चमी भविष्यतीत्येवं हि भाष्ये उक्तम्। अनेन द्वितीयायाः समुच्चयकथनं दूषयित्वा अनुवृत्तिकथनमप्यसङ्गतमित्याह–पञ्चम्या अधिकारे इति। प्रागिति चेति–एवञ्च 'षष्ठ्यतसर्थ.' इति सूत्रे द्वितीयाया असम्बन्धवत् प्रकृतसूत्रेऽपि सम्बन्धो न भविष्यतीति ध्वनितम्। अत एव–प्रकृतसूत्रे तदसम्बन्धादेव। यद्यत्र द्वितीयासमुच्चयः स्यात्तदा करणे चेति सूत्रेऽपि पञ्चमीसमुच्चयार्थं प्रकृतान्यतरस्याङ्ग्रहणस्य सम्बन्धावश्यकत्वेन तत्रापि द्वितीयासमुच्चयः स्यादिति भावः।**

प्रकृतसूत्रद्वारा पृथक्, विना और नाना शब्दों के योग में विकल्प से तृतीया-विभक्ति का विधान होता है। **अन्यतरस्याङ्ग्रहणं समुच्चयार्थम्, पञ्चमीद्वितीये चानुवर्त्तेते**। प्रकृतशास्त्रोपदिष्ट 'अन्यतरस्याम्' पद पञ्चमी और द्वितीया दोनों का समुच्चायक है। 'अन्यतरस्याम्' पद को विकल्पार्थक स्वीकार करने पर एकपक्ष में तृतीया और अपरपक्ष में द्वितीया की सिद्धि होती है, पञ्चमी की नहीं, यतो हि प्रकृतसूत्र से पूर्व 'एनपा द्वितीया' सूत्र का उपदेश है। जब कि पृथक्, विना और नाना शब्दों के योग

में तृतीया, द्वितीया और पञ्चमी तीनों विभक्तियों का विधान अभीष्ट है। अत एव 'अन्यतरस्याम्' पद को समुच्चयार्थक स्वीकार करते हैं। प्रकृतशास्त्रोपदिष्ट 'अन्यतरस्याम्' पद को समुच्चयार्थक स्वीकार करने से 'अन्यतरस्य और आम् पदों का अङ्गीकार अर्थ है' कहनेवाला परास्त होता है। अन्यतरस्य और आम् पदों का अङ्गीकार अर्थ स्वीकार करने पर विकल्पार्थक 'अन्यतरस्याम्' पदोपदेशस्थल में अर्थासङ्गत्यापत्ति भी आती है।

'परे तु' से ग्रन्थकार अपने मत का उपस्थापन करते हुए कहते हैं, कि—प्रकृतशास्त्रोपदिष्ट 'अन्यतरस्याम्' पद समुच्चयार्थक नहीं है, अपितु विकल्पार्थक ही है। प्रकृतशास्त्र में 'अन्यतरस्याम्' पदोपदेश करने पर भी यदि तृतीयाविभक्ति का ही विधान होगा, तर्हि 'अन्यतरस्याम्' पदोपदेश व्यर्थ होता है। इसलिए 'अन्यतरस्याम्' पदोपदेशसामर्थ्य से पञ्चमीविभक्ति का भी विधान सिद्ध होता है। अथ च 'विना वातं विना वर्षम्' इत्यादिस्थल में 'ततोऽन्यत्रापि दृश्यते' कथनसामर्थ्य से यथा 'पुरुषाराधनमृते' प्रयोग में 'ऋते' पद के योग में द्वितीयाविभक्ति का विधान होता है, तथैव पृथक्, विना और नाना पदों के योग में भी 'ततोऽन्यत्रापि दृश्यते' वचनबल से ही द्वितीया का विधान हो जायेगा। इस प्रकार 'अन्यतरस्याम्' पद को विकल्पार्थक स्वीकार करने पर भी पृथक्, विना और नाना पदों के योग में तृतीया, पञ्चमी और द्वितीया तीनों विभक्तियों का विधान संभव है। अत एव 'अन्यतरस्याम्' पद को समुच्चयार्थक स्वीकार करना व्यर्थ है। प्रकृतशास्त्रोपदिष्ट 'अन्यतरस्याम्' पद का समुच्चय अर्थ नहीं है, इसीलिए भाष्य में 'अन्यतरस्याम्' पद से द्वितीया का समुच्चय नहीं किया है। 'अपादाने पञ्चमी' शास्त्र से 'पञ्चमी' का अधिकार चलता है। इसी प्रसङ्ग में भाष्यकार ने 'पञ्चमी के अधिकार में विहित द्वितीया और षष्ठी के विषय में प्राप्त पञ्चमी का प्रतिषेध करना चाहिए' इत्यर्थक 'पञ्चम्या अधिकारे द्वितीयाषष्ठीविषये प्रतिषेधो वक्तव्यः' वचनोपदेश किया। यथा—'दक्षिणेन ग्रामम्' प्रयोग में 'एनपा द्वितीया' (पा.सू. २.३.३१) सूत्र की विषयता है। अथ च 'दक्षिणतो ग्रामस्य' प्रयोग में 'षष्ठ्यतसर्थप्रत्ययेन' (पा.सू. २.३.३०) सूत्र की विषयता है। दोनों ही स्थलों में दिग्वाचक शब्द का योग होने से 'अन्यारादितरर्त्ते.' सूत्रद्वारा पञ्चमी प्राप्त है।

भाष्योपदिष्ट 'पञ्चम्या अधिकारे द्वितीयाषष्ठीविषये प्रतिषेधो वक्तव्यः' वचन से सिद्ध होता है कि 'एनपा द्वितीया' शास्त्र का उपदेश 'षष्ठ्यतसर्थप्रत्ययेन'

सूत्रोपदेश से पूर्व है। 'षष्ठ्यतसर्थप्रत्ययेन' शास्त्र से 'एपना द्वितीया' का पूर्व में उपदेश है, अथ च 'पृथग्विनानानाभिस्तृतीयान्यतरस्याम्' शास्त्र का 'षष्ठ्यतसर्थ.' सूत्र के बाद में उपदेश है, अर्थात् 'पृथग्विनानाना.' सूत्र से अत्यधिक पूर्व में 'एनपा द्वितीया' शास्त्र का उपदेश सिद्ध होता है। इसलिए 'अन्यतरस्याम्' पद से व्यवहित द्वितीया का समुच्चय सर्वथा असंभव है। 'एनपा द्वितीया' शास्त्र 'षष्ठ्यतसर्थप्रत्ययेन' शास्त्र से पूर्व में समुपदिष्ट है, इसमें 'द्वितीयाषष्ठीविषये' यह भाष्योक्ति ही प्रमाण है। यदि षष्ठीविधायक शास्त्र के अनन्तर 'एनपा द्वितीया' शास्त्र का उपदेश होता, तर्हि सौत्रक्रमानुरोध से एवं 'अल्पाच्तरम्' इस न्याय के आधार पर भाष्यकार को षष्ठीशब्द का पूर्वप्रयोग करके षष्ठीद्वितीयाविषये कहना चाहिए था। इस प्रकार 'द्वितीयाषष्ठीविषये' यह भाष्योक्ति ही प्रमाण है कि 'एनपा द्वितीया' का 'षष्ठ्यतसर्थ.' सूत्र के पूर्व में उपदेश है।

'पृथग्विनानानाभिस्तृतीयान्यतरस्याम्' शास्त्रोपदिष्ट 'अन्यतरस्याम्' पद समुच्चयार्थक नहीं है, इसीलिए 'करणे च स्तोका.' (पा.सू. २.३.३३) सूत्र में चकारोपदेश से द्वितीया का समुच्चय नहीं हुआ। यदि 'पृथग्विनानाना.' शास्त्र में द्वितीया का समुच्चय होता, तर्हि 'पृथग्विनानाना.' शास्त्र के अव्यवहितोत्तर 'करणे च स्तोकाल्प.' सूत्र में चकारबल से द्वितीया का समुच्चय अवश्यम्भावी था। इसलिए 'पृथग्विनानाना.' शास्त्रोपदिष्ट 'अन्यतरस्याम्' पद को समुच्चयार्थक न मानकर विकल्पार्थक ही स्वीकार करना चाहिए।

**करणे च स्तोकाल्पकृच्छ्रकतिपयस्याऽसत्त्ववचनस्य ।।२.३.३३।।**

**एभ्योऽद्रव्यवचनेभ्यः करणे तृतीयापञ्चम्यौ स्तः। स्तोकेन स्तोकाद्वा मुक्तः। द्रव्ये तु स्तोकेन विषेण हतः।।इति कौमुदी।।**

**शे.– करणे तृतीयायाः सिद्धत्वेन पक्षे पञ्चम्यर्थं वचनमिदम्। चकारः 'तृतीयान्यतरस्याम्' (पा.सू. २.३.३२) इत्यनुकर्षणार्थः। षष्ठी 'गापोष्टक्' (पा.सू. ३.२.८) इतिवत्। अद्रव्येति–द्रव्यभिन्नवचनेभ्य इत्यर्थः। द्रव्यपदेनात्र सर्वनामपरामर्शयोग्यं लिङ्गनिरूपितविशेष्यं वा। स्तोकशब्दो यद्धर्मविशाद् द्रव्ये स्तोकव्यवहारस्तद्धर्मपरः, स च धर्मोऽल्पादिशब्दप्रवृत्तिनिमित्तमेव। शुक्लादिवच्चैते धर्मवचना अपि। करणत्वञ्च परम्परया। ईदृशार्थ एव च साधुत्वं सूत्रबलादिति स्पष्टम्**

**'अलुगुत्तरपदे' (पा.सू. ६.३.१) इत्यत्र कैयटे। करणे किम्? स्तोकं पचति। असत्त्वभूतफलसमानाधिकरणविशेषणत्वादत्र स्तोकशब्दस्या-सत्त्ववचनत्वमिति दिक्।**

भैरवी– **'करणे च स्तोका.' इति सूत्रे कतिपयस्येति षष्ठ्यनुपपत्तिः। प्रत्ययविधौ पञ्चम्या युक्तत्वादत आह–'षष्ठी गापोष्टगितिवदिति'। अद्रव्यवचनेभ्य इत्यस्य द्रव्यवचनभिन्नेभ्य इति नार्थः, स्तोकादिशब्दानां शुक्लादिशब्दवत् गुणे गुणिनि शक्ततया द्रव्यवचनभिन्नत्वाभावादत आह–'द्रव्यभिन्नवचनेभ्य इति'। एवञ्च यदा धर्ममात्रपराणां स्तोकादिशब्दानां प्रयोगस्तदोदाहरणम्। धर्मिपरत्वे प्रत्युदाहरणम्। ननु धर्मवचनत्वे करणत्वमनुपपन्नमत आह–'करणत्वञ्चेति'। ननु 'स्तोकं पचति' इत्यत्र धर्मिपरत्वात् कथमद्रव्यवचनत्वमत आह– 'असत्त्वभूतेति'। ननु पच्धात्वर्थफलं विक्लित्तिस्सा विक्लित्तिरित्येवं रीत्या सर्वनाम्ना परामृश्यत कथमसत्त्वमिति चेन्न? विक्लित्तिशब्देन यदा सोऽर्थ उच्यते तदा तस्य सर्वनाम्ना परामर्शेऽपि धातुप्रतिपाद्यत्वावस्थायां तस्य सर्वनाम्ना परामर्शाभावात्। विकल्पशब्दार्थविकल्पस्य वाशब्देन प्रतिपाद्यत्वावस्थायामसत्त्ववत्।**

प्रकृतसूत्रद्वारा असत्त्ववाचक स्तोक, अल्प, कृच्छ्र एवं कतिपय शब्दों से करण में तृतीया और पञ्चमी विभक्ति का विधान होता है। यद्यपि 'कर्तृकरणयोस्तृतीया' सूत्रद्वारा करण में तृतीयाविभक्ति का विधान संभव था, तथापि तृतीयाविभक्ति के साथ पञ्चमीविभक्ति का भी विधान करने के लिये प्रकृतशास्त्र का उपदेश किया गया है। 'करणे च स्तोकाल्प.' शास्त्रोपदिष्ट चकार से 'तृतीयान्यतरस्याम्' (पा.सू. २.३.३२) शास्त्रोक्त तृतीया पद का अनुकर्षण होता है।

प्र.— 'प्रत्ययः, परश्च' प्रत्यय प्रकृति से पर होता है, अर्थात् प्रकृति प्रत्यय की अवधि होती है। इसीलिए प्रत्ययविधायक शास्त्रों में प्रकृतिबोधक शब्दों का पञ्चम्यन्ततया उपदेश किया जाता है। इस प्रकार पञ्चमीविधायक 'स्तोकाल्प.' शास्त्र में भी 'कतिपयस्य असत्त्ववचनस्य' पद के स्थान पर 'कतिपयाद् असत्त्ववचनात्' पदोपदेश करना चाहिए था?

उ.— गाश्च पाश्च इति गापौ तयोः 'गापोः' पदघटित टक्प्रत्ययविधायक 'गापोष्टक्' शास्त्र में भी 'गापोः' पद के स्थान पर 'गापाभ्याम्' पदोपदेश करना

चाहिए था; किन्तु शास्त्रकार ने 'गापाभ्याम्' पदोपदेश न कर 'गापो:' पदोपदेश किया है। इस प्रकार 'गापो:' पदोपदेशसामर्थ्य से हम जानते हैं कि प्रत्ययविधायक शास्त्र में भी क्वचित् प्रकृतिबोधक शब्दों का षष्ठ्यन्ततया उपदेश होता है। इसीलिए 'कतिपयाद् असत्त्ववचनात्' न कहकर 'कतिपयस्यासत्त्ववचनस्य' पदोपदेश किया है।

**अद्रव्येति**—अर्थात् जो द्रव्यवाचक न हो। सर्वनामद्वारा जिसका ज्ञान होता है, अथवा जो लिङ्गान्वयी हो, उसको द्रव्य कहते हैं। जिस धर्म के आवेश से द्रव्य में स्तोकशब्द का व्यवहार होता है, वहाँ पर स्तोकशब्द का तद्धर्म अर्थ होता है। यथा 'स्तोकान्मुक्त:' स्थल में स्तोकशब्द अल्पत्वधर्म को कहता है, अत एव प्रकृतस्थल में 'स्तोकशब्द' अल्पशब्द-प्रवृत्तिनिमित्तक कहलाता है। शुक्लशब्द को धर्मिपरक स्वीकार करने पर यथा 'शुक्लो घट:' वाक्यघटक शुक्लशब्द का घट अर्थ होता है, अथ च धर्मपरक स्वीकार करने पर शुक्लशब्द शुक्लगुण को कहता है, तथैव 'स्तोकेन विषेण हत:' स्थल में स्तोकशब्द धर्मिपरक है, अथ च 'स्तोकान्मुक्त:' स्थल में स्तोकशब्द धर्मपरक है, अर्थात् स्तोकादि शब्द धर्मिपरक भी होते हैं और धर्मपरक भी।

प्र.— गुण में करणता नहीं रहती है, अत एव धर्मपरक स्तोकादि शब्दों से प्रकृतसूत्रद्वारा करण में तृतीया और पञ्चमी का विधान कैसे होता है?

उ.— यद्यपि गुण साक्षात् करण नहीं होते हैं, द्रव्य में ही करणता रहती है; किन्तु गुण का द्रव्य में अन्वय होने से द्रव्यनिष्ठ करणता परम्परया गुण में भी आती है। इसलिए गुणवाचक स्तोकादिशब्द से करण में प्रकृतसूत्रद्वारा तृतीया और पञ्चमी का विधान होता है।

धर्मपरक शब्दों से करणता की प्रतीति होती है, अत एव 'स्तोकान्मुक्त:' इत्यादि प्रयोगों की साधुता का अन्वाख्यान 'अलुगुत्तरपदे' (पा.सू. ६.३.१) सूत्र के कैयटविवरण में 'धर्ममात्रवाचित्वे द्वित्वबहुत्वयोर्दुर्लभत्वात्' प्रसङ्ग में किया है।

करणे किम्—स्तोकं पचति। अर्थात् प्रकृतस्थल में स्तोक यद्यपि असत्त्ववाची है; किन्तु करणता स्तोकनिष्ठ नहीं है, अपितु कर्मता है, इसलिए 'स्तोकं पचति' स्थल में 'स्तोकाल्प.' सूत्रद्वारा तृतीया और पञ्चमी नहीं होती है।

प्र.— 'क्रियाविशेषणानां कर्मत्वं क्लीबत्वमेकत्वञ्च' नियमानुसार स्तोक लिङ्गान्वयी एवं वचनान्वयी होने से असत्त्ववाची कैसे कहलाता है। यतो हि 'लिङ्गसंख्यान्वितं सत्त्वम्' नियमानुसार सत्त्ववाची सिद्ध होता है?

उ.— स्तोक का विक्लित्त्यादि फल में अभेदसम्बन्ध से अन्वय होता है, अथ च धात्वर्थ फल में लिङ्ग और संख्या का अन्वय न होने से फल को असत्त्ववाची कहते हैं। अत एव धात्वर्थ विक्लित्त्यादि फल में अभेदान्वयी स्तोकादि भी असत्त्ववाची सिद्ध होते हैं। विक्लित्ति यद्यपि फल है, अथ च फलाश्रय की कर्मसंज्ञा होती है; किन्तु व्यपदेशिवद्भावेन फल भी फलाश्रय कहलाता है। फल भी व्यपदेशिवद्भाव से फलाश्रय सिद्ध होता है। इस प्रकार असत्त्ववाची फलाश्रय विक्लित्ति में अभेदसम्बन्ध से अन्वयी स्तोक भी असत्त्ववाची और कर्मसंज्ञक सिद्ध होता है। असत्त्ववाची होने पर भी कर्मसंज्ञक होने के कारण 'स्तोकं पचति' स्थल में प्रकृतसूत्र की प्रवृत्ति नहीं होती है।

## दूरान्तिकार्थेभ्यो द्वितीया च ।।२.३.३५।।

**एभ्यो द्वितीया स्याच्चात् पञ्चमीतृतीये। प्रातिपदिकार्थमात्रे च विधिरयम्। ग्रामस्य दूरं दूराद्-दूरेण वा। अन्तिकम् अन्तिकाद्-अन्तिकेन वा। असत्त्ववचनस्येत्यनुवृत्तेर्नेह–अदूरः पन्था।।इति कौमुदी।।**

**शे.– अत्र 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' (पा.सू. २.३.३४) इत्यतः समुच्चयार्थकान्यतरस्यां ग्रहणानुवृत्त्यैव अर्थाधिकारात् पञ्चम्याः सिद्धौ चकारो व्यवहिततृतीयासमुच्चयार्थो व्याख्यानात्, अत आह–चादित्यादि। प्रातिपदिकार्थमात्रे इति–व्याख्यानादिति भावः।**

**भैरवी– ननु व्यवहितसमुच्चयः प्रागेव निरस्त इति कथमत्र तृतीयार्थत्वकथनमत आह–व्याख्यानादिति। व्यवहितसमुच्चयार्थकचकारोपादानमूलकव्याख्यानादित्यर्थः। ननु 'दूरान्तिकार्थेभ्यो विहितानां द्वितीयातृतीयापञ्चमीनां प्रातिपदिकार्थमात्रे प्रवृत्तौ किम्मानमत आह–व्याख्यानादिति। 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' इति सूत्रानन्तरं 'तेभ्यो द्वितीया च' इत्येव सिद्धे 'दूरान्तिकार्थेभ्यः' इत्युपादानं तत्सूत्रविहितविभक्तीनां पूर्वविहिताभ्यो वैलक्षण्यसूचनाय। एवञ्च विशिष्यार्थानुक्तेरनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीत्यनेन न्यायेन ताः प्रातिपदिकार्थमात्रे भवन्तीति लभ्यत इति व्याख्यानादित्यर्थः।**

प्रकृतसूत्रद्वारा दूरार्थक एवं अन्तिकार्थक शब्दों से द्वितीया, तृतीया एवं पञ्चमी विभक्तियों का विधान होता है।

प्र.— प्रकृतशास्त्र में 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' शास्त्र से 'अन्यतरस्याम्' पद का अनुवर्त्तन होता है। अथ च अर्थाधिकार का समाश्रयण करने से प्रकृतसूत्र में भी 'अन्यतरस्याम्' पद का समुच्चय अर्थ स्वीकार करते हैं। इस प्रकार 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' शास्त्रद्वारा यथा षष्ठी एवं पञ्चमी विभक्तियों का विधान होता है, उसी प्रकार प्रकृतशास्त्रद्वारा भी द्वितीया और पञ्चमी दोनों विभक्तियों का विधान संभव है, चकारोपदेश व्यर्थ है।

उ.— 'पृथग्विनानाना.' शास्त्रविहित व्यवहिततृतीया का भी समुच्चय करने के लिये प्रकृतशास्त्र में चकारोपदेश किया है।

'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' शास्त्रोपदेश के अनन्तर 'द्वितीया च' एतावन्मात्रोपदेश करने से ही दूरार्थक एवं अन्तिकार्थक (समीपार्थक) शब्दों से द्वितीया, तृतीया एवं पञ्चमी का विधान संभव था, 'दूरान्तिकार्थेभ्यो द्वितीया च' इति पृथक् शास्त्रोपदेशसामर्थ्य से 'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति' इति न्यायानुसार प्रकृतशास्त्रद्वारा प्रातिपदिकार्थ में द्वितीया, तृतीया और पञ्चमी का विधान होता है। अत एव प्रकृतशास्त्रविहित द्वितीया, तृतीया और पञ्चमी से कर्मत्वेन, करणत्वेन एवं अपादानत्वेन बोध नहीं होता है।

**।।इति पञ्चमी-विभक्तिः।।**

# अथ षष्ठी-विभक्तिः

## षष्ठी शेषे।।२.३.५०।।

कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिसम्बन्धः शेषः, तत्र षष्ठी स्यात्। राज्ञः पुरुषः। कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येव। सतां गतम्। सर्पिषो जानीते। मातुः स्मरति। एधो दकस्योपस्कुरुते। भजे शम्भोश्चरणयोः। फलानां तृप्तः।।इति कौमुदी।।

शे.– शेष उक्तादन्यः। स च तत्तद्रूपेण स्वत्वादिः। सम्बन्धत्वेन रूपेण च। कारकविभक्तीनां क्रियाजनकत्वसमानाधिकरणकर्तृत्वादिशक्तिरूपेण बोधकत्वम्। तत्रापि तन्मूलके सम्बन्धे विवक्षिते षष्ठी। तदाह–कारकेति। स्वस्वामिभावादिरिति-स्वत्वस्वामित्वसमूहः सम्बन्ध इत्यन्यत्र विस्तरः। एवं सर्वत्र बोध्यम्। षष्ठ्यर्थस्य संसर्गविधयैव भानं कारकविभक्तिभ्योऽपि क्रियाकारकभावस्य संसर्गविधया भानमित्युक्तम्। सम्बन्धमात्रविवक्षायामिति–सम्बन्धत्वेन भाने इत्यर्थः। यद्वा क्रियाकारकभावमूलकसम्बन्धस्यैव विवक्षायां न तु तद्विवक्षायामित्यर्थः। कर्त्तुरपि तथा विवक्षा 'क्तस्य च वर्त्तमाने' (पा.सू. २.३.६७) इति सूत्रे 'छात्रस्य हसितम्' इत्यादौ भाष्ये स्पष्टा। संयोगसम्बन्धावच्छिन्नाधारस्य न तथा विवक्षा। अत एव 'घटवद् भूतलम्' इति प्रयोगसाधकं मतुप्सूत्रेऽस्मिन्निति चरितार्थम् इति तत्रैव भाष्ये स्पष्टम्। 'लोहितोष्णीषाः' इत्यादावपि सप्तम्यर्थे बहुव्रीहिर्बोध्यः। एधो दकस्येति–एधः कर्तृ कर्ता वा। दकस्योदकस्येत्यर्थः। एधःशब्दोऽदन्तः पुँल्लिङ्गः 'कारके' (पा.सू. १.४.२३) इति सूत्रे भाष्ये प्रयुक्तः। 'एधाः पक्ष्यन्ते' इति। सान्तः क्लीबोऽपि।

भैरवी– 'षष्ठी शेषे' इति सूत्रे यच्छेषपदं तत्र शेष इत्युच्यते, कः शेषः? कर्मादिभ्यो येऽन्येऽर्थाः स शेष इति भाष्ये उक्तम्, तन्मूलकव्याख्यानादाह–उक्तादन्य इति। तत्तद्रूपेण स्वत्वादिरूपेण। सम्बन्धत्वेन रूपेण चेति–वाच्य इति शेषः। राज्ञः पुरुषोऽस्तीति वाक्यजन्यशाब्दबोधानन्तरं राजस्वत्ववान्न वेति सन्देहो न भवतीति यथा विशेषरूपेण वाच्यता कल्प्यते, तथा राजसम्बन्धी न वेति च सन्देहानुत्पत्तेः। सामान्येन

सम्बन्धत्वेन रूपेण च वाच्यता कल्प्यते। तन्मूलक इति–कर्तृत्वनिरूपकक्रियात्वमथवा क्रियानिरूपितकर्तृत्वं मूलं यस्य तस्मिन् विवक्षिते इत्यर्थः। स्वस्वामिभावादिरित्यस्य स्वस्वामिनोर्भावः स्वत्वं स्वामित्वं वा सम्बन्धः षष्ठ्यर्थ इति प्रतीयते; परन्तु तस्य तत्तद्रूपेण षष्ठीवाच्यता न युक्ता, राज्ञः पुरुष इत्यत्र षष्ठ्यर्थः स्वामित्वञ्चेत् तस्य आधेयतासम्बन्धेन राजसम्बन्धित्वेऽपि पुरुषावृत्तित्वात्। स्वनिरूपितस्वत्वाश्रयसम्बन्धेन स्वामित्वं पुरुषेऽप्यस्तीति तु न तस्य वृत्त्यनियामकतया पुरुषे वृत्तितानियामकत्वस्य वक्तुमशक्यत्वात्। यदि तु स्वत्वं सम्बन्धः, तदा तस्य राजवृत्तित्वाभावेन सम्बन्धत्वं वक्तुमशक्यम्। स्वनिरूपितस्वस्वामित्वसम्बन्धेन राजवृत्तित्वन्तु वक्तुमशक्यम्। तस्य वृत्त्यनियामकत्वादत आह–स्वत्वस्वामित्वसमूह इति। अन्यत्र–मञ्जूषादौ। तत्र सम्बन्धो हि सम्बन्धिभ्यां भिन्न उभयसम्बन्धीत्युक्तम्। एवं सर्वत्र–अवयवावयविभावजन्यजनकभावादौ। संसर्गविधयैवेति–अत्रैवकारेण षष्ठ्यर्थस्य प्रकारत्वं व्यवच्छिद्यते। अत एव प्रकृतसूत्रभाष्ये राज्ञः पुरुष इत्यत्र राजा विशेषणं पुरुषो विशेष्य इत्युक्तम्, अन्यथा सम्बन्धं विशेष्यतया विशेषणतया वा ब्रूयात्। एतदेकवाक्यतया क्रियाकारकभाव-सम्बन्धस्य वाचिका द्वितीयेति भाष्याच्चाह–कारकविभक्तिभ्य इति। प्राचीनमतेनाह–सम्बन्धत्वेन भान इति। सम्बन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः। श्रुतायामश्रुतायां वा क्रियायामभिधीयत इति हर्युक्तेराह-यद्वेति। कारिकायां कारकपदं कर्मत्वादिशक्तिपरम्। तन्मूलकसम्बन्धश्च विशेषणविशेष्यभाव एव। इयञ्च षष्ठी विशेषणत्वेन विवक्षितादेव।

न च सम्बन्धे षष्ठी सम्बन्धश्च द्विष्ठ इति सा विशेषणत्वेन विवक्षितादेव भवति न विशेष्यत्वेन विवक्षितादित्यत्र किं विनिगमकमिति वाच्यम्, विशेषणवाचकस्य राज्ञ इत्यादेः पदस्य केवलस्य प्रयोगेऽपि विशेषणत्वं स्वसामान्यनिरूपितं प्रतीयते, तच्च विशेषणत्वं सम्बन्धसाकाङ्क्षमिति विशेषणादेव सा। तदुक्तं भाष्ये–षष्ठी शेषे इति चेद्विशेष्यस्य प्रतिषेधः। षष्ठी शेषे इति चेद्विशेष्यस्य प्रतिषेधो वक्तव्य इति। तत्र प्रथमाविधिः षष्ठीं प्रतिषिध्य प्रथमा विधेया। राज्ञः पुरुष इति। उक्तं पूर्वेण। किमुक्तन्न वा वाक्यार्थत्वादिति। यदत्राधिक्यं वाक्यार्थः सः। अत्र

कैयटः–राज्ञ इत्येतत्पदसन्निधाने पुरुषस्य सम्बन्धित्वं प्रतीयते नान्यथा। पुरुषेति प्रातिपदिकन्तु स्वार्थमात्रे वर्त्तत इति प्रथमा सिद्ध्यतीत्यर्थः। ततोऽग्रे भाष्ये शङ्कितम्–'कुतो नु खल्वेतत्पुरुषे यदाधिक्यं वाक्यार्थ इति न पुना राजनि यदाधिक्यं स वाक्यार्थः स्यात्। पुरुषपदसन्निधान एव राज्ञः सम्बन्धित्वावगमो नान्यथेति ततोऽपि प्रथमाप्रसङ्ग इति'। वाक्यार्थत्वञ्च पदान्तरसन्निधाने प्रतीयमानत्वं तच्चोभयत्राविशिष्टमिति पुरुषनिष्ठविशेष्यत्ववद्राजनिष्ठविशेषणत्वमपि वाक्यार्थ एव भविष्यतीति पुरुषपदादिव राजन्शब्दादपि प्रथमाप्रसङ्ग इति भावः। ततः समाधानं भाष्ये–'अन्तरेणापि पुरुषशब्दस्य प्रयोगं राजनि सोऽर्थो गम्यते'। अन्तरेणेति–राज्ञ इति केवलेऽपि पदे उच्चार्यमाणे सम्बन्धित्वमनियतप्रतियोगि गम्यते तस्माद्राजा परोपकारित्वेन विवक्षितो न स्वनिष्ठत्वेन। अत्र सम्बन्धित्वं विशेषणत्वरूपम्। अनियत-प्रतियोगीत्यस्यानियतविशेष्यनिरूपितमित्यर्थः। अत एवोक्तं राजा परोपकारित्वेन विवक्षित इति। न स्वनिष्ठत्वेन। न स्वार्थनिरूपितविशेष्यतया इति। हरिणाप्युक्तम्–

> द्विष्ठोऽप्यसौ परार्थत्वाद् गुणेषु व्यतिरिच्यते।
> तत्राभिधीयमानश्च प्राधान्येऽप्युपयुज्यते।।इति।

असौ–सम्बन्धः। परार्थत्वात्–परं विशेषणत्वमर्थः प्रयोजनं यस्य तत्त्वाद्विशेषणतानियामकत्वादित्यर्थः। भेदे सति विशेषणत्वासम्भवेन तदाकाङ्क्षितत्वात्तत्र सम्बन्धो व्यतिरिच्यते, उद्भूततया प्रतीयत इति तत्रैव षष्ठीत्यर्थः। विशेष्यस्य स्वनिष्ठत्वादेव न विशेष्यतानियामक-सम्बन्धाकाङ्क्षेति भावः। प्रधानेऽप्युपयुज्यते। तस्य द्विष्ठत्व-स्वभावत्वाद्राजादिनिरूपितविशेष्यताया राजादिपदसन्निधाने प्रतीयमानाया उपकारको भवतीत्यर्थः। ननु 'कर्मादीनामपि' इति ग्रन्थेन यथा तेषां सम्बन्धत्वेन विवक्षा प्रतिपादिता तथा कर्त्तुर्न प्रदर्शितेति कर्त्तुस्तथा विवक्षा न भवतीति कश्चिद् भ्राम्येत्, अतः कर्त्तुरपि तथा विवक्षामाह–कर्त्तुरपीति। कर्मादीनामित्यनेन संयोगसम्बन्धावच्छिन्नाधारस्यापि तथा विवक्षेति भ्रमनिवारणायाह–संयोगसम्बन्धेति। तेन 'भूतलस्य घटः' इति न प्रयोगः। तत्र भाष्यमपि साधकमाह–अत एवेति। ननु 'तर्हि लोहितोष्णीषा' इत्यादौ षष्ठ्यर्थे बहुव्रीहिर्न स्यादत आह–लोहित इति।

**यदुक्तमेधः कर्तृ कर्त्ता वा तदुपपत्तये आह–एधःशब्द इति। उदकस्येत्यर्थ इति–'भुवनममृतञ्जीवनीयन्दकञ्च' इति हलायुधकोशोऽत्र मानम्।**

**उक्तादन्यः शेषः**—अर्थात् कर्तृत्व, कर्मत्व, करणत्व, सम्प्रदानत्व, अपादानत्व और अधिकरणत्व के बोधक छः कारकों से तथा प्रातिपदिकार्थ से अन्य अर्थ को शेष कहते हैं। 'प्रथमा भी कारकविभक्ति है' के विचारप्रसङ्ग में भाष्योक्ति को आधार मानकर कुछ वैयाकरण प्रातिपदिकार्थ में विहित प्रथमा को कारकविभक्ति स्वीकार करते हैं, अन्य वैयाकरण प्रातिपदिकार्थविहित प्रथमा को कारकविभक्ति नहीं मानते हैं। अत एव कौमुदीवृत्ति में शेषपद का अर्थ करते समय कारक के साथ प्रातिपदिकार्थ की अलग से गणना की है। उस स्वत्वादिसम्बन्ध को शेष कहते हैं, जिसका स्वत्वत्वादि रूप से भान होता है, यथा 'राज्ञः पुरुषः'। अथवा सम्बन्धसामान्यतया जिसका भान होता है, यथा 'सतां गतम्' अर्थात् सत्सम्बन्धिगमन। प्रथमादि कारकविभक्तियों से क्रियाजनकत्व-समानाधिकरणकर्तृत्वादि रूप से भान होता है, यथा 'देवदत्तो गच्छति' वाक्यबोधित देवदत्त में क्रियाजनकत्व भी रहता है और कर्तृत्व भी। क्रियाजनकत्वसमानाधिकरणकारक की सम्बन्धतया विवक्षा करने पर षष्ठीविभक्ति होती है, अत एव 'सद्भिः गतम्' वाक्यबोधित 'सत्' कर्त्ता की सम्बन्धत्वेन विवक्षा करने पर षष्ठी होकर 'सतां गतम्' वाक्योपपत्ति होती है। प्रकृतप्रसङ्ग में समागत स्वत्वसम्बन्ध का तात्पर्य स्वत्वमात्र न होकर 'स्वत्वस्वामित्वसमूहरूप सम्बन्ध स्वीकार किया जाता है, यतो हि सम्बन्ध द्विष्ठ होता है। इसी प्रकार अन्य सम्बन्धों का भी समूहरूप से ही आश्रयण होता है।

प्र.— षष्ठीविभक्ति का सम्बन्ध अर्थ स्वीकार करने पर 'सम्बन्ध' पदार्थ कहलाता है। पदार्थ का प्रकारविधया अर्थात् विशेषणतया अथवा विशेष्यविधया अन्वय होकर शाब्दबोध होता है, अत एव 'राज्ञः पुरुषः' वाक्य से 'राजनिरूपितो यः स्वस्वामिभावरूपः सम्बन्धः....' रूप में भान होना चाहिए?

उ.— विभक्त्यर्थ को वैयाकरण पदार्थ नहीं मानते हैं, अपितु विभक्त्यर्थ का संसर्गविधया भान स्वीकार करते हैं, इसीलिए कारक में भी जिन विभक्तियों का विधान होता है, उनसे भी क्रियाकारकभावसम्बन्धविधया ही भान

होता है। इस प्रकार षष्ठ्युपस्थाप्य सम्बन्ध का प्रकारतया अथवा विशेष्यतया भान न होकर सम्बन्धविधया भान होता है।

**'कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येव'** कर्मादि कारकों की भी सम्बन्धिविधया विवक्षा करने पर षष्ठीविभक्ति ही होती है, यथा—सतां गतम्। अथ च कर्मादि कारक की सम्बन्धितया विवक्षा में समागत षष्ठी से समुपस्थाप्य क्रियाकारकभाव का भी सम्बन्धविधया ही भान होता है। अत एव क्रियाकारकभाव के साथ-साथ सत्सम्बन्धितया विवक्षा करने पर ही 'सतां गतम्' प्रयोगोपपत्ति होती है। अर्थात् क्रियाकारकभावमात्र की विवक्षा करने पर षष्ठीविभक्ति नहीं होती है, कर्त्ता की भी सम्बन्धितया विवक्षा होती है। अत एव 'छात्रैः हसितम्' स्थल में कर्त्ता की सम्बन्धितया विवक्षा करने पर षष्ठी होकर 'छात्राणां हसितम्' प्रयोगोपपत्ति होती है, यह कथन 'क्तस्य च वर्त्तमाने' (पा.सू. २.३.६७) सूत्र के भाष्य में स्पष्ट है।

प्र.— कारक की सम्बन्धितया विवक्षा करने पर षष्ठीविभक्ति होती है, अत एव 'घटाः सन्ति अस्मिन्' इत्याकारक वाग्विवक्षा में भी 'अस्मिन्' इत्यधिकरणकारक की सम्बन्धितया विवक्षा करने पर 'घटाः सन्ति अस्य' वाक्योपदेश भी कर सकते हैं?

उ.— 'संयोगसम्बन्धविशिष्ट आधाराधेयस्थल में आधार की सम्बन्धविधया विवक्षा नहीं होती है' प्रकृतज्ञापन में 'तदस्यास्त्यस्मिन्निति.' शास्त्रघटक 'अस्य' पद से पृथक् 'अस्मिन्निति, पदोपदेश ही प्रमाण है। अन्यथा अधिकरण की सम्बन्धत्वेन विवक्षा करने पर षष्ठीविभक्ति होने से 'अस्य' पदोपदेशमात्र से ही कार्य संभव है, अत एव अस्मिन्निति पदोपदेश व्यर्थीभूय ज्ञापन करता है कि—'संयोगसम्बन्धविशिष्टाधार की सम्बन्धतया विवक्षा नहीं होती है'। यह बात 'घटाः सन्ति अस्मिन्' विग्रहपूर्वक 'घटवत्' प्रयोगसाधनप्रसङ्ग में 'तदस्यास्त्यस्मिन्निति.' सूत्र के भाष्य में स्पष्ट है।

प्र.— संयोगसम्बन्धविशिष्टाधार की सम्बन्धतया विवक्षा स्वीकार करने पर 'लोहित हैं उष्णीष (पगड़ी) जिनके ऐसे विद्वान् विचरण कर रहे हैं' इत्यर्थवाग्विवक्षा में प्रयुक्त 'लोहितोष्णीषाः प्रचरन्ति' वाक्यघटक 'लोहितोष्णीषाः' प्रयोगोपपत्त्यर्थ 'लोहिता उष्णीषा येषान्ते' विग्रह असंभव है? यतो हि 'जिनके शिरोभाग में लोहित उष्णीष हैं' स्थल में संयोगसम्बन्धविशिष्ट

ही आधाराधेयभाव है। अर्थात् प्रकृतस्थल में संयोगसम्बन्धविशिष्टाधार की सम्बन्धतया विवक्षापूर्वक ही 'लोहिता उष्णीषा येषान्ते' विग्रहघटक 'येषाम्' पद में षष्ठी का विधान हुआ है?

उ.— प्रकृतस्थल में लोहिता उष्णीषा यत्रेति सप्तम्यन्ततया विग्रहपूर्वक ही 'लोहितोष्णीषा:' प्रयोगोपपत्ति समझनी चाहिए, षष्ठ्यन्ततया विग्रह असंगत है।

'एधो दकस्योपस्कुरुते' काष्ठ को जल में डाल देने से जलगत शीतलता काष्ठ में आ जाती है। अर्थात् काष्ठ जल के गुण अपने में आधान करता है। 'एध: कर्तृ कर्त्ता वा' एधस् शब्द की नपुंसकलिङ्ग में वृत्तिता होने से कर्तृपदोपदेश किया है। अथ च अदन्त एधशब्द की पुल्लिङ्गवृत्तिता होने से 'कर्त्ता' पदोपदेश किया है। अदन्त एधशब्द 'कारके' (पा.सू. १.४.२३) सूत्र के भाष्य में समुपदिष्ट है। यथा—'एधा: पक्ष्यन्ते'। 'एधान् पक्ष्यति' स्थल में कर्म की कर्तृत्वेन विवक्षा करने पर 'एधा: पक्ष्यन्ते' प्रयोगोपपत्ति होती है।

## षष्ठी हेतुप्रयोगे ।।२.३.२६।।

**हेतुशब्दप्रयोगे हेतौ द्योत्ये षष्ठी स्यात्।अन्नस्य हेतोर्वसति।।इति कौमुदी।।**

**शे.– हेतौ द्योत्ये इति–हेताविति वर्त्तते। हेतुहेतुमद्भावेनेतरान्वये इत्यर्थ:। तेन 'अन्नं हेतुं पश्य' इत्यादौ न। षष्ठीति हेतुवाचकादित्यर्थ:।**

**भैरवी– यदुक्तं मूले हेतौ द्योत्य इति तत्फलमाह–हेतुहेतुमद्भावेनेति। हेतुपदार्थस्य स्वनिष्ठहेतुत्वनिरूपितहेतुमत्त्वसम्बन्धेनेतरान्वय इत्यर्थ:। हेतुवाचकादिति– हेतुवाचकत्वञ्च विशेषणविशेष्ययोरुभयोरपि वाचकयोरिति हेतुशब्दादन्नशब्दाच्च षष्ठीत्यर्थ:। षष्ठी हेतोरिति वक्तव्ये प्रयोगग्रहणाद् यत्र हेतुबोधनाय हेतुशब्दस्य प्रयोगस्तत्र हेतुवाचकसामान्यात्तस्मिन् वाक्ये षष्ठी यथा स्यादिति। अत एवान्नस्य शोभनस्य हेतोर्वसतीति भवतीति दिक्।**

प्रकृतसूत्रद्वारा हेतुशब्द का प्रयोग होने पर, अथ च हेतुहेतुमद्भाव के गम्यमान होने पर, हेतुवाचक शब्द से षष्ठीविभक्ति का विधान होता है, यथा—'अन्नस्य हेतोर्वसति' अर्थात् अन्नहेतुक वास। हेतुरस्यास्तीति

हेतुमत्, अर्थात् कार्यहेतु अर्थात् कारण। प्रकृतस्थल में 'वास' कार्य है और वास का कारण अन्न है। अत एव विशेषहेतुवाचक अन्नशब्द से और सामान्यतया हेतुबोधक हेतुशब्द से षष्ठीविभक्ति होकर 'अन्नस्य हेतोर्वसति' प्रयोगोपपत्ति होती है। प्रकृतसूत्रद्वारा जिससे षष्ठी विभक्ति का विधान है, उसका हेतुहेतुमद्भाव से अन्यत्र अन्वय अपेक्षित है। हेतुहेतुमद्भाव से अन्वय होने पर ही प्रकृतसूत्रद्वारा षष्ठी का विधान होता है, इसलिए 'अन्नं हेतुं पश्य' अर्थात् अन्न जो हेतु है, उसको देखो। अन्न किसका कारण है? इसके कार्य का परिज्ञान न होने से हेतुहेतुमद्भाव की प्रकृतस्थल में उपपत्ति नहीं होती है। अत एव 'अन्नं हेतुं पश्य' स्थल में प्रकृतशास्त्रद्वारा षष्ठीविभक्ति का विधान भी नहीं होता है।

**सर्वनाम्नस्तृतीया च ।।२.३.२७।।**

**सर्वनाम्नो हेतुशब्दस्य च प्रयोगे हेतौ द्योत्ये तृतीया स्यात् षष्ठी च। केन हेतुना वसति। कस्य हेतोः। निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम्। किं निमित्तं वसति। केन निमित्तेन। कस्मै निमित्तायेत्यादि। एवं 'किं कारणं' को हेतुः, किं प्रयोजनमित्यादि। प्रायग्रहणादसर्वनाम्नः प्रथमाद्वितीये न स्तः। ज्ञानेन निमित्तेन हरिः सेव्यः। ज्ञानाय निमित्तायेत्यादि।।इति कौमुदी।।**

**शे.–** **निमित्तेत्यादि–निमित्तादिप्रयोगे तेभ्यः, तत्समानाधिकरणशब्देभ्यश्चेत्यर्थः। किं निमित्तमिति। प्रथमान्तं द्वितीयान्तञ्च। प्रायग्रहणादिति–एवञ्च 'षष्ठी हेतुप्रयोगे' (पा.सू. २.३.२६) 'सर्वनाम्नस्तृतीया च' (पा.सू. २.३.२७) इति सूत्रे व्यर्थे इति बोध्यम्।**

**भैरवी–** **सर्वनाम्नस्तृतीया च। अत्र सर्वनाम्न इति प्रयोगापेक्षया षष्ठी। पञ्चम्यां तु हेतुशब्दात् पञ्चमी तृतीये न स्याताम्। निमित्तादिप्रयोगे तेभ्य इति– अत्राप्यर्थे प्रयोगशब्दोपादानमेव मानम्। सूत्रे व्यर्थे इति– अनेनैव सूत्रद्वयसाध्यप्रयोगस्य सिद्धेः।**

'निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम्' वार्तिकद्वारा निमित्तपर्यायवाची हेतु-कारणादि शब्दों से एवं निमित्तादिसामानाधिकरण्यबोधक शब्दों से प्रायः सकल विभक्तियों का विधान होता है, यथा—किं निमित्तम्, केन निमित्तेन, कस्मै निमित्ताय इत्यादि। 'किं निमित्तम्' उदाहरण प्रथमान्त अथवा द्वितीयान्त दोनों ही हो सकता है। प्रायशब्दोपदेशसामर्थ्य से

निमित्तादिसामानाधिकरण्यबोधक असर्वनाम शब्दों से सकल विभक्तियों का विधान नहीं होता है।

हेतुवाचक सर्वनाम से 'सर्वनाम्नस्तृतीया च' (पा.सू. २.३.२७) शास्त्रद्वारा तृतीया और षष्ठी का विधान होता है। अथ च हेत्वर्थ गम्यमान होने पर सामान्य और विशेष हेतु के बोधक शब्दों से 'षष्ठी हेतुप्रयोगे' (पा.सू. २.३.२७) शास्त्रद्वारा षष्ठी का विधान होता है। इन दोनों ही शास्त्रों का उपदेश व्यर्थ है, यतो हि निमित्तवाचक से एवं निमित्त में अभेदसम्बन्ध से अन्वित शब्दों से 'निमित्तपर्यायप्रयोगे.' वार्तिकद्वारा ही समस्त विभक्तियों का विधान संभव है।

## षष्ठ्यतसर्थप्रत्ययेन ।।२.३.३०।।

**एतद्योगे षष्ठी स्यात्। 'दिक्छब्द-५९५' इति पञ्चम्या अपवादः। ग्रामस्य दक्षिणतः। पुरः पुरस्तात्। उपरि उपरिष्टात्।।इति कौमुदी।।**

**शे.– दिक्शब्दात् पञ्चम्यां प्राप्तायामिदम्। 'ततः पश्चात्' इत्यत्र तु सार्वविभक्तिकः षष्ठ्यन्तात्तसिः।**

प्रकृतसूत्रद्वारा अतसुच्प्रत्यय का दिग्देशकाल रूप जो अर्थ, उसी अर्थ में होनेवाला जो प्रत्यय तादृशप्रत्ययवान् शब्द के योग में षष्ठीविभक्ति का विधान होता है। यथा—'ग्रामस्य दक्षिणत:' इत्यादि।

प्र.— 'ततः पश्चात्' वाक्यघटक पश्चात् पद अतसर्थप्रत्ययान्त है, अत एव 'षष्ठ्यतसर्थप्रत्ययेन' सूत्रद्वारा षष्ठी होने से 'तस्य पश्चात्' प्रयोगोपपत्ति होती है। अथ च तसिल्प्रत्यय तो पञ्चम्यन्त से होता है, इत्थञ्च 'ततः पश्चात्' स्थल में तसिल्प्रत्यय का विधान कैसे होता है?

उ.— 'ततः पश्चात्' स्थल में 'पञ्चम्यास्तसिल्' न होकर सार्वविभक्तिक तसिप्रत्यय है।

## एनपा द्वितीया।।२.३.३१।।

**एनबन्तेन योगे द्वितीया स्यात्। एनपेति योगविभागात् षष्ठ्यपि। दक्षिणेन ग्रामं ग्रामस्य वा। एवमुत्तरेण।।इति कौमुदी।।**

**शे.– षष्ठ्यपि इति–स्पष्टञ्चेदं वृत्तौ। भाष्ये तु न दृश्यते। विपरीतं 'षष्ठ्यतसर्थ' इति सूत्रात्पूर्वम् 'एनपा' (पा.सू. २.३.३१) इत्यस्य पाठ इति लभ्यत इति 'पृथग्विनानाना.' इति सूत्रे उक्तम्।**

**भैरवी–** **मूलादिदूषणायाह–भाष्ये इति। नन्वप्रतिषिद्धमनुमतं भवतीति न्यायेनोक्तं भाष्यकारसम्मतमेवेत्यत आह–विपरीतमिति। स्त्र्यधिकारात् परेणेत्यादौ यथायथं शास्त्रेणेत्यादिविशेष्यानुरोधात् तृतीया।**

प्रकृतशास्त्रद्वारा एनप्प्रत्ययान्त के योग में द्वितीयाविभक्ति का विधान होता है, यथा—दक्षिणेन ग्रामं ग्रामस्य वा।

प्र.— 'दक्षिणेन ग्रामं ग्रामस्य वा' स्थल में 'दक्षिणेन' इति एनप्प्रत्ययान्त का योग होने से द्वितीया ही होनी चाहिए, पाक्षिक षष्ठी का विधान कैसे?

उ.— 'एनपा द्वितीया' सूत्र का योगविभागपूर्वक 'एनपा' इस योग में 'षष्ठ्यतसर्थ.' सूत्र से षष्ठी का अनुवर्त्तनपूर्वक प्रकृतयोगविभागद्वारा 'एनप्प्रत्ययान्त के योग में षष्ठीविभक्ति का भी विधान होता है'। अथ च 'द्वितीया' इस द्वितीययोग में 'एनपा' पदानुवर्त्तनपूर्वक 'द्वितीया' योग द्वारा एनप्प्रत्ययान्त के योग में द्वितीया का विधान होता है। इस प्रकार योगविभाग का समाश्रयण करने से एनबन्त के योग में षष्ठीविभक्ति का विधान भी उपपन्न होता है। यह काशिकाकार का मत है; किन्तु भाष्यकार 'षष्ठ्यतसर्थ.' शास्त्र से पूर्व 'एनपा द्वितीया' शास्त्र का उपदेश स्वीकार करते हैं। इसलिए काशिकाकार का मत भाष्यविरुद्ध होने से हेय है।

**दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् ।।२.३.४।।**

**एतैर्योगे षष्ठी स्यात् पञ्चमी च। दूरं निकटं ग्रामस्य ग्रामाद् वा।।इति कौमुदी।।**

**शे.–** **यदपेक्षं दूरत्वादिकं ततः षष्ठीत्यर्थः। पञ्चमी चेति तस्या एव समुच्चयः, न द्वितीयातृतीययोरपीति भावः।**

**भैरवी–** **प्रत्यासत्तिन्यायेनाह–यदपेक्षमिति। तस्या एवेति–पञ्चम्या एवेत्यर्थः। शिष्टकृतं व्याख्यानमत्र शरणम्।**

प्रकृतसूत्रद्वारा दूरार्थक और अन्तिकार्थक शब्दों के योग में जिसकी अपेक्षा से दूरी या समीपता का बोध होता है, उससे षष्ठी और पञ्चमी विभक्तियों का विधान होता है। यथा—'दूरं निकटं ग्रामस्य ग्रामाद् वा' स्थल में ग्राम से दूरी या निकटता की प्रतीति होती है, अत एव ग्रामशब्द से प्रकृतसूत्रद्वारा षष्ठी और पञ्चमी विभक्ति का विधान होता है। प्रकृतसूत्र

में 'अन्यतरस्याम्' पदोपदेशसामर्थ्य से पञ्चमी का ही समुच्चय होता है, द्वितीया-तृतीया का नहीं। अन्यथा सन्निहित तृतीया और द्वितीया का समुच्चय चकारोपदेश से ही संभव था।

**ज्ञोऽविदर्थस्य करणे ।।२.३.३१।।**

**जानातेरज्ञानार्थस्य करणे शेषत्वेन विवक्षिते षष्ठी स्यात्। सर्पिषो ज्ञानम्।।इति कौमुदी।।**

**शे.– अत्र सूत्रेऽविदर्थस्येति छेदो व्याख्यानात्। सर्पिषो ज्ञानमिति–जानातेः प्रवृत्तिरर्थः सर्पिःसम्बन्धिनी प्रवृत्तिरित्यर्थः।**

**भैरवी– जानातेर्विदर्थकत्वस्य नियततया विशेषणस्यैव वैयर्थ्यापत्तिरतो विशेषणसामर्थ्यमूलकाद् व्याख्यानादित्यर्थः। जानातेरविदर्थत्वं स्पष्टयति– जानातेरिति।**

अज्ञानार्थक ज्ञाधात्वर्थक्रियानिरूपित करण की शेषत्वविवक्षा में प्रकृतसूत्रद्वारा षष्ठीविभक्ति का विधान होता है। प्रकृतसूत्र का 'ज्ञः + अविदर्थस्य' रूप से पदच्छेद करते हैं, न कि 'ज्ञः + विदर्थस्य' रूप में। यतो हि ज्ञानार्थक 'ज्ञा' धातु का ग्रहण अभीष्ट होने पर लाघवतया 'ज्ञः करणे' शास्त्रोपदेश करने से ही ज्ञाधातु के नियत ज्ञानरूप अर्थ का ग्रहण संभव था, तथा सति विदर्थस्य पदोपदेश करने की भी आवश्यकता नहीं होती। अत एव 'अविदर्थस्य' पदच्छेद स्वीकार करते हैं।

'सर्पिषो ज्ञानम्' अर्थात् सर्पिःसम्बन्धिनी प्रवृत्ति। यथा—गोबर्द्धनमठ में ब्रह्मभोज का आयोजन था। आमन्त्रणपत्रिका लेकर ही द्वारपाल व्यक्तियों का प्रवेश करा रहा था। ब्रह्मभोज में भोजन के साथ-साथ वस्त्र, दक्षिणा कुल मिलाकर सहस्राधिक रूपये की प्राप्ति का अवसर था। बुद्धिमान् ब्राह्मणदेव के पास आमन्त्रणपत्रिका तो थी नहीं, अत एव एक सौ रूपये का ढाई किलो (२ $\frac{१}{२}$ कि.ग्रा.) घी खरीद लिया और द्वार के पहले से ही कोलाहल करना प्रारम्भ कर दिया कि—'हटो-हटो पूड़ी जलती है, घी की आवश्यकता है, घी ले जाने दो'। द्वार पर विराजमान द्वारपाल ने समझ लिया कि 'भण्डार का कोई व्यक्ति है', अत एव परिचयपत्रिका की माँग नहीं की। ब्राह्मणदेव ने प्रवेश पाकर भोजन किया और दक्षिणा भी ली, साथ ही साथ अपना घी भी वापस ले आये। प्रकृतशास्त्रव्याख्या

में उपदिष्ट 'सर्पिषो ज्ञानम्' का तात्पर्य यही है, कि ब्राह्मणदेव की घी के द्वारा 'ब्रह्मभोज' में प्रवृत्ति हुई।

**अधीगर्थदयेशां कर्मणि।।२.३.५२।।**

**एषां कर्मणि शेषे षष्ठी स्यात्। मातुः स्मरणम्। सर्पिषो दयनमीशनं वा।।इति कौमुदी।।**

शे.– **अधीगर्थः स्मृतिः। कर्मणि किम्? मातुर्गुणस्मरणम्। करणे शेषत्वेन षष्ठ्यभावे समासो भवत्येव। अत एवात्र सूत्रे भाष्ये शेषे इति वर्त्तते इत्युक्तम्। 'प्रतिपदविधाना षष्ठी न समस्यते' इत्येतैः षष्ठीसमासनिषेधात्।**

भैरवी– **मातुर्गुणस्मरणम् इति–गुणेन स्मरणमित्यर्थः। इह गुणरूपस्य करणस्य शेषत्वविवक्षायामपि अनेन सूत्रेण षष्ठ्यभावे 'षष्ठी शेषे' इति सूत्रेण षष्ठ्यां समासो भवत्येव। एतत्सूत्रविषयेऽपि तेन सूत्रेण षष्ठ्यां सिद्धायामेतत्सूत्रं नियमार्थमिति हि प्रसिद्धो मार्गः। अत एवेति–नियमार्थत्वस्येष्टत्वादेव। एतेषां नियमार्थत्वे वार्त्तिकमपि साधकमित्याशयेनाह–प्रतिपदविधानेति। तद्वार्त्तिकमपि नापूर्वं किन्तु नियमसिद्धमेवेति भावः।**

अधिपूर्वक 'इक्'धात्वर्थ कर्म अर्थात् स्मृत्यर्थकधात्वर्थक्रियानिरूपित कर्म की अथ च 'दय' एवं 'ईश्' धात्वर्थक्रियानिरूपित कर्म की शेषत्वेन विवक्षा करने पर प्रकृतसूत्रद्वारा षष्ठीविभक्ति होती है। यथा 'मातरं स्मरणम्' स्थल में कर्म की शेषत्वेन विवक्षा करने पर 'मातुः स्मरणम्' प्रयोगोपपत्ति होती है। यद्यपि प्रकृतस्थल में 'कर्तृकर्मणोः कृति' अथवा 'षष्ठी शेषे' सूत्रद्वारा ही षष्ठीविभक्ति का विधान संभव है, इसी प्रकार प्रकृतसूत्र में 'शेषे' पद की अनुवृत्ति न करने पर भी कर्म में षष्ठीविभक्ति का विधान संभव है, अतः 'शेषे' पदानुवर्त्तनपूर्वक षष्ठी का विधान करना व्यर्थ है। व्यर्थ होकर ज्ञापन करता है, कि 'प्रकृतसूत्रद्वारा विहित षष्ठी का समास नहीं होता है', अत एव 'मातुः स्मरणम्' स्थल में समास नहीं हुआ। कर्मकरणादि का नामग्रहणपूर्वक विधीयमान षष्ठी को प्रतिपदविधाना षष्ठी कहते हैं। ऐसे आठ सूत्र हैं—'ज्ञोऽविदर्थस्य करणे' (पा.सू. २.३.५१); 'अधीगर्थदयेशां कर्मणि' (२.३.५२); 'कृञः प्रतियत्ने' (२.३.५३); 'रुजार्थानां भाववचनानामज्वरेः' (२.३.५४); 'आशिषि

नाथः' (२.३.५५); 'जासिनिप्रहणनाटक्राथपिषां हिंसायाम्' (२.३.५६); 'व्यवहृपणोः समर्थयोः' (२.३.५७) एवं 'कृत्वोऽर्थप्रयोगे कालेऽधिकरणे' (२.३.६४)।

**कर्मणि किम्**—मातुः गुणेन स्मरणम्। प्रकृतस्थल में करण की शेषत्वेन विवक्षा करने पर 'षष्ठी शेषे' सूत्रद्वारा षष्ठी का विधान करने से समास होकर 'गुणस्मरणम्' प्रयोगोपपत्ति होती है। जिस सूत्र में 'शेषे' पदानुवर्त्तन करके करणादि का नामग्रहणपूर्वक षष्ठी का विधान होता है, वही प्रतिपदविधाना षष्ठी कहलाती है। इसीलिए भाष्यकार ने प्रकृतसूत्र पर 'शेषे अत्र वर्त्तते' कहा। अत एव 'अधीगर्थ.' सूत्रविहितषष्ठी प्रतिपदविधाना षष्ठी कहलाती है, अतः समास भी नहीं होता है।

## कृञः प्रतियत्ने ।।२.३.५३।।

**कृञः कर्मणि शेषे षष्ठी स्याद् गुणाधाने। एधो दकस्योपस्करणम्। प्रतियत्नो गुणाधानम्।। इति कौमुदी।।**

**शे.– 'एधः' इति पृथक्पदं दकशब्द उदकवाची।**

प्रतियत्न अर्थात् गुण का आधान = गुणग्रहण अर्थ गम्यमान होने पर कृञ्धात्वर्थक्रियानिरूपित कर्म की शेषत्वविवक्षा में प्रकृतसूत्रद्वारा षष्ठीविभक्ति का विधान होता है, यथा एधो दकस्योपस्करणम्। जल के शैत्यगुण का एधस् ग्रहण करता है, अतः उपस्करणक्रियानिरूपित कर्म की शेषतया विवक्षा करने से षष्ठी होकर 'एधो दकस्योपस्करणम्' प्रयोगोपपत्ति होती है। प्रकृतस्थल में एधस् पृथक् पद है, अथ च उदकवाची दकशब्द का प्रयोग है।

## रुजार्थानां भाववचनानामज्वरेः ।।।२.३.५४।।

**भावकर्तृकाणां ज्वरिवर्जितानां रुजार्थानां कर्मणि शेषे षष्ठी स्यात्। चौरस्य रोगस्य रुजा (अज्वरिसंताप्योरिति वाच्यम्) रोगस्य चौरज्वरः चौरसंतापो वा। रोगकर्तृकं चौरसम्बन्धि ज्वरादिकमित्यर्थः।।इति कौमुदी।।**

**शे.– रोगार्थानां धातूनामित्यर्थो व्याख्यानात्। धातोर्भाववचनत्वाव्यभिचारेण सामर्थ्याद् वचन इति कर्त्तरि ल्युट्, भावशब्देन सिद्धरूपोऽर्थ उच्यते, ल्युट्प्रकृत्यर्थोऽविवक्षितस्तदाह–भावकर्तृकाणामिति। रोगकर्तृकाणामिति**

**च। रोगोऽत्र क्षयादिः। भावकर्तृकाणां किम्? श्लेष्मणश्चौररुजा। श्लेष्मात्र न भावः।**

**भैरवी–** **'रुजार्थानाम्' इति सूत्रे उपात्तं तत्र रुजाशब्दो यद्यपि व्याधौ रूढः तथापि प्रकृते रोगमात्रं विवक्षितमित्याशयेनाह–रोगार्थानां धातूनामिति। अत्र रोगशब्दे प्रकृत्यर्थमात्रं विवक्षितम्। व्याख्यानादिति–भावकर्तृकाणामित्यस्य 'नदी कूलानि रुजति' इति प्रत्युदाहरणं भाष्ये उक्तं तन्मूलकादित्यर्थः। ल्युट्प्रकृत्यर्थोऽविवक्षित इति–भावकर्तृकादिति भाष्यीयव्याख्यानात्। भाष्ये भावकर्तृकादिति ल्यब्लोपे पञ्चमी। भावकर्तृकमाश्रित्येत्यर्थः।**

ज्वरिवर्जित रुजार्थक धात्वर्थभाव (क्रिया) यदि कर्त्ता हो, तदा रोगार्थक धातु के कर्म की शेषत्वेन विवक्षा करने पर प्रकृतसूत्रद्वारा षष्ठीविभक्ति का विधान होता है। धातोर्भाववचनत्वाव्यभिचारेणेति—रुजार्थक धातु का तो भाव अर्थ होता ही है, इसलिए 'भाववचनानाम्' पदोपदेशसामर्थ्य से प्रकृतसूत्र में भावशब्द से साध्यावस्थापन्न क्रिया का ग्रहण न होकर सिद्धावस्थापन्न क्रिया का ग्रहण होता है। अत एव 'वक्तीति' विग्रह में कर्त्तरि ल्युट्प्रत्ययविधानपूर्वक भाववचनशब्द का 'भावकर्तृक' अर्थ होता है, इसीलिए कौमुदीवृत्ति में 'भावकर्तृकाणाम्' रूप से अर्थाश्रयण किया है। 'रोगकर्तृकाणाम्' पदघटक रोगशब्द से क्षयादि रोगों का ग्रहण होता है। 'चौरस्य रोगस्य रुजा' वाक्य से 'रोगकर्तृका चौरसम्बन्धिनी रुजा' अर्थ का बोध होता है, अर्थात् चौरसम्बन्धिरोगकर्तृका पीडा। प्रकृतस्थल में पीडा क्रिया का कर्त्ता रोग है और चौर कर्म है। रोगकर्त्ता में 'कर्तृकर्मणोः कृति' शास्त्रद्वारा षष्ठीविभक्ति होती है, अथ च रोगकर्तृकरुजार्थक-धात्वर्थक्रियानिरूपित कर्म की शेषतया विवक्षा करने से प्रकृतसूत्रद्वारा षष्ठीविभक्ति का विधान होकर 'चौरस्य रोगस्य रुजा' प्रयोगोपपत्ति होती है। भावकर्तृकाणां किम्? श्लेष्मणश्चौररुजा। प्रकृतवाक्य का 'श्लेष्मकर्तृका चौरसम्बन्धिनी रुजा' अर्थ है, अर्थात् खाँसी से चोर पकड़ा गया, अत एव पीडा हो गई। श्लेष्मणः पद में 'कतृकर्मणोः कृति' सूत्रद्वारा षष्ठीविभक्ति का विधान होता है। श्लेष्मा = कफ द्रव्य है, भाव नहीं, इसलिए प्रकृतसूत्र की प्रवृत्ति नहीं होती है।

**आशिषि नाथः ।।२.३.५५।।**

**आशीरर्थस्य नाथतेः शेषे कर्मणि षष्ठी स्यात्। सर्पिषो नाथनम्। आशिषीति किम्–माणवकनाथनम्। तत्सम्बन्धिनी याञ्चा इत्यर्थः।।इति कौमुदी।।**

**शे.– सर्पिर्मे भूयादित्याशासनमित्यर्थः।**

आशीर्वादार्थकनाथ्धात्वर्थक्रियानिरूपित कर्म की शेषतया विवक्षा करने पर प्रकृतसूत्रद्वारा षष्ठीविभक्ति होकर 'सर्पिषो नाथनम्' प्रयोगोपपत्ति होती है। 'सर्पिषो नाथनम्' अर्थात् 'हमको सर्पिः हो' इत्याकारक आशीर्वाद चाहता है।

माणवकनाथनम्—याञ्चार्थकनाथ्धात्वर्थक्रियानिरूपित कर्म की शेषत्वविवक्षा में प्रकृतसूत्रद्वारा षष्ठी नहीं होती है। 'षष्ठी शेषे' सूत्रद्वारा षष्ठी होने से समास होकर 'माणवकनाथनम्' प्रयोगोपपत्ति होती है। यद्यपि प्रकृतस्थल में 'कर्तृकर्मणोः कृति' शास्त्रद्वारा षष्ठी होकर भी कर्मषष्ठ्यन्त समास संभव है, तथापि कर्मषष्ठ्यन्त समासस्थल में कृदुत्तरपदप्रकृतिक स्वर होता है, अतः शेषषष्ठ्यन्त समास स्वीकार करने से अन्तोदात्तत्व की सिद्धि होती है।

**जासिनिप्रहणनाटक्राथपिषां हिंसायाम् ।।२.३.५६।।**

**हिंसार्थानामेषां शेषे कर्मणि षष्ठी स्यात्। चौरस्योज्जासनम्। निप्रौ संहतौ विपर्यस्तौ व्यस्तौ वा। चौरस्य निप्रहणनम्। प्रणिहननम्। निहननम्। प्रहणनं वा। नट अवस्कन्दने चुरादिः। चौरस्योन्नाटनम्। चौरस्य क्राथनम्। वृषलस्य पेषणम्। हिंसायां किम्–धानापेषणम्।।इति कौमुदी।।**

**शे.– 'जसु मोक्षणे' इति दैवादिकस्य न ग्रहणम्। जासीति निर्देशात्, हिंसायामित्युक्तेश्च, निप्रोपसृष्टो हनो निप्रहणः। शब्दपरत्वेऽपि सौत्रत्वात् 'हन्तेः' (पा.सू. ८.४.२२) इति णत्वम्। चुरादिरिति–घटादेस्तु न ग्रहणम्, दीर्घनिर्देशात्। क्राथनमिति–घटादेः क्रथेः। 'क्राथेति सूत्रे निपातनाद् वृद्धिरिति वृत्तिः। परे तु एतत्सूत्रप्रामाण्यान्नटसाहचर्याच्चायमपि चुरादिर्बोध्यः, तस्याकृतिगणत्वात्। निपातनस्य शेषषष्ठीसन्नियोगशिष्टत्वे कर्मत्वेन विवक्षायां चोरस्य क्राथनमित्यस्यानापत्तिः। सामान्येन निपातने चिण्णमुल्विषये क्रथमित्यादेः क्रथयतीत्यादेश्चानापत्तिरित्याहुः।**

**भैरवी–** **न ग्रहणमिति–किन्तु 'जसु हिंसायाम्' इति चौरादिकस्येति शेषः। ननु हेतुमण्णिचा जासीति निर्देशोपपत्तिर्भविष्यतीत्यत आह–हिंसायामित्युक्तेरिति। अनुकरणत्वाण्णत्वाप्राप्तेराह–सौत्रत्वादिति। मूलादिकं दूषयति–परे त्विति। अयम्–क्राथधातुः। नन्वयं चुरादौ न दृश्यत इत्यत आह–तस्येति। निपातनस्येति अस्यान्यथेत्यादिः। सामान्येन–शेषषष्ठीसन्नियोगशिष्टत्वानङ्गीकारेण।**

हिंसार्थक जासि, निप्रपूर्वक हन्, नाट्, क्राथ् तथा पिष् धात्वर्थ-क्रियानिरूपित कर्म की शेषतया विवक्षा करने पर प्रकृतशास्त्रद्वारा षष्ठीविभक्ति का विधान होता है। 'जासि' इति दीर्घनिर्देशसामर्थ्य से दैवादिक 'जसु मोक्षणे' धातु का ग्रहण नहीं होता है, अथ च दैवादिक जसुधातु का हिंसा अर्थ भी नहीं है, जबकि 'हिंसायाम्' पदोपदेशसामर्थ्य से हिंसार्थक धातु का ही ग्रहण अभीष्ट है।

प्र.— प्रकृतशास्त्र में निप्रपूर्वक हन्धातु का ग्रहण कराने के लिये निप्रहणशब्द का उपदेश है; किन्तु निप्रहणशब्द धातु नहीं, जबकि णत्वविधायक 'हन्तेः' (पा.सू. ८.४.२२) शास्त्र में श्तिप् निर्देश होने से, इसकी धातु में ही प्रवृत्ति संभव है, अतः 'निप्रहण' शब्द में णत्व कैसे?

उ.— प्रकृतशास्त्रोपदिष्ट 'निप्रहण' शब्द में सौत्रत्वात् णत्व का विधान है।

प्रकृतसूत्र में अवस्कन्दनार्थक चुरादिगणोपदिष्ट नट्धातु का ग्रहण होता है, घटादिसमुपदिष्ट नट्धातु का नहीं, यतो हि घटादिसमुपदिष्ट धातु को 'मितां ह्रस्वः' शास्त्रद्वारा ह्रस्व हो जाता है। तथा क्राथेति सूत्रोपदिष्ट क्राथशब्द से घटादिसमुपदिष्ट 'क्रथ् हिंसायाम्' का ग्रहण होता है, अथ च क्राथेति दीर्घनिर्देशसामर्थ्य से घटादि 'क्रथ्' को निपातनात् वृद्धि होती है। यह वृत्तिकार का मत है।

'परे तु' से ग्रन्थकार अपने मत का प्रतिपादन करते हुए कहते हैं, कि 'चुरादिगणोपदिष्ट नट्धातुसाहचर्य से क्राथधातु भी चुरादि ही लेते हैं। यद्यपि चुरादिगण में क्राथधातु का उपदेश नहीं है, तथापि चुरादि आकृतिगण है, अत एव अनुपदिष्ट धातुओं का भी चुरादिगण में सन्निवेश स्वीकार करते हैं। किञ्च—वृत्तिकार निपातनद्वारा वृद्धि स्वीकार करते हैं। कर्म की शेषतया विवक्षा में 'जासिनि.' सूत्रद्वारा षष्ठीविधान करने पर ही शेषषष्ठीसन्नियोग में वृद्धि संभव है। तथा च 'कर्तृकर्मणोः.' शास्त्रद्वारा

षष्ठीविधान करने पर 'चौरस्य क्राथनम्' प्रयोगोपपत्ति असंभव है। किञ्च सामान्यतया वृद्धिनिपातन स्वीकार करने पर 'क्रथनम्, क्रथयति' आदि प्रयोगों में भी वृद्ध्यापत्ति होगी, इसलिए नट्धातुसाहचर्य से ही चुरादि क्राथधातु की स्वीकृति करना ही युक्तियुक्त है।

### व्यवहृपणोः समर्थयोः।।२.३.५७।।

**शेषे कर्मणि षष्ठी स्यात्। द्यूते क्रयविक्रयव्यवहारे चानयोस्तुल्यार्थता। शतस्य व्यवहरणं पणनं वा। समर्थयोः किम्–शलाकाव्यवहारः। गणनेत्यर्थः। ब्राह्मणपणनं स्तुतिरित्यर्थः।।इति कौमुदी।।**

**शे.– समपर्यायसंशब्देन समासः, शकन्ध्वादित्वात् पररूपं वा। ब्राह्मणपणनमिति–आयप्रत्ययो वैकल्पिकत्वान्न कृतः। उदाहरणे स्तुतावेवेति नियमादपि न।**

प्र.— 'समः अर्थः ययोः' विग्रह में समास स्वीकार करने पर 'समार्थयोः' पदोपपत्ति होनी चाहिए। अतः सूत्र में 'समर्थयोः' पदोपदेश कैसे किया?

उ.— प्रकृतस्थल में तुल्यार्थक मान्त सम्‌शब्द का अर्थशब्द के साथ समास स्वीकार करने से, अथवा अदन्त समशब्द का अर्थशब्द के साथ समासपक्ष में शकन्ध्वादित्वात् पररूप स्वीकार करने से 'समर्थयोः' पदोपपत्ति होती है।

प्र.— प्रकृतसूत्र में आय्प्रत्ययविधानपूर्वक पण्धातु का उपदेश करना चाहिए? (गुपूधूपविच्छिपणिपनिभ्य आयः, पा.सू. ३.१.२८)।

उ.— आय्प्रत्यय का विधान विकल्प से होता है। अथ च आय्प्रत्यय का विधान स्तुति अर्थ में ही होता है, प्रकृतसूत्र में द्यूत और क्रय-विक्रय अर्थ में प्रयुक्त होने के कारण आय्प्रत्ययविधानपूर्वक पण्धातु का उपदेश नहीं किया है।

### दिवस्तदर्थस्य ।।२.३.५८।।

**द्यूतार्थस्य क्रयविक्रयरूपव्यवहारार्थस्य च दिवः कर्मणि षष्ठी स्यात्। शतस्य दीव्यति। तदर्थस्य किम्? ब्राह्मणं दीव्यति। स्तौतीत्यर्थः।।इति कौमुदी।।**

**शे.– कर्मणि षष्ठी स्यादिति–शेष इति त्वत्र न सम्बध्यते, व्याख्यानात्। अत एव 'द्वितीया ब्राह्मणे' (पा.सू. २.३.६०) इति सूत्रं 'गामस्य**

तदहः सभायां दीव्येयुः' इत्यत्र नित्यं षष्ठीप्राप्तौ द्वितीयार्थमिति भाष्ये उक्तम्, तद् ध्वनयन् तिङन्तमुदाहरति-शतस्य दीव्यति। यद्यपि पूर्वसूत्रे दिवं पठित्वा तदर्थस्येति त्यक्तुं शक्यते, तथापि योगविभाग उत्तरार्थः, शेषे इत्यस्यासम्बन्धार्थश्च।

भैरवी- उत्तरसूत्रद्वयस्य पाणिनिपठितानुपूर्वीकस्योपादानसामर्थ्यमूलक-व्याख्यानादित्यर्थः। अयम्भावः-यद्यप्यत्र शेषे इत्यस्य सम्बन्धस्तदा 'विभाषोपसर्गे' इत्यत्र शेषपदसम्बन्धोऽस्ति न वा। आद्ये 'दिव.' इति सूत्रेण समासाभावस्य सिद्धौ विभाषोपसर्गसूत्रवैयर्थ्यम्। न च यदा नानेन षष्ठी तदा 'षष्ठी शेषे' इति सूत्रेण षष्ठी तदा समासप्रवृत्तिरेव फलमस्त्विवति वाच्यम्। 'नोपसर्गे' इति न्यासेन दिवसूत्रस्य निषेधे शेषषष्ठ्यां समासविकल्पेन रूपद्वयसिद्धौ विभाषाग्रहणस्य तथापि वैयर्थ्यानुद्धारात्। द्वितीये विभाषेति सूत्रस्य कर्मण्येव विकल्पेन षष्ठीविधायकतया छन्दस्यापाद्यमानरूपाभावाद् ब्राह्मणे विभाषेति सूत्रविहितषष्ठ्यभावे कर्मणि द्वितीयेति सूत्रेण द्वितीयायाः सिद्धौ 'द्वितीया ब्राह्मणे' इति सूत्रवैयर्थ्यं दुर्वारमेव। न च तन्निरुपसर्गे द्वितीयार्थमस्त्विवति वाच्यम्। कर्मत्वविवक्षायां दिवसूत्रस्याप्राप्तेस्तत्र 'कर्मणि द्वितीया' इति सूत्रेण द्वितीयायाः सिद्धौ तस्य सूत्रस्य वैयर्थ्यानुद्धारात्। 'द्वितीया ब्राह्मणे' इति सूत्रे शेषपदसम्बन्धेन शेषत्वविवक्षायां द्वितीयार्थं तदिति तु वक्तुमशक्यम्। 'विभाषोपसर्गे' इति सूत्रेण विच्छिन्नस्य शेषपदस्य पुनस्तत्र सम्बन्धासम्भवात्।

न च कृदन्तेन योगे 'द्वितीया ब्राह्मणे' इति सूत्रे विभाषापदसम्बन्धेन पक्षे दिव इति सूत्रसिद्धषष्ठ्याः पुनर्विधानेन समासाभावार्थं तदस्त्विवति वाच्यम्। 'द्वितीया ब्राह्मणे' इति सूत्रभाष्ये किमुदाहरणं प्रतिदीव्यन्ति। पूर्वेणाप्येतत्सिद्धम्। इदं तर्हि 'गामस्य तदहः सभायां दीव्येयुः' इत्युदाहरणेन कृदन्तेन योगे तस्य प्रवृत्त्यस्वीकारादिति। अत एवेति-दिवस्तदर्थस्येति सूत्रे शेषपदासम्बन्धादेव। नित्यं षष्ठीप्राप्ताविति-दिवस्तदर्थस्येत्यनेन नित्यषष्ठीप्राप्तावित्यर्थः। तिङन्तमिति-यदि शेषपदसम्बन्धेनेदं सूत्रमपि समासनिवृत्तिफलकं भवेत्तदा यत्र समासस्य प्राप्तिसम्भावना तादृशं कृदन्तमेवोदाहृतं स्यादिति भावः। पूर्वोक्तमेवार्थं शङ्कासमाधानाभ्यां द्रढयति-यद्यपीत्यादिना।

तदर्थ अर्थात् व्यवपूर्वक हृ और पण्धातु का जो अर्थ, तदर्थवृत्ति-दिव्धातु के योग में प्रकृतसूत्रद्वारा दिव्धात्वर्थक्रियानिरूपित कर्म में षष्ठीविभक्ति का विधान होता है। **प्रकृतसूत्र में 'शेष' पद का सम्बन्ध नहीं होता है**, यतो हि 'दिवस्तदर्थस्य' शास्त्र में 'शेषे' पद का सम्बन्ध स्वीकार करने पर धाराप्रवाहन्यायद्वारा 'दिवस्तदर्थस्य' शास्त्रसमागत 'शेषे' पद का 'विभाषोपसर्गे' इत्युत्तरसूत्र में भी सम्बन्ध स्वीकार करना होगा तथा च कर्म की शेषतया विवक्षा में षष्ठी का विधान, अथ च कर्मतया विवक्षा में 'कर्मणि द्वितीया' शास्त्रद्वारा द्वितीया का विधान भी संभव है, तथा सति 'विभाषोपसर्गे' सूत्रद्वारा विकल्प से षष्ठीविभक्ति का विधान व्यर्थ होगा, अर्थात् 'विभाषोपसर्गे' शास्त्रोपदेश ही व्यर्थ होगा, अत एव 'विभाषोपसर्गे' शास्त्रद्वारा विकल्प से षष्ठीविधानसामर्थ्य से सिद्ध होता है, कि 'दिवस्तदर्थस्य' सूत्र में 'शेषे' पद का सम्बन्ध नहीं होता है।

'दिवस्तदर्थस्य' शास्त्र में 'शेषे' पद का सम्बन्ध नहीं होता है, इसीलिए भाष्यकार ने कहा, कि 'दिवस्तदर्थस्य' शास्त्रद्वारा नित्यप्राप्त षष्ठी का बाध होकर 'द्वितीया ब्राह्मणे' शास्त्र से द्वितीयाविभक्ति का विधान होता है। यदि 'दिवस्तदर्थस्य' सूत्र में शेषे पद का सम्बन्ध होता, तर्हि 'नित्यप्राप्त षष्ठी का बाध होकर द्वितीया होती है' ऐसा न कहकर 'शेषत्वविवक्षा में प्राप्त पाक्षिक षष्ठी का बाध होकर 'द्वितीया ब्राह्मणे' सूत्रद्वारा द्वितीया का विधान होता है' ऐसा भाष्यकार को कहना चाहिए था। भाष्यकारद्वारा नित्यप्राप्त षष्ठी के बाध का प्रतिपादन करने से सिद्ध होता है, कि 'दिवस्तदर्थस्य' सूत्र में 'शेषे' पद का सम्बन्ध नहीं होता है।

कर्मादिशब्दोपदेशपूर्वक कर्मादि की शेषत्वविवक्षा में विधीयमाना षष्ठी प्रतिपदविधीयमाना षष्ठी कहलाती है। प्रतिपदविधाना षष्ठी का समासाभाव फल है। 'दिवस्तदर्थस्य' शास्त्रविहित षष्ठी का समासाभाव फल स्वीकार करने पर प्रकृतसूत्र में 'शेषे' पद का सम्बन्ध स्वीकार करना होगा। तथा सति प्रकृत-शास्त्र के व्याख्यान में 'दिवस्तदर्थस्य' शास्त्रविधीयमाना षष्ठी का समासयोग्य कृदन्तादिपद के साथ उदाहरण देना चाहिए था, न कि तिङन्त के साथ। 'दिवस्तदर्थस्य' शास्त्रविधीयमाना षष्ठी का 'शतस्य दीव्यति' इति तिङन्त के साथ उदाहरण देने से भी यही सिद्ध होता है, कि प्रकृतसूत्र में 'शेषे' पद का सम्बन्ध नहीं होता है, यतो हि तिङन्त

के साथ तो समास स्वतः अप्राप्त है। अर्थात् 'शतस्य दीव्यति' स्थल में समासवारण करने के लिये 'शेषे' पदानुवर्त्तन निष्प्रयोजन है। इस प्रकार तिङन्त के साथ उदाहरण देने से सिद्ध होता है, कि 'दिवस्तदर्थस्य' सूत्र में 'शेषे' पद का सम्बन्ध नहीं होता है।

प्र.— 'दिवस्तदर्थस्य' शास्त्रोपदिष्ट 'तदर्थस्य' पद से व्यवपूर्वक हृ और पण् धातु के अर्थ का ग्रहण होता है, अत एव 'व्यवहृपणोः समर्थयोः' एवं 'दिवस्तदर्थस्य' इन दो सूत्रों के पृथक्-पृथक् उपदेश करने की अपेक्षा लाघवमूलक 'व्यवहृपणदिवां समर्थानाम्' इत्येकशास्त्रोपदेश ही स्वीकार करना चाहिए?

उ.— 'व्यवहृपणोः समर्थयोः' एवं 'दिवस्तदर्थस्य' रूप से योगविभागपूर्वक सूत्रोपदेश उत्तरार्थ है। 'द्वितीया ब्राह्मणे' इत्युत्तरसूत्र में 'दिवः' पद का अनुवर्त्तन करने के लिये 'दिवस्तदर्थस्य' इति पृथक् सूत्रोपदेश किया है। अथ च 'व्यवहृपणोः समर्थयोः' शास्त्र में 'शेषे' पद का सम्बन्ध होता है, 'दिवस्तदर्थस्य' सूत्र में 'शेषे' पद का सम्बन्ध नहीं होता है, इसलिए योगविभागपूर्वक पृथक्-पृथक् सूत्रोपदेश आवश्यक है।

**विभाषोपसर्गे ।।२.३.५९।।**

**पूर्वयोगापवादः। शतस्य शतं वा प्रतिदीव्यति।।इति कौमुदी।।**

**शे.- अत्रापि शेष इति न सम्बध्यते, तदर्थस्येति च वर्त्तते तदाह–पूर्वयोगेति। अत एवेयं प्राप्तविभाषेति 'न वेति विभाषा' (१.१.४४) इति सूत्रे भाष्ये स्पष्टम्।**

**भैरवी- अत एवेति–अत्रापि शेषपदासम्बन्धादेव।**

उपसर्गपूर्वक व्यवहारार्थक और द्यूतार्थक दिव् धातु के योग में दिव्धात्वर्थ-क्रियानिरूपित कर्म में प्रकृतसूत्रद्वारा षष्ठीविभक्ति का विधान होता है। **प्रकृतसूत्र में 'शेषे' पद का सम्बन्ध नहीं है**, अथ च 'तदर्थस्य' पद का अनुवर्त्तन होता है, इसलिए 'विभाषोपसर्गे' शास्त्रविहित विभाषा प्राप्त-विभाषा सिद्ध होती है, यतो हि दिव्धात्वर्थक्रियानिरूपित कर्म में 'दिवस्तदर्थस्य' शास्त्रद्वारा नित्यषष्ठी प्राप्त है। यदि 'दिवस्तदर्थस्य' शास्त्र में 'शेषे' पद का सम्बन्ध होता, तर्हि कर्म की शेषत्वविवक्षा में षष्ठीविभक्ति का एवं कर्मत्वविवक्षा में 'कर्मणि द्वितीया' सूत्रद्वारा द्वितीयाविभक्ति का

विधान संभव होने से 'विभाषोपसर्गे' सूत्र 'दिवस्तदर्थस्य' सूत्र का अपवाद न होकर 'विभाषोपसर्गे' शास्त्रोपदेश ही व्यर्थ होता। इस प्रकार 'दिवस्तदर्थस्य' सूत्र में 'शेषे' पद का सम्बन्ध नहीं है, यह सिद्ध होने पर भी 'विभाषोपसर्गे' सूत्र में शेषे पद का सम्बन्ध स्वीकार करने पर उद्देश्यभेद होने से 'दिवस्तदर्थस्य' सूत्र का अपवाद सिद्ध नहीं होता, अर्थात् प्राप्तविभाषा नहीं कहलाता। न वेति. सूत्रभाष्य में 'विभाषोपसर्गे' सूत्रविहित विभाषा को भाष्यकारद्वारा 'प्राप्ते: तदर्थस्येति वर्त्तते' वचनोपदेशपूर्वक प्राप्तविभाषा स्वीकार करने से सिद्ध होता है, कि 'विभाषोपसर्गे' शास्त्र में भी 'शेषे' पद का सम्बन्ध नहीं होता है।

**कृत्वोऽर्थप्रयोगे कालेऽधिकरणे।।२.३.६४।।**

**कृत्वोऽर्थानां प्रयोगे कालवाचिन्यधिकरणे शेषे षष्ठी स्यात्। पञ्चकृत्वोऽह्नो भोजनम्। द्विरह्नो भोजनम्। शेषे किम्–द्विरहन्यध्ययनम्।।इति कौमुदी।।**

**शे.– शेषे किमिति–'दिवस्तदर्थस्य' (पा.सू. २.३.५८) इत्यादिना विच्छेदादधिकरणकारके एव षष्ठीविधानं युक्तमिति प्रश्नः। द्विरहनीति– वृत्त्यादिप्रामाण्यान्मण्डूकानुवृत्तिः स्वीकार्येति उत्तरम्। 'अधीगर्थ.' (पा.सू. २.३.५२) इति सूत्रे 'कर्मादीनामविवक्षा शेषः' इति भाष्ये बहुवचनेनात्रापि शेषपदसम्बन्धबोधनाच्च। वस्तुतस्तु 'कर्माश्रयषष्ठीविषये सूत्रोपात्तसकर्मकाणामकर्मकवद्वचनम्' इति वार्त्तिकप्रत्याख्यानाय 'शेषे इति वर्त्तते' इति भाष्यकृतोक्ते, परेण 'शेषश्च कः' इति पृष्टे 'शेषे षष्ठी' (पा.सू. २.३.५०) इति सूत्रोक्तं 'कर्मादीनामविवक्षा शेषः' इति सिद्धान्तिना स्मारितं नैतावता 'कृत्वोऽर्थ॰' (पा.सू. २.३.६४) इत्यत्र तत्सम्बन्धो लभ्यते। किं चैतद्भाष्यबलात् 'दिव.' (पा.सू. २.३.५८) इति सूत्रेऽपि शेषपदसम्बन्ध आवश्यकः। अन्यथा वार्त्तिकरीत्या 'शतस्य दीव्यते' इति भावे इष्टस्य प्रयोगस्यासिद्धिः। अत एव वार्त्तिकव्याख्यायाम् 'अधीगर्थादयः प्रेष्यब्रूपर्यन्ताः कर्माश्रयपदेनोच्यन्ते' इति कैयटः। एवञ्च शेष इत्यनुवृत्त्या वार्त्तिकप्रत्याख्यानवदेतत् सूत्रद्वयप्रत्याख्यान एव भाष्यतात्पर्यम्। 'द्वितीया ब्राह्मणे' (पा.सू. २.३.६०) इति सूत्रस्थभाष्यन्तु वार्त्तिकरीत्येत्याहुः। किञ्च यदा कर्म विवक्षितं भवति तदा षष्ठी न भवति, 'स्मराम्यहं मातरम्' इति भाष्ये उक्तम्। त्वद्रीत्या तु यदा कर्माद्यविवक्षितं भवतीति**

वदेत्। एवञ्च 'ज्ञोऽविदर्थस्य' (पा.सू. २.३.५७) इत्यत्रापि तदसम्बन्ध एव। एवञ्च तद्योगे न कदापि तृतीया 'शतं दीव्यति' इत्यादि च सिध्यति, 'अधीगर्थ.' इत्यादौ च मण्डूकानुवृत्तिरिति सुधियो विभावयन्तु।

भैरवी– कृत्वोऽर्थेति सूत्रे 'शेषे' इति मण्डूकानुवृत्त्या सम्बध्यत इत्यत्र बीजं दर्शयति–'अधीगर्थेति सूत्रे' इति। बहुवचनेति–अधिकरणस्य सङ्ग्रहे हि बहुवचनं युक्तं भवतीति भावः। स्वसिद्धान्तमाह–वस्तुतस्त्विति। सूत्रोपात्तेति–यद्यप्येवमानुपूर्वी भाष्ये वार्त्तिकस्य नास्ति, तथापि कैयटीयव्याख्यानवशात् फलतीति प्रकृते एवमुक्तम्। तथा हि– अधीगर्थेति सूत्रे कर्मादिष्वकर्मकवद्वचनम्। कर्मादिष्वकर्मकवद्भावो वक्तव्यः। किं प्रयोजनम्? अकर्मकाणां भावे लो भवतीति भावे लो यथा स्यात्। 'मातुः स्मर्यते, पितुः स्मर्यते'। एतद्वार्तिके कर्मादिष्वित्यत्रादिशब्दः कर्मव्यतिरिक्तस्याभावादनुपपन्न इत्याशङ्का-निवारणायाह कैयटः आदिशब्दोऽत्राश्रयवाचीति, यथा–

विष्णुरादिः पृथासूनोर्भीष्मादिश्च सुयोधनः। ते जयन्ति रणे शत्रून् येषां विष्णुः समाश्रयः।।इति। तेन कर्माश्रया द्वितीयाविधिनिमित्तभावेनोपात्ताः सकर्मका अधीगर्थादयः प्रेष्यब्रूपर्यन्ताः कर्मादिशब्देनोच्यन्ते। द्वितीयाविधिनिमित्तभावेनेति–अत्र द्वितीयाशब्दो लक्षणया द्वितीयापवादषष्ठीपरः। तेन षष्ठीनिमित्तभावेनेति फलितम्। दिवुधातुविषये 'विभाषोपसर्गे', 'द्वितीया ब्राह्मणे' इति सूत्रद्वयारम्भाच्छेषपदासम्बन्ध इत्यतो वार्त्तिकारम्भः। 'तत्तर्हि वक्तव्यन्न वक्तव्यम्। अविवक्षिते कर्मणि षष्ठी भवतीति। किं वक्तव्यमेतत्? नहि। कथमनुच्यमानं गंस्यते। 'शेषे' इति वर्त्तते। शेषश्च कः? कर्मादीनामविवक्षा शेषः। यदा च कर्म विवक्षितं भवति तदा षष्ठी न भवति। स्मराम्यहं मातरम्, स्मराम्यहं पितरम्' इति भाष्ये उक्तम्। अत्राविवक्षिते कर्मणीत्यनेनाकर्मकत्वाद् भावे लादयः सिद्धा भवन्तीति दर्शितम्। ततोऽविवक्षितकर्मकत्वेनाकर्मकत्वप्रदर्शनाय शेषपदानुवृत्तिः प्रदर्शिता। शेष इति वर्त्तत इति–नन्वेवं 'षष्ठी शेषे' इति सूत्रेणैव षष्ठ्यां सिद्धायामेतत्प्रकरणं व्यर्थमत आह कैयटः – 'प्रकरणञ्चेदं समासप्रतिषेधार्थम्' इति। अत्र प्रकरणपदोपादानेन मण्डूकानुवृत्तेरयुक्तत्वात् सर्वत्र शेषपदसम्बन्ध इति दर्शितम्। स्मारितमिति–यथा 'षष्ठी शेषे'

**इति सूत्रे कर्मादीनां क्रियाकारकभावेन सम्बन्धमविवक्षितं कृत्वा सम्बन्धित्वमात्रविवक्षया षष्ठी भवतीत्युक्तम्, तथेहापि कर्मादीनामविवक्षया भावे लादयो भविष्यन्तीति दर्शितमित्यर्थः। कर्माश्रयषष्ठीविषये इत्यनेनाधीगर्थेत्यादिदिवस्तदर्थस्येति सूत्रसमुदायो गृह्यते। नैतावतेति– 'षष्ठी शेषे' इति सूत्रवदत्रापि सूत्रे आदिशब्द उपात्त इति भावः।**

**प्राचीनव्याख्यायां दोषमप्याह–किञ्चेति। एतद्भाष्यबलादिति– अव्यवहितोक्तभाष्यबलादित्यर्थः। अन्यथेति–दिव. इति सूत्रे शेषपदासम्बन्ध इत्यर्थः। वार्त्तिकरीत्येति–तत्र हि यतः कर्मादिष्वकर्मकवद्वचनम् इत्युपात्तम्। अत्र कैयटेन प्रेष्यब्रूपर्यन्ता इत्येवोक्तम्, न तु कृत्वोऽर्थप्रयोगे. इत्येतत्पर्यन्तमिति तेन कृत्वोऽर्थ. इति सूत्रे शेषपदासम्बन्धो लभ्यते। दिव. इति सूत्रे शेषे इत्यस्य सम्बन्धे इदमेव भाष्यं मानम्। दिव. इति सूत्रस्यापि तन्मध्यपाठात्। अत्र प्रेष्यब्रूपर्यन्त इत्युपादानेन 'कटिपर्यन्त-वासः' इत्यत्रेवाग्रे शेषपदासम्बन्ध इति स्पष्टमेव लभ्यते। एतत्सूत्रद्वयेति– 'विभाषोपसर्गे', 'द्वितीया ब्राह्मणे' इति सूत्रद्वयेत्यर्थः। नन्वेवं 'द्वितीया ब्राह्मणे' इति सूत्रभाष्ये 'गामस्य तदहः सभायां दीव्येयुः' इत्यत्र शेषपदासम्बन्धेन दिव इति सूत्रेण प्राप्तषष्ठीबाधनार्थमेतत्सूत्रमित्युक्तं तस्य का गतिरित्यत आह–'द्वितीया ब्राह्मणे' इतीति। वार्त्तिकरीत्येति– वार्त्तिककारेण हि शेषपदानुवृत्तिर्नोक्ता किन्तु अकर्मकवद्भाव एवोक्त इति भावः। सिंहावलोकनन्यायेनाह– किञ्चेति। एवञ्च–पूर्वोक्तव्यवस्थासिद्धौ च। तदसम्बन्धः–'ज्ञोऽविदर्थस्य.' इति सूत्रे शेषपदासम्बन्धः। तथा सति यत्फलितं तदाह–एवञ्चेति। तद्योगे–अज्ञानार्थकजानातियोगे। शतं दीव्यतीत्यादि चेति–'दिवस्तदर्थ.' इति सूत्रे पूर्वोक्तरीत्या शेषपदसम्बन्धे सति यदा सम्बन्धित्वेन विवक्षा तदा षष्ठी, यदा तु कर्मत्वशक्तिमत्त्वेन विवक्षा तदा द्वितीयेति रूपद्वयसिद्धिरिति भावः। ननु ज्ञोऽविदर्थेति सूत्रे शेषपदासम्बन्धेऽधीगर्थेति सूत्रे कथं शेषपदसम्बन्धो भाष्ये उक्त इत्यत आह–अधीगर्थेत्यादाविति।**

क्रियासमुत्पत्ति की गणना करने पर संख्यावाचक शब्द से 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' (पा.सू. ५.४.१७) सूत्रद्वारा कृत्वसुच्प्रत्यय होता है, 'द्वित्रिचतुर्भ्यः सुच्' (पा.सू. ५.४.१८) सूत्रद्वारा सुच्प्रत्यय होता है; 'एकस्य सकृच्च' (पा.सू. ५.४.१९) सूत्रद्वारा सुच् प्रत्यय होता है

और एकशब्द को सकृत् आदेश भी होता है। अत एव क्रियासमुत्पत्ति की गणना में आने वाले प्रत्यय कृत्वोऽर्थ कहलाते हैं। कृत्वोऽर्थ के प्रयोग में कालवाची अधिकरण की शेषत्वेन विवक्षा करने पर 'कृत्वोऽर्थप्रयोगे कालेऽधिकरणे' (पा.सू. २.३.६४) सूत्रद्वारा षष्ठीविभक्ति होती है, यथा 'पञ्चकृत्वः अह्नि भोजनम्' एक बार खाया; दूसरी बार खाया; तीसरी बार खाया; चौथी बार खाया; पाँचवी बार खाया, इस प्रकार पाँच बार भोजनक्रिया की उत्पत्ति हुई, अत एव संख्यावाचक पञ्चन्शब्द से कृत्वसुच् प्रत्यय होकर 'पञ्चकृत्वः' प्रयोगोपपत्ति होती है। 'पञ्चकृत्वः' के प्रयोग में कालवाचक 'अह्नि' अधिकरण की शेषत्वेन विवक्षा करने पर प्रकृतसूत्रद्वारा षष्ठीविभक्ति होकर 'पञ्चकृत्वोऽह्नो भोजनम्' प्रयोगोपपत्ति होती है। शेषे किम्? द्विरह्न्यध्ययनम्। प्रकृतस्थल में कृत्वोऽर्थ का प्रयोग होने पर भी कालवाची अधिकरण की शेषत्वेन विवक्षा न करने से प्रकृतसूत्रद्वारा षष्ठीविभक्ति नहीं हुई, **अर्थात् प्रकृतसूत्र में 'शेषे' पद का सम्बन्ध होता है।**

प्र.— 'कृत्वोऽर्थ.' शास्त्र से पूर्ववर्त्ती 'दिवस्तदर्थस्य' एवं 'विभाषोपसर्गे' इन दो सूत्रों में 'शेषे' पद का सम्बन्ध कौमुदीकार ने स्वीकार नहीं किया है, अतः सूत्रद्वयविच्छिन्न 'शेषे' पद का प्रकृतशास्त्र में सम्बन्ध असंभव है। इसलिए प्रकृतसूत्र की कौमुदीवृत्ति में 'कालवाचिन्यधिकरणे शेषे षष्ठी' न कहकर 'कालवाचिन्यधिकरणे षष्ठी' कहना चाहिए था?

उ.— शास्त्रद्वयविच्छिन्न 'शेषे' पद का प्रकृतसूत्र में मण्डूकप्लुतिन्याय से अनुवर्त्तन होता है, अत एव कौमुदीवृत्ति में 'कालवाचिन्यधिकरणे षष्ठी' न कहकर कौमुदीकार ने 'कालवाचिन्यधिकरणे शेषे षष्ठी' कहा है। वृत्त्यादिग्रन्थों के प्रामाण्य से कौमुदीकार ने प्रकृतसूत्र में 'शेषे' पदानुवृत्ति स्वीकार की है। अथ च 'अधीगर्थ.' शास्त्र के 'कर्मादीनामविवक्षा शेषः' इस भाष्यकथन से भी सिद्ध होता है, कि प्रकृतसूत्र में 'शेषे' पद का सम्बन्ध होता है। अधीगर्थ. शास्त्रद्वारा 'कर्मणि शेषे षष्ठी' कहने के बाद भाष्यकार ने स्वतः 'शेषपदार्थः कः? प्रश्न के उपरान्त 'कर्मादीनामविवक्षा शेषः' उत्तर दिया। 'कर्मादीनाम्' इति बहुवचनसामर्थ्य से प्रकृतवचनोक्त आदिशब्द से अधिकरण का भी ग्रहण होता है। अधिकरण में षष्ठीविधायक 'कृत्वोऽर्थे.' यही एक सूत्र है। अतः यह सिद्ध होता है कि प्रकृतसूत्र में 'शेषे' पद का सम्बन्ध होता है।

एतत्कर्तृक स्थित्यनुकूल भूतकालिक व्यापारार्थक 'एभिः अस्मिन् असायि' विग्रह में 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' (पा.सू. ३.४.७६) सूत्रद्वारा क्तप्रत्ययोपपन्न 'एभिः इदम् आसितम्' स्थल में अनुक्त कर्त्ता में 'अधिकरणवाचिनश्च' सूत्रद्वारा षष्ठी होकर 'इदमेषाम् आसितम्' प्रयोगोपपत्ति होती है। 'इदमेषामासितं शयितं भुक्तं वा' अर्थात् इन्होंने यहाँ खाया था, यहाँ शयन किया था, यहाँ बैठे थे।

**मुकुन्दस्यासितमिदमिदं यातं रमापतेः।**

**भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः।।**

'उभयप्राप्तौ कर्मणि' (पा.सू. २.३.६६) सूत्रविहित नियमद्वारा, **'मध्ये पठिता येऽपवादास्ते पूर्वान् विधीन् बाधन्ते नोत्तरान्'** नियम से 'कर्तृकर्मणोः कृति' (पा.सू. २.३.६५) शास्त्र का बाध होता है, 'अधिकरणवाचिनश्च' (पा.सू. २.३.६८) शास्त्र का नहीं। अत एव सकर्मक धातुविहित अधिकरणार्थक क्तप्रत्ययान्त तदादि के योग में प्रकृतसूत्रद्वारा अनुक्त कर्त्ता और अनुक्त कर्म उभयत्र षष्ठी होकर 'इदमेषां भुक्तमोदनस्य' प्रयोगोपपत्ति होती है।

**न लोकाव्ययनिष्ठाखलर्थतृनाम् ।।२.३.६९।।**

**एषां प्रयोगे षष्ठी न स्यात्। लादेशः–कुर्वन् कुर्वाणो वा सृष्टिं हरिः। उ–हरिं दिदृक्षुः-अलङ्करिष्णुर्वा। उकः–दैत्यान् घातुको हरिः। कमेरनिषेधः। लक्ष्म्याः कामुको हरिः। अव्ययम्–जगत् सृष्ट्वा। सुखं कर्त्तुम्। निष्ठा–विष्णुना हता दैत्याः। दैत्यान् हतवान् विष्णुः। खलर्थाः–ईषत्करः प्रपञ्चो हरिणा। 'तृन्' इति प्रत्याहारः 'शतृशानचौ' इति तृशब्दादारभ्य आतृनो नकारात्। शानन्–सोमं पवमानः। चानश्–आत्मानं मण्डयमानः। शतृ–वेदमधीयन्। तृन्–कर्त्ता लोकान्। द्विषः शतुर्वा। मुरस्य मुरं वा द्विषन्। सर्वोऽयं कारकषष्ठ्याः प्रतिषेधः। शेषे षष्ठी तु स्यादेव। ब्राह्मणस्य कुर्वन्। नरकस्य जिष्णुः।।इति कौमुदी।।**

**शे.–** **लादेशा इति–लकारसम्बन्धिन इत्यर्थः, तेन 'ददिर्गाः' इति सिद्धम्। केवलस्य क्वापि प्रयोगाभावादेवं व्याख्यातम्। कुर्वन्निति–तृन्प्रत्ययघटकस्तु नायम्। तृशब्दस्य तद्घटकत्वेऽपि शतुस्तद्घटकत्वाभावात्। लिडादेशक्व-स्वादियोगे लिट्सदृशकिकिनोर्योगे च निषेधार्थं तस्यावश्यकत्वाच्च।**

उ इति–उकारेण व्याख्यानात् तदन्तविधिः, व्यपदेशिवद्भावेनोकारस्यापि। 'सनाशंसेति' (पा.सू. ३.२.१६८) 'अलङ्कृञ्' (पा.सू. ३.२.१३६) इति च उइष्णुचौ। घातुक इति–'लषपतपद.' (पा.सू. ३.२.१५४) इत्युकञ् वृद्धिस्तत्त्वम्। कमेरिति–उकान्तस्येति शेषः। इदञ्च भाषायामेव। भाषायामिति भाष्योक्तेः। निष्ठेति–एतदपवादतया भाष्ये वार्त्तिकं पठ्यते। 'नपुंसके भावे क्तस्य योगे षष्ठ्या उपसंख्यानम्–छात्रस्य हसितम्' इति। इदञ्च प्रतिपदोक्तत्वात् 'नपुंसके भावे क्तः' इति सूत्रविहितक्तान्तयोग एव। अत एव 'भ्रान्तं देशम्' इत्यादौ 'गत्यर्थाकर्मक.' (पा.सू. २.३.११२) इत्यनेन क्ते नानेन षष्ठी। नपुंसके भावे क्तस्तु नात्र, तस्याप्यकर्मकेभ्य एवेष्टेः। अविवक्षितकर्मतयाऽकर्मकत्वेन क्तस्तु 'कृतपूर्वी' इत्यादिवृत्तिविषय एवेत्युक्तम्। एवञ्चेह 'अहेः सृप्तम्' इत्यादौ परत्वेन 'क्तोऽधिकरणे च' (पा.सू. ३.४.७२) इत्यनेन भावे क्ते शेषत्वविवक्षयैव षष्ठीसाधनस्यावश्यकत्वेनेदं शेषत्वविवक्षया भाष्ये प्रत्याख्यातम्। वार्त्तिकेन चानेन कारकषष्ठीनिषेधविषये शेषत्वविवक्षा नेति ज्ञाप्यते। शेषत्वविवक्षया भाष्योक्ते तत्प्रत्याख्याने तु अनभिधानात् क्तातिरिक्तविषये न सा। 'पूरणगुण.' (पा.सू. २.२.११) इति सूत्रे भाष्ये ध्वनितमिदम्। तत्र हि 'सति किमुदाहरणम्? ब्राह्मणस्य कुर्वन्, नैतदस्ति कारकषष्ठीनिषेधात्, शेषषष्ठ्या तु ब्राह्मणस्य कटमित्यर्थेनासामर्थ्यात्' इत्याद्यर्थकमुक्तमिति परे। अधीयन्निति–'इङ्धार्योः शत्रकृच्छ्रिणि' (पा.सू. ३.२.१३०) इति शता। द्विषन्निति–'द्विषोऽमित्रे' (पा.सू. ३.२.१३१) इति शता। शेषषष्ठी त्विति–इदञ्चिन्त्यमित्युक्तं परैः।

भैरवी– लादेश इत्यस्य लस्यादेश इति भ्रमनिवारणायाह–लकारसम्बन्धिन इति। एवञ्चादेशशब्दस्य सम्बन्धिनि लक्षणेति भावः। ददिर्गा इतीति–अत्र 'आदृगम.' इति सूत्रेण किकिनौ प्रत्ययौ। तयोश्च लिड्वद्भावविधानेन लिट्प्रयोज्यद्वित्वप्रयोजकत्वरूपसम्बन्धवत्तयाऽस्ति लकारसम्बन्धित्वमिति भावः। न च लान्तस्येत्येवास्तु लस्य स्थाने आदेशे कृतेऽपि स्थानिवद्भावेन लत्वव्यवहारादिति वाच्यम्। अल्विधित्वेन तदसम्भवात्। नन्वादेशपदं मूलेऽधिकमत आह–केवलस्येति। सृष्टिं कुर्वन् कुर्वाणेत्यत्र तृन्ग्रहणेन निषेधसिद्धेरेतस्य लादेशोदाहरणत्वकथनमधिकमत आह–तृन्प्रत्याहारेति। तस्य–लग्रहणस्य। अस्मिन् सूत्रे उकारोऽप्यत्र निर्दिश्यत

इति भाष्यादुकशब्दात् पूर्वमुकारो बोध्यः। स च प्रत्ययसाहचर्यात् प्रत्ययरूपस्य शब्दस्वरूपस्य विशेषणम्। उकारोऽप्यत्र निर्दिश्यत इत्यत्र कारप्रत्ययस्य प्रयोगेण तस्य वर्णरूपत्वबोधनात्। वर्णग्रहणे च सर्वत्रेति तदन्तविधिः। तथा चोकारान्तो यः प्रत्ययस्तदन्तेन योगे षष्ठी नेति फलितम्। तेन 'कन्यामलङ्करिष्णुः' इत्यादावपि निषेधसिद्धिः। उश्च उकश्च ऊकौ, लश्च ऊकौ चेत्यादिविग्रहः। व्याख्यानादिति– कन्यामलङ्करिष्णुरित्यादिप्रयोगदर्शनमूलकाद् व्याख्यानादित्यर्थः। उकान्तस्येतीति–'उकप्रतिषेधे कमेर्भाषायामप्रतिषेधः' इति वार्त्तिकस्वारस्यात्। तेन लक्ष्मीं कामयमान इत्यत्र प्रतिषेधो भवत्येव। एतदपवादतया–निष्ठेत्येतदपवादतया। अत एव–तत्सूत्रविहितक्तान्तस्य ग्रहणादेव। नात्र-भ्रान्तं देशमित्यादौ। एवेष्टेरिति–तद्बीजं तूक्तम्। भ्रमधातुश्च सकर्मकस्तस्मान्नपुंसके भावे इत्यनेन क्तस्यासम्भवात् गत्यर्थेत्यनेन भावे क्तप्रत्ययो यदा क्रियते तदा भ्रमणक्रियाकर्तृवाचकात् कर्तृकर्मणोरिति प्राप्तषष्ठ्या निष्ठेति निषेधो भवत्येवेति तृतीयैव भवतीति भावः। एवञ्च–पूर्वोक्तव्यवस्थासिद्धौ च। अकर्मकधातुविषये विशेषमाह–अहेः सृप्तमिति। अत्र सृप्धातोश्चलनमात्रमर्थः। परत्वेन– वार्त्तिकात् परत्वेन। शेषत्वविवक्षयैव–कर्त्तुः शेषत्वविवक्षयैव। कर्तृकर्मणोरिति तु निष्ठेति प्रतिषिद्धम्। भाष्ये प्रत्याख्यातमिति–तत्र हि 'क्तस्य च वर्त्तमाने नपुंसके भाव उपसंख्यानम्। क्तस्य च वर्त्तमाने नपुंसके भावे उपसंख्यानं कर्त्तव्यम्। नटस्य भुक्तम्। छात्रस्य हसितम्। मयूरस्य नृत्तम्। कोकिलस्य व्याहृतम्' इति। अत्र 'क्तस्य च वर्त्तमाने' इत्यस्योपादानमस्मिन् वार्त्तिके क्तस्येत्यस्यानुवृत्तिसूचनाय। 'नपुंसके भावे' इति विहितः क्तस्तु कालोदासीन एव, एवञ्च कालोदासीनभावविहितक्तान्तेन योग एव निष्ठेति निषेधं बाधित्वा नपुंसके भाव इति षष्ठी। यद्यप्यत्र कर्त्तुः शेषत्वविवक्षया सिध्यति। तथापि कर्तृत्वप्रकारकबोधे षष्ठ्यर्थमिदमिति वार्त्तिककाराशयः। ततो भाष्ये पूर्ववार्त्तिकं प्रत्याख्यातम्। 'शेषविज्ञानात् सिद्धम्। शेषलक्षणा अत्र षष्ठी भवति। शेष इत्युच्यते। शेषश्च कः। कर्मादीनामविवक्षा शेषः। सा चाविवक्षा सतोऽप्यविवक्षा भवति' इत्यनेन अकारेणोपपादिता। इदम्–नपुंसके भावे इत्येतत्। विशेषं वक्तुं पुनराह–वार्त्तिकेनेति। एतदिति–वार्त्तिकमित्यर्थः। क्तातिरिक्तेति–एतेन पदसंस्कारपक्षे 'भ्रान्तं

**देशम्' इत्यादौ चाविवक्षितकर्मत्वेन अकर्मकत्वाद् भावे भूते क्ते निष्ठान्तेन योगे षष्ठी नेति निषेधान्न षष्ठी; किन्तु पुनः कर्मयोगेऽपि द्वितीयैवेति परास्तम्। एवं रीत्याऽस्य साधने पदसंस्कारपक्षमादाय 'कटं कृतम्' इति प्रयोगस्यापत्तेः। ननु वार्त्तिकारम्भप्रत्याख्यानयोः फलभेदाभिप्रायेण पुनर्भाष्ये शङ्कितम् 'यद्येवमुत्तरत्र चातुःशब्द्यं प्राप्नोति। इदमहेः सृप्तम्। अत्राधिकरणे क्तः षष्ठी कर्त्तरि। इहाहिना सृप्तम्' अत्र भावे क्तः। इहाहिः सृप्तः अत्र कर्त्तरि। अहेः सृप्तमिति। अत्र भावे, अत्र शेषे षष्ठ्यपि प्राप्नोति। वार्त्तिकारम्भे तु क्तोऽधिकरणे चेति क्तविषये नपुंसके भावे क्त इत्यस्याप्रवृत्त्या वार्त्तिकेन कर्त्तरि षष्ठी न, शेषत्वविवक्षायाश्च तन्मतेऽभाव एवेति त्रैशब्द्यमिति चेन्न। इहाहेः सृप्तं ग्रामस्य पार्श्वे ग्रामस्य मध्ये इति। इष्यत एव चातुःशब्द्यमिति। अत्र 'ग्रामस्य पार्श्वे' इति सप्तम्युल्लेखेन अधिकरणस्यानभिहितत्वोपपत्त्यर्थं भाव एव प्रत्ययो विधेयस्तदा वार्त्तिकेन कर्त्तरि षष्ठी स्यादेव, इहेत्यस्य विवरणं ग्रामस्य पार्श्वे इति, इति फलभेदाभावात्। क्तातिरिक्तविषये इत्यनेनान्यत्र लादेशादिनिषेधविषये शेषत्वविवक्षाभावो बोधितः। तत्र साधकमाह–पूरणेति। असामर्थ्यात्–ब्राह्मणस्येत्यस्य स्वान्वययोग्य-नामार्थेऽन्वयेनासामर्थ्यात्। इदञ्चिन्त्यमिति–यदि ब्राह्मणस्येत्यस्य क्रियायामन्वयः स्यात्तदेदं सूत्रोदाहरणं युक्तं नामार्थान्वये तु क्रियायामनन्वयेन शेषे षष्ठीति वक्तुमशक्यमिति भावः।**

'ल'सम्बन्धी, उप्रत्यय, उक्प्रत्यय, अव्यय, निष्ठासंज्ञक प्रत्यय, खलर्थप्रत्यय और तृन् के योग में प्राप्त षष्ठी का प्रकृतसूत्र के द्वारा निषेध होता है। 'कर्तृकर्मणोः कृति' सूत्र में 'शेषे' पद का सम्बन्ध नहीं होता है, अत एव 'कर्तृकर्मणोः' इति सूत्रविहित षष्ठी कृद्योगलक्षणा षष्ठी कहलाती है। 'व्यवहृपणोः समर्थयोः' (पा.सू. २.३.५७) सूत्र में शेषे पदानुवर्त्तनपूर्वक कर्म की शेषत्वविवक्षा में षष्ठीविभक्ति का विधान होता है। इस प्रकार कर्मषष्ठी के दो भेद होते हैं— १. कृद्योगलक्षणा षष्ठी अर्थात् शुद्धकर्त्ता और शुद्धकर्म में विधीयमाना षष्ठी। २. कर्मशेषत्वविवक्षा षष्ठी, अर्थात् कर्म की शेषतया विवक्षापूर्वक विधीयमाना षष्ठी। शुद्धकर्त्ता और शुद्धकर्म में विधीयमाना षष्ठी का 'न लोकाव्यय.' शास्त्रद्वारा निषेध होता है। लकारमात्र की प्रयोगोपलब्धि असंभव होने के कारण कौमुदीकार ने 'ल'शब्द का 'लादेश' अर्थ किया है; किन्तु शेखरकार सूत्रोपदिष्ट लशब्द

का 'ल'सम्बन्धी अर्थ स्वीकार करते हैं। 'ल'सम्बन्धी अर्थ स्वीकार करने पर ही कृदन्त 'ददिः' पद के योग में अनुक्त 'गाः' कर्म में 'कर्तृकर्मणोः' सूत्रप्राप्त षष्ठी का 'न लोकाव्यय.' शास्त्रद्वारा निषेध होकर 'ददिर्गाः' प्रयोगोपपत्ति होती है। सिद्धान्तकौमुदीकार ने लादेश का **'कुर्वन् कुर्वाणो वा सृष्टिं हरिः'** उदाहरण दिया है। प्रकृतोदाहरण में लादेशकृत्प्रत्ययान्त कुर्वन् और कुर्वाणः पद के योग में अनुक्त 'सृष्टिम्' कर्म में 'कर्तृकर्मणोः.' शास्त्रप्राप्त षष्ठी का 'न लोकाव्यय.' सूत्रद्वारा निषेध होता है। एतत्सूत्रोपदिष्ट तृन्शब्द से तृन्प्रत्याहार का ग्रहण होता है। 'लटः शतृशानचा.' शास्त्रघटक तृशब्द से लेकर 'तृन्' (पा.सू. ३.२.१३५) सूत्रघटक नकारपर्यन्त तृन्प्रत्याहार होता है। 'कुर्वन् सृष्टिं हरिः' तृन्प्रत्याहारबोध्य शतृप्रत्यय के योग में प्राप्त षष्ठीविभक्ति के निषेध का उदाहरण नहीं है, अपितु लादेश के योग में षष्ठीनिषेध का उदाहरण है, यतो हि तृन्प्रत्याहार में शतृप्रत्यय की गणना नहीं है। अथ च जिस तृशब्द की तृन्प्रत्याहार में गणना की गई है, वह शतृप्रत्यय नहीं, अपितु शतृप्रत्यय का एकदेश है। 'आदृगमहनजनः किकिनौ लिट् च' (पा.सू. ३.२.१७१) सूत्रविहित किकिन्प्रत्ययों के योग में प्राप्त षष्ठी का निषेध करने के लिये सूत्रोपदिष्ट 'ल'शब्द का 'ल'सम्बन्धी अर्थ करना आवश्यक है, यतो हि 'कि' और 'किन्' प्रत्यय लादेश नहीं हैं; किन्तु लिड्वत् अतिदेश करने से लिट्सम्बन्धी कहलाते हैं। अर्थात् लिडादेश क्वसु और लिड्वदतिदेशविशिष्ट 'कि' और 'किन्' प्रत्ययों के योग में अनुक्त कर्ता और अनुक्त कर्म में प्राप्त षष्ठी का प्रकृतसूत्रद्वारा निषेध होता है। प्रकृतशास्त्रद्वारा उप्रत्यय के योग में प्राप्त षष्ठी का निषेध होता है। प्रत्ययग्रहणपरिभाषा से सूत्रोपदिष्ट 'उ' प्रत्यय का उकारान्तप्रत्यय अर्थ होता है, अत एव 'अलङ्कृञ्.' (पा.सू. ३.२.१३६) शास्त्रविहित उकारान्त इष्णुच् प्रत्यय के योग में 'कर्तृकर्मणोः.' शास्त्रप्राप्त षष्ठी का 'न लोकाव्यय.' सूत्रद्वारा निषेध होकर 'हरिम् अलङ्करिष्णुः' प्रयोगोपपत्ति होती है। 'संनाशंसभिक्ष उः' (पा.सू. ३.२.१६८) शास्त्रविहित 'उ'प्रत्यय यद्यपि उकारान्त नहीं है, तथापि व्यपदेशिवद्भाव से उकारान्तत्वोपपत्तिपूर्वक 'हरिं दिदृक्षुः' प्रयोग में भी प्राप्त षष्ठी का प्रकृतशास्त्रद्वारा निषेध सिद्ध होता है। हन्तीति विग्रह में 'लषपतपदस्थाभूवृषहनकमगमशृभ्य उकञ्' (पा.सू. ३.२.१५४) सूत्रद्वारा उकञ्प्रत्यय, 'हनस्तोऽचिण्णलोः' सूत्र से धातु को तकारान्तादेश, 'हो

हन्ते.' सूत्रद्वारा घत्व, 'अत उपधाया:' सूत्रद्वारा वृद्धिविधानपूर्वक निष्पन्न उकप्रत्ययान्त 'घातुक:' पद के योग में 'कर्तृकर्मणो:.' शास्त्रप्राप्त षष्ठी का 'न लोकाव्यय.' सूत्रद्वारा निषेध होकर 'दैत्यान् घातुको हरि:' प्रयोगोपपत्ति होती है।

**कमेरनिषेधः** (वा.) 'कमु कान्तौ' धातु से उकञ्प्रत्यय का विधानपूर्वक 'कामुक:' पदोपपत्ति होती है। अत एव 'न लोकाव्यय.' सूत्रद्वारा उकप्रत्ययान्त 'कामुक:' पद के योग में प्राप्त षष्ठी के निषेध का 'कमेरनिषेध:' वार्त्तिकद्वारा प्रतिषेध होने से 'कर्तृकर्मणो:.' सूत्रद्वारा षष्ठी होकर 'लक्ष्म्या: कामुको हरि:' प्रयोगोपपत्ति होती है। 'कमेरनिषेध:' वार्त्तिक की भाषा में ही प्रवृत्ति होती है, अत एव वेद में 'लक्ष्मीं कामुक:' प्रयोग भी साधु कहलाता है। निष्ठासंज्ञक प्रत्ययान्त के योग में प्राप्त षष्ठी का 'न लोका.' शास्त्रद्वारा निषेध होता है। 'हरि: दैत्यान् अवधीत्' स्थल में कर्म में क्तप्रत्यय करने पर 'निष्ठासंज्ञक क्तप्रत्ययान्त के योग में अनुक्त कर्त्ता में 'कर्तृकर्मणो: कृति' सूत्रद्वारा प्राप्त षष्ठी का 'न लोकाव्यय.' शास्त्रद्वारा निषेध होकर 'दैत्या हता हरिणा' प्रयोगोपपत्ति होती है।

यथा—कृदन्त के योग में प्राप्त षष्ठी के निषेधक 'न लोकाव्यय.' शास्त्र का 'कमेरनिषेध:' वार्त्तिक अपवादक है, तथैव 'नपुंसके भावे क्तस्य योगे षष्ठ्या उपसंख्यानम्' वार्त्तिक भी 'न लोकाव्यय.' शास्त्र का अपवादक है। अत एव 'छात्रस्य हसितम्' प्रयोगोपपत्ति होती है। हस् धातु से भाव में क्तप्रत्यय करने पर नपुंसकलिङ्ग में 'हसितम्' प्रयोगोपपत्ति होती है। अत एव 'कर्तृकर्मणो: कृति' सूत्रद्वारा अनुक्त कर्त्ता में प्राप्त षष्ठी के निषेधक 'न लोकाव्यय.' शास्त्र का 'नपुंसके भावे क्तस्य योगे षष्ठ्या उपसंख्यानम्' वार्त्तिकद्वारा अपवादत्वात् प्रतिषेध होने से षष्ठी की सिद्धि होती है। 'नपुंसके भावे क्त:' शास्त्रविहित क्तप्रत्यय के योग में ही 'नपुंसके भावे क्तस्य उपसंख्यानम्' वार्त्तिक की प्रवृत्ति होती है, न कि 'निष्ठा' सूत्रविहित क्तप्रत्ययान्त की नपुंसकलिङ्गवृत्तिता होने पर, यतो हि निष्ठाशब्दद्वारा विहित क्तप्रत्यय का ज्ञान लाक्षणिक है और 'नपुंसके भावे क्त:' शास्त्रविहित क्तप्रत्यय का ज्ञान प्रतिपदोक्त है, अत एव लक्षणप्रतिपदोक्त. परिभाषाद्वारा 'नपुंसके भावे क्त:' शास्त्रविहित क्तप्रत्ययान्त के योग में ही 'न लोकाव्यय.' शास्त्र का 'नपुंसके भावे क्तस्य योगे

षष्ठ्या उपसंख्यानम्' वार्त्तिकद्वारा बाध होता है। इसीलिए अर्थात् प्रतिपदोक्त परिभाषा के बल से 'नपुंसके भावे क्तस्य योगे षष्ठ्या उपसंख्यानम्' वार्त्तिक की 'नपुंसके भावे क्तः' सूत्रविहित क्तप्रत्ययान्त के योग में ही प्रवृत्ति स्वीकार करने से भ्रमुधातु से 'गत्यर्थाकर्मक.' (पा.सू. २.३.११२) शास्त्रविहित क्तप्रत्ययान्त नपुंसकलिङ्गवृत्ति 'भ्रान्तम्' के योग में 'देशम्' कर्म में प्राप्त षष्ठी का 'न लोकाव्यय.' शास्त्रद्वारा निषेध सिद्ध होता है।

प्र.— 'भ्रान्तं देशम्' प्रयोगघटक 'देशम्' कर्म की अविवक्षापूर्वक अकर्मक भ्रमुधातु से 'नपुंसके भावे क्तः' शास्त्रद्वारा क्तप्रत्यय का विधान संभव है, अत एव 'नपुंसके भावे क्तस्य षष्ठ्या उपसंख्यानम्' वार्त्तिकद्वारा 'न लोकाव्यय.' निषेध का प्रतिषेध होना चाहिए?

उ.— भाष्योक्त स्थल में ही कर्म की अविवक्षापूर्वक भाव में क्तप्रत्यय का विधान होता है। अर्थात् क्तप्रत्ययविधानोपरान्त क्तप्रत्ययान्त का स्वतन्त्रतया प्रयोग न हो, अपितु क्तान्त तदादि के साथ तद्धितादिवृत्ति करनी हो, वहीं पर कर्म की अविवक्षापूर्वक भाव में क्तप्रत्यय का विधान होता है। यथा— 'कृतपूर्वी कटम्'। प्रकृतस्थलोपदिष्ट क्तप्रत्ययान्त 'भ्रान्तम्' का स्वतन्त्रतया प्रयोग लोकप्रसिद्ध है, अत एव कर्म की अविवक्षापूर्वक भ्रमुधातु से भाव में क्तप्रत्ययविधान असंभव है।

प्र.— 'अहेः सृप्तम्' स्थल में चलनमात्रार्थक सृप्धातु से 'क्तोऽधिकरणे च' (पा.सू. ३.४.७६) सूत्रद्वारा भाव में क्तप्रत्यय का विधान है, 'नपुंसके भावे क्तः' सूत्रद्वारा नहीं। अत एव 'नपुंसके भावे क्तस्य योगे षष्ठ्या उपसंख्यानम्' वार्त्तिकद्वारा 'न लोकाव्यय.' शास्त्र का प्रतिषेध नहीं होता है। इसलिए 'अहेः सृप्तम्' प्रयोग में 'न लोका.' शास्त्रद्वारा षष्ठी का निषेध होना चाहिए?

उ.— 'अहेः सृप्तम्' स्थल में कृद्योगलक्षणा षष्ठी नहीं है, अपितु कर्त्ता की शेषतया विवक्षापूर्वक शेषषष्ठी का विधान है। 'न लोका.' शास्त्रद्वारा कृद्योगलक्षणा षष्ठी का निषेध होता है, न कि शेषषष्ठी का।

यथा—'अहेः सृप्तम्' स्थल में कर्त्ता की शेषतया विवक्षापूर्वक सम्बन्धषष्ठी का विधान होता है, तथैव 'छात्रस्य हसितम्' प्रयोग में अनुक्त कर्त्ता की शेषतया विवक्षा करने से ही सम्बन्धषष्ठी का विधान संभव है, 'नपुंसके

भावे क्तस्य योगे षष्ठ्या उपसंख्यानम्' वार्त्तिकोपदेश व्यर्थ है। 'नपुंसके भावे क्तस्य.' वार्त्तिकोपदेश व्यर्थीभूय ज्ञापन करता है कि **'कारकषष्ठी के निषेधविषय में शेषत्वविवक्षा नहीं होती है'**। अर्थात् 'कर्तृकर्मणोः कृति' शास्त्रप्राप्त षष्ठी का 'न लोकाव्यय.' शास्त्रद्वारा निषेध होने पर शेषत्वविवक्षा का समाश्रयण करके षष्ठी का विधान नहीं होता है।

प्र.— यदि कारकषष्ठी के निषेध के विषय में शेषतया विवक्षापूर्वक सम्बन्ध-षष्ठी का विधान नहीं होता है, तर्हि शेषत्वविवक्षा में सम्बन्धषष्ठी-विधानपुरःसर भाष्यकार ने 'नपुंसके भावे क्तस्य योगे षष्ठ्या उपसंख्यानम्' वार्त्तिक का खण्डन कैसे किया?

उ.— भाष्यकारद्वारा 'नपुंसके भावे क्तस्य योगे षष्ठ्या उपसंख्यानम्' वार्त्तिक के खण्डन से सिद्ध होता है कि—'क्तप्रत्ययातिरिक्त स्थल में कारकषष्ठी के निषेधविषय में कारक की शेषतया विवक्षा का आश्रयण नहीं होता है। 'कारकषष्ठी के निषेधविषय में क्तप्रत्ययस्थल में शेषतया विवक्षापूर्वक सम्बन्धषष्ठी का विधान होता ही है' पक्ष का 'पूरणगुण.' सूत्र के भाष्य से ध्वनन होता है। यथा—पूरणगुण. सूत्रद्वारा पूरणप्रत्ययान्त तदादि के साथ षष्ठ्यन्त के समास का निषेध होकर 'सतां षष्ठः' इत्यादि प्रयोगोपपत्ति होती है। इसी प्रसङ्ग में भाष्यकार ने 'सति किमुदाहरणम्'? प्रश्नोपस्थापनपूर्वक सत्संज्ञक प्रत्ययान्त का षष्ठ्यन्त के साथ समासनिषेध का 'ब्राह्मणस्य कुर्वन्' उदाहरण देकर कहा कि 'ब्राह्मणस्य कुर्वन्' प्रयोग में तो 'न लोकाव्यय.' शास्त्रद्वारा षष्ठी का निषेध होने से षष्ठ्यन्त सत्संज्ञक प्रत्ययान्त के साथ समास प्राप्त ही नहीं है, इसलिए 'पूरणगुण.' सूत्रद्वारा सत्संज्ञक प्रत्ययान्त का षष्ठ्यन्त के साथ समास का निषेध करना व्यर्थ है।

प्र.— ठीक है, 'कटं कुर्वन् ब्राह्मणस्य' प्रयोग में कर्मषष्ठी का 'न लोकाव्यय.' शास्त्रद्वारा निषेध होने पर भी शेषत्वविवक्षा में विधीयमान सम्बन्धषष्ठी का सत्संज्ञक प्रत्ययान्त के साथ समासनिषेध करने के लिये, 'पूरणगुण.' शास्त्र में सत्शब्दोपदेश आवश्यक है?

उ.— 'पूरणगुण.' शास्त्रविहित निषेध का 'सत्संज्ञक प्रत्ययान्त का षष्ठ्यन्त के साथ समासाभाव फल है; किन्तु 'ब्राह्मणस्य कटं कुर्वन्' प्रयोग में तो ब्राह्मण का कुर्वन् पदार्थ के साथ सामर्थ्य ही नहीं है। अतः सामर्थ्याभाव

होने से ही समास नहीं होगा, निषेध क्यों? निषेधविधानबल से ध्वनित होता है कि—'कारकषष्ठी के निषेधविषय में क्तातिरिक्त स्थल में कारक की शेषत्वविवक्षा नहीं होती है'।

तृन्-प्रत्याहारघटक शतृप्रत्ययान्त के योग में षष्ठीनिषेध का 'वेदमधीयन्' उदाहरण है। अधिपूर्वक 'इङ् अध्ययने' धातु से 'इङ्धार्योः शत्रकृच्छ्रिणि' (पा.सू. ३.२.१३०) सूत्र से शतृप्रत्यय, अनुबन्धलोप, इयङ्, सवर्णदीर्घविधानपूर्वक स्वादिकार्य होकर 'अधीयन्' प्रयोगोपपत्ति होती है। शतृप्रत्ययान्त 'अधीयन्' पद के योग में अनुक्त 'वेदम्' कर्म में प्राप्त षष्ठी का 'न लोकाव्यय.' शास्त्रद्वारा निषेध होता है।

प्र.— शतृप्रत्ययान्त के योग में प्राप्तषष्ठी का 'न लोकाव्यय.' शास्त्रद्वारा निषेध होता है, अत एव 'मुरस्य द्विषन्' प्रयोग में भी प्राप्त षष्ठी का निषेध होना चाहिए?

उ.— 'शतृप्रत्ययान्त द्विष्धातु के योग में 'न लोकाव्यय.' शास्त्र की प्रवृत्ति पाक्षिक होती है' इत्यर्थक 'द्विषः शतुर्वा' वार्त्तिकद्वारा 'न लोकाव्यय.' शास्त्रविहित निषेध के अभावस्थल में 'मुरस्य द्विषन्' प्रयोगोपपत्ति होती है। 'द्विष् अप्रीतौ' धातु से 'द्विषोऽमित्रे' (पा.सू. ३.२.१३१) सूत्रद्वारा शतृप्रत्ययविधानपूर्वक 'द्विषन्' पदोपपत्ति होती है।

'न लोकाव्यय.' सूत्रद्वारा कर्मषष्ठी और कर्तृषष्ठी का निषेध होता है, शेषतया विवक्षा में प्राप्त सम्बन्धषष्ठी का नहीं। **इदञ्चिन्त्यमिति परैः**। क्तातिरिक्त स्थल में कारक की सम्बन्धतया विवक्षा नहीं होती है; किन्तु भाष्यकार ने 'कटं कुर्वन् ब्राह्मणस्य' में शेषतया षष्ठी का विधान किया है, अतः 'क्तातिरिक्त स्थल में कारक की सम्बन्धतया विवक्षा नहीं होती है' यह ज्ञापन चिन्त्य है, अर्थात् यह **सिद्धान्तज्ञापन** नहीं है।

## अकेनोर्भविष्यदाधमर्ण्ययोः ।।२.३.७०।।

**भविष्यत्यकस्य भविष्यदाधमर्ण्यार्थेनश्च योगे षष्ठी न स्यात्। सतः पालकोऽवतरति। व्रजं गामी। शतं दायी।।इति कौमुदी।।**

**शे.— अत्र यथासंख्यं नेष्यते। अकस्याऽऽधमर्ण्येऽसम्भवादाह—भविष्यत्यकस्येति। वर्षशतस्य पूरक इत्यादौ 'एतत्कर्मकयाजनकर्त्तारः' इत्यर्थके 'अङ्ग यजतां लप्स्यन्तेऽस्य याजकाः' इत्यादौ च षष्ठी भवत्येव। कर्तृमात्रार्थके**

'ण्वुल्तृचौ' (पा.सू. ३.१.१३३) इति ण्वुलि पदान्तरसम्बन्धेन भविष्यत्वप्रतीतावप्यकस्य तत्रावृत्तेः 'तुमुन्ण्वुलौ.' (पा.सू. ३.३.१०) इति ण्वुल् तु भविष्यतीत्यधिकृत्य विधानाद् भविष्यदर्थक एवेति भावः। व्रजं गमीति-'गमेरिनिः' (उ.सू.) इत्यौणादिक इनिः। स च भविष्यति 'भविष्यति गम्यादयः' (पा.सू. ३.३.३) इत्युक्तेः। गामीति पाठे बाहुलकाद् वृद्धिः। शतं दायीति-'आवश्यकाधमर्ण्ययोः' (पा.सू. ३.३.१७०) इति णिनिः। आवश्यके णिनावप्ययं निषेधः। सूत्रे आधमर्ण्यपदेन तत्सूत्रार्थोपलक्षणात्। अत एव 'अंशं हारी' (पा.सू. ५.२.६९) इति निर्देशः सङ्गच्छते। तत्र आवश्यके णिनिः। न च तत्र भविष्यदर्थकत्वेन सिद्धिः, भूतवर्त्तमानयोरावश्यकत्वबोधनस्य वैफल्येन भविष्यत एव ततो बोधादिति वाच्यम्। वस्तुतो भविष्यतो बोधेऽपि तत्त्वेनाबोधात् णिनेस्तदर्थकत्वाभावाच्च। अत एव 'आवश्यंकारी कटस्य' इति वृत्त्युदाहृतं सङ्गच्छते। तत्र हि नानेन णिनिः, अवश्यंपदोपादानात्; किन्तु 'सुप्यजातौ' (पा.सू. ३.२.७८) इत्येवेति नव्याः।

भैरवी- नेष्यत इति-'अकस्य भविष्यतीति वक्तव्यम्। यवान् लावको व्रजति। ओदनं भोजको व्रजति। सक्तून् पायको व्रजति। इन आधमर्ण्ये चेति वक्तव्यम्। शतं दायी, सहस्रं दायी। ग्रामं गमी इति। अत्रैतादृशयोग-विभागेन व्याख्यानन्नेष्यत इति सिद्धम्। नन्वेवमुभयोरुभयत्र सम्भवोऽस्त्वित्यत आह-अकस्येत्यादि। कर्तृमात्रार्थक इति-अत्र मात्रपदेन भविष्यत्त्वव्यवच्छेदः। सूत्रे इति-अकेनोरिति सूत्रे इत्यर्थः। तत्सूत्रे इति-आवश्यकाधमर्ण्ययोरिति सूत्रे इत्यर्थः। अत एव-उपलक्षणादेव। भूतवर्त्तमानयोरिति-भूतस्य जातत्वेन तत्र तथा कथनं व्यर्थमेव। वर्त्तमाने च प्रमाणान्तरेणैव तथा निश्चयसम्भवादेतत्कथनानुपयोग इति भावः। तत्त्वेन-भविष्यत्त्वेन। अत एव-णिनेर्भविष्यदर्थकत्वाभावादेव। नव्या इति-अनेन 'सुप्यजातौ' इति सूत्रेण णिनिप्रत्ययेऽप्युक्तरीत्या भविष्यत्त्वप्रतीतावपि न दोष इति सूचितम्।

प्रकृतसूत्रद्वारा भविष्यदर्थक अकप्रत्ययान्त तथा भविष्यदर्थक एवं आधमर्ण्यार्थक णिनिप्रत्ययान्त के योग में प्राप्त षष्ठी का निषेध होता है। भाष्य में 'भविष्यत्यकस्य', 'इन आधमर्ण्ये च' इत्याकारक योगविभागाश्रयणपूर्वक

प्रकृतसूत्र का व्याख्यान करने से **'यथासंख्यमनुदेशः समानाम्' सूत्रसाहाय्यपूर्वक 'भविष्यदर्थक अक और आधमर्ण्यार्थक इनि.....' इत्याकारक अर्थोपपादन नहीं होता है**। अर्थात् आधमर्ण्य अर्थ में अकप्रत्यय का विधान न होने से आधमर्ण्य का अकप्रत्यय के साथ अन्वय नहीं होता है। यथा 'सतः पालकोऽवतरति' वाक्यघटक सत्शब्द से अकप्रत्ययान्त के योग में प्राप्त षष्ठी का प्रकृतसूत्रद्वारा निषेध होने से अनुक्त कर्म में द्वितीया होकर 'सतः' पदोपपत्ति होती है।

प्र.— अकप्रत्ययान्त के योग में प्राप्त षष्ठी का प्रकृतसूत्रद्वारा निषेध होता है। अत एव 'शतवर्षकर्मक पूरणकर्त्ता होगा' इत्यर्थक 'वर्षशतकस्य पूरको भविष्यति' वाक्य में तथा 'हे अङ्ग! यज्ञ करो। एतद् यज्ञकर्मक यजनकर्त्ता मिलेंगे' इत्यर्थक 'अङ्ग! यजतां लप्स्यन्तेऽस्य याजकाः' वाक्य में अकप्रत्ययान्त क्रमशः पूरकः एवं याजकाः पदों के योग में 'अकेनोर्भविष्यदाधमर्ण्ययोः' सूत्रद्वारा षष्ठी का निषेध होना चाहिए?

उ.— 'वर्षशतकस्य पूरको भविष्यति' एवं 'अङ्ग! यजतां लप्स्यन्तेऽस्य याजकाः' वाक्यों में प्रयुक्त 'पूरकः' एवं 'याजकाः' पदों की 'ण्वुल्तृचौ' सूत्रद्वारा कर्त्ता अर्थ में अक-(ण्वुल्) प्रत्ययविधानपूर्वक उपपत्ति होती है। भविष्यति एवं लप्स्यन्ते पदान्तरों का योग होने के कारण भविष्यदर्थ की प्रतीति होती है, पूरकः एवं याजकाः पदघटक अकप्रत्यय भविष्यदर्थक नहीं है। अत एव प्राप्त षष्ठी का 'अकेनोर्भविष्यदाधमर्ण्ययोः' शास्त्रद्वारा निषेध नहीं होता है। **'सतः पालकोऽवतरति' वाक्य में 'भविष्यति गम्यादयः' सूत्राधिकारस्थित 'तुमुन्ण्वुलौ.' (पा.सू. ३.३१०)** सूत्रद्वारा अक-(ण्वुल्) प्रत्ययविधानपूर्वकोपपन्न 'पालकः' पद का योग होने से प्राप्त षष्ठी का 'अकेनोर्भविष्यदाधमर्ण्ययोः' सूत्रद्वारा निषेध होता है।

व्रजं गमी—प्रकृतस्थल में गम्धातु से 'भविष्यति गम्यादयः' सूत्र-निर्देशानुसार 'गमेरिनिः' इत्यौणादिकसूत्रद्वारा भविष्यदर्थ में इनिप्रत्यय का विधान है। अत एव भविष्यदर्थक इनिप्रत्यय के योग में प्राप्त षष्ठी का 'अकेनोर्भविष्यदाधमर्ण्ययोः' सूत्रद्वारा निषेध होता है। व्रजं गामी प्रयोग में बाहुलकतया वृद्धि की उपपत्ति होती है।

शतं दायी—स्थल में दाधातु से आधमर्ण्यार्थ में 'आवश्यकाधमर्ण्ययोः' (पा.सू. ३.३.१७०) सूत्रद्वारा णिनिप्रत्ययविधानपूर्वक 'दायी' पदोपपत्ति

होती है। अत एव (णिनि) इनिप्रत्यय के योग में प्राप्त षष्ठी का 'अकेनोर्भविष्यदाधमर्ण्ययो:' सूत्रद्वारा निषेध होकर 'शतं दायी' प्रयोगोपपत्ति होती है। 'प्रकृतसूत्रद्वारा आवश्यकार्थ में विहित णिनिप्रत्यय के योग में भी प्राप्त षष्ठी का निषेध होता है'।

प्र.— 'अकेनोर्भविष्यदाधमर्ण्ययो:' शास्त्रद्वारा भविष्यदर्थक अकप्रत्यय तथा भविष्यदर्थक णिनि प्रत्यय और आधमर्ण्यार्थक णिनिप्रत्यय के योग में ही प्राप्त षष्ठी के निषेध का विधान है, आवश्यकार्थकणिनिप्रत्यय के योग में प्राप्त षष्ठी का प्रकृतसूत्रद्वारा निषेध कैसे?

उ.— 'अकेनोर्भविष्यदाधमर्ण्ययो:' शास्त्रोपदिष्ट आधमर्ण्य पद को आवश्यकार्थ का उपलक्षण स्वीकार करने से आवश्यकार्थक णिनिप्रत्यय के योग में प्राप्त षष्ठी का प्रकृतसूत्रद्वारा निषेध होता है। प्रकृतसूत्रोपदिष्ट आधमर्ण्यपद को आवश्यकार्थोपलक्षक स्वीकार करने से ही आवश्यकार्थक णिनिप्रत्ययोपपन्न 'हारी' पद के योग में प्राप्त षष्ठी का प्रकृतसूत्रद्वारा निषेध होकर 'अंशं हारी' (पा.सू. ५.२.६९) शास्त्रसमुपदिष्ट 'अंशम्' पद में द्वितीयाविधान संगत होता है।

प्र.— 'भविष्यदर्थक णिनिप्रत्यय के योग में प्राप्त षष्ठी का निषेध होता है' इस कथन से ही आवश्यकार्थक णिनिप्रत्यय के योग में भी प्राप्त षष्ठी का निषेध संभव है, यतो हि आवश्यकार्थक णिनिप्रत्यय का विधान भूतकाल या वर्त्तमानकाल में संभव न होने से पारिशेष्यन्याय से भविष्यदर्थ में ही होगा। इस प्रकार सूत्रसमुपदिष्ट आधमर्ण्यपद को आवश्यकार्थोपलक्षक स्वीकार करना व्यर्थ है?

उ.— वस्तुतस्तु 'व्रजं गामी' एवं 'अंशं हारी' प्रयोग से भविष्यदर्थविषयक बोध होने पर भी भविष्यत् अर्थ में णिनिप्रत्यय का प्रकृतस्थल में विधान नहीं है। अत एव सूत्रसमुपदिष्ट आधमर्ण्यपद को आवश्यकार्थोपलक्षक स्वीकार करना आवश्यक है। आधमर्ण्यपद आवश्यकार्थोपलक्षक है, अथ च आवश्यकार्थ में विहित णिनिप्रत्यय के योग में ही प्राप्त षष्ठी का प्रकृतसूत्रद्वारा निषेध होता है। अत एव 'अवश्यंकारी कटस्य' स्थल में आवश्यकार्थ की प्रतीति होने पर भी अवश्यम् उपपदक कृधातु से 'सुप्यजातौ णिनिस्ताच्छील्ये' (पा.सू.. ३.२.७८) शास्त्रद्वारा वर्त्तमान कर्त्रर्थक णिनिप्रत्यय के योग में प्राप्तषष्ठी का निषेध न होने से 'कटस्य' पद में षष्ठीविभक्ति का विधान सिद्ध होता है।।**इति नव्याः**।।

किन्तु नव्यों का प्रकृतकथन युक्तियुक्त नहीं है, यतो हि नव्य-वैयाकरण सूत्रोपदिष्ट आधमर्ण्यपद को आवश्यकार्थोपलक्षक स्वीकार करने में 'अंशं हारी' सूत्रसमुपदिष्ट द्वितीयान्त 'अंशम्' पदनिर्देश को प्रमाणतया प्रस्तुत करते हैं। सूत्रसमुदिष्ट द्वितीयान्त 'अंशम्' पदोपपत्ति सौत्रत्वात् हेतु से भी संभव है। अत एव अन्यथासिद्ध हेतु से आधमर्ण्यशब्द को आवश्यकार्थोपलक्षक स्वीकार करना असंगत है।

## कृत्यानां कर्त्तरि वा ।।२.३.७१।।

**षष्ठी वा स्यात्। मया मम वा सेव्यो हरिः। कर्त्तरीति किम्? गेयो माणवकः साम्नाम्। भव्येगेय. (पा.सू. ३.४.६८) इति कर्त्तरि यद्विधानाद् अनभिहितं कर्म। अत्र योगो विभज्यते।।कृत्यानाम्।। उभयप्राप्ताविति नेति चानुवर्त्तते। तेन नेतव्या व्रजं गावः कृष्णेन। ततः 'कर्त्तरि वा' उक्तोऽर्थः।।इति कौमुदी।।**

**शे.–** कृत्यानाम्–'कर्तृकर्मणोः.' (पा.सू. २.३.६५) इति नित्ये प्राप्ते विभाषा। कर्मनिवृत्त्यर्थं कर्तृग्रहणम्। अनुवर्त्तत इति–निषेधोऽयं कर्त्तरि कर्मणि च। 'कर्त्तरि वा' इति त्वनुभयप्राप्तिविषयमिति वृत्तिकैयटादयः। व्रजमित्यत्र 'गुणकर्मणि वेष्यते' इति विकल्पस्तु न, कृत्यातिरिक्ते चरितार्थस्य तस्य 'दोग्धव्या गावः पयः कृष्णेन' इत्यादौ गुणकर्मण उक्तत्वात् प्रधाने चरितार्थेनानेन परत्वाद् बाधात्।

**भैरवी–** निषेधोऽयमिति–कृत्यानामिति निषेध इत्यर्थः। कर्त्तरि कर्मणि चेति–विशिष्यानुपादानादुभयत्र निषेधोऽयमिति भावः। प्राचीनोक्तं खण्डयति–व्रजमिति। न चानभिहिताधिकारवैयर्थ्योपपादनावसरे 'कर्त्तव्यः कटः' इत्यत्र परत्वात् कृद्योगलक्षणषष्ठीप्रसङ्गादिति मनोरमायामभिहितम्, तस्य कथमुपपत्तिरिति वाच्यम्? यत्रोभयोः प्रयोगस्तत्रैवोभयोः प्राप्तिरिति 'कर्त्तव्यः कटः' इत्यत्र नास्य निषेधस्य व्यापार इत्याशयात्। न चोभयप्रयोग एव चेत् 'आक्रष्टव्या ग्रामं शाखा' इति कृत्यानामिति विभक्तसूत्रोदाहरणं भाष्ये उक्तम्, तस्या का गतिरिति वाच्यम्। कर्तृपदाश्चर्यपदाध्याहारेण तस्य भाष्यस्योपपत्तेः।

प्रकृतसूत्रद्वारा कृत्यप्रत्यय के योग में कर्त्ता में विकल्प से षष्ठीविभक्ति का विधान होता है। 'कृदतिङ्' शास्त्र से धातुविहित तिङ्भिन्न प्रत्ययों

की कृत्संज्ञा का विधान होता है। अत एव कृत्यप्रत्यय भी कृत्संज्ञक कहलाते हैं। इसीलिए कृत्यप्रत्ययान्त के योग में 'कर्तृकर्मणोः कृति' शास्त्रद्वारा कर्त्ता और कर्म उभयत्रापि प्राप्त षष्ठी को बाँधकर प्रकृतसूत्रद्वारा कर्त्ता में विकल्प से षष्ठी का विधान होता है, **अर्थात् कर्म में षष्ठीविधाननिवृत्त्यर्थ प्रकृतसूत्र में 'कर्त्तरि' पदोपदेश किया है।** 'कृत्यानां कर्त्तरि वा' शास्त्र का योगविभागसमाश्रयणपूर्वक 'कृत्यानाम्' इत्येकयोग एवं 'कर्त्तरि वा' इति द्वितीययोग स्वीकार करते हैं। 'कृत्यानाम्' योग में 'उभयप्राप्तौ कर्मणि' शास्त्र का एवं 'न लोकाव्यय.' शास्त्र से 'न' पद का अनुवर्त्तनपूर्वक 'कृत्यानाम्' योगद्वारा 'कृत्यप्रत्यय के योग में 'उभयप्राप्तौ कर्मणि' शास्त्रप्राप्त षष्ठी का निषेध होता है'। कृत्यप्रत्यय के योग में 'कर्तृकर्मणोः कृति' सूत्रद्वारा कर्त्ता और कर्म उभयत्र प्राप्त षष्ठी को बाँधकर 'उभयप्राप्तौ कर्मणि' शास्त्रविहित नियमद्वारा कर्म में षष्ठीविभक्ति की प्राप्ति होती है। 'उभयप्राप्तौ कर्मणि' शास्त्रप्राप्त षष्ठी का 'कृत्यानाम्' शास्त्रद्वारा निषेध हो जाता है। इसलिए कर्त्ता में नित्यप्राप्त षष्ठी का 'कर्त्तरि वा' योगद्वारा विकल्प से विधान होता है। यथा— 'मया मम वा सेव्यो हरिः', 'नेतव्या व्रजं गावः कृष्णेन कृष्णस्य वा' इति कौमुदीकारमतम्; किन्तु शेखरकार का कथन है कि 'कृत्यप्रत्यय के योग में कर्त्ता और कर्म उभयत्र प्राप्त षष्ठी का निषेध होता है'— कर्त्ता में प्राप्त षष्ठी का 'उभयप्राप्तौ कर्मणि' सूत्रविहित नियमद्वारा, अथ च कर्म में प्राप्त षष्ठी का 'कृत्यानाम्' योगद्वारा। अत एव जिस वाक्य में कृत्यप्रत्यय का योग होने पर कर्त्ता और कर्म दोनों का प्रयोग होता है, उस वाक्य में षष्ठीविभक्ति नहीं होती है; किन्तु जिस वाक्य में कर्त्ता और कर्म दोनों के मध्य कर्त्ता का ही प्रयोग है, वहाँ पर 'कर्त्तरि वा' न्यासद्वारा कर्त्ता में विकल्प से षष्ठीविभक्ति का विधान होता है। इति वृत्तिकैयटादयः।

प्र.— 'नेतव्या व्रजं गावः कृष्णेन' वाक्यघटक 'व्रजम्' इस गौणकर्म में 'गुणकर्मणि वेष्यते' वार्त्तिकद्वारा विकल्प से षष्ठीविभक्ति का विधान होना चाहिए?

उ.— 'नेतव्या व्रजं गावः' वाक्यघटक 'व्रजम्' इति गौणकर्म में षष्ठीविधायक 'गुणकर्मणि वेष्यते' वार्त्तिक का 'कृत्यानां कर्त्तरि वा' शास्त्रद्वारा 'परत्वात्' हेतु से बाध होने के कारण षष्ठीविभक्ति का विकल्प से विधान नहीं होता है। अर्थात् 'नेता अश्वस्य स्रुघ्नस्य स्रुघ्नं वा' इति कृत्यातिरिक्त

स्थल में 'गुणकर्मणि वेष्यते' वार्त्तिक चरितार्थ है, अथ च 'दोग्धव्या गावः पयः कृष्णेन' स्थल में गौणकर्म उक्त होने से 'कृत्यानां कर्त्तरि वा' शास्त्र चरितार्थ है। 'नेतव्या व्रजं गावः कृष्णेन' वाक्य में उभय की प्राप्ति होने से 'विप्रतिषेधे परं कार्यम्' शास्त्रबल से 'कृत्यानां कर्त्तरि वा' शास्त्रद्वारा 'गुणकर्मणि वेष्यते' वार्त्तिक का 'परत्वात्' हेतु से बाध होता है।

**तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम् ।।२.३.७२।।**

**तुल्यार्थैर्योगे तृतीया वा स्यात् पक्षे षष्ठी। तुल्यः सदृशः समो वा कृष्णस्य कृष्णेन वा। अतुलोपमाभ्यां किम्–तुला उपमा वा कृष्णस्य नास्ति।।इति कौमुदी।।**

**शे.– तुल्यत्वार्थैरित्यर्थे। अत एव 'अतुलोपमाभ्याम्' इति चरितार्थम्, अत एव पर्युदासादनव्यय योग एवेदं तेनेवशब्दयोगे न।**

**भैरवी– यथा वा श्रुते तुल्यशब्दस्य धर्मिवचनतया 'साम्यं कृष्णस्य कृष्णेन वा प्रद्युम्नः' इत्यादौ प्राप्तासङ्गतेः परिहारायाह–तुल्यत्वार्थैरिति। अत एव–भावप्रधाननिर्देशादेव। अन्यथा तुलोपमाशब्दयोस्तुल्यार्थकत्वासम्भवेन तयोरुपादानं व्यर्थमेव स्यादिति भावः। अत एव–अस्मादेव।**

तुल्यार्थक शब्दों का योग हो; किन्तु तुला और उपमा शब्दों का प्रयोग न हो, तदा प्रकृतसूत्रद्वारा उपमानवाचक शब्द से तृतीया और षष्ठी विभक्तियों का विधान होता है। तुल्यशब्द के योग में ही प्रकृतसूत्रद्वारा तृतीया और षष्ठी विभक्तियों का विधान अभीष्ट होने पर एकवचनान्त 'तुल्येन' पदोपदेश करने से ही कार्योपपत्ति संभव थी, 'तुल्यैः' इति बहुवचनान्तोपदेशसामर्थ्य से ही तुल्यपर्यायवाची शब्दों के योग में तृतीया और षष्ठी विभक्तियों का विधान संभव है, अतः अर्थग्रहण व्यर्थीभूय ज्ञापन करता है, कि **प्रकृतसूत्रोपदिष्ट तुल्यशब्द का 'तुल्यत्व' अर्थ लिया जाता है**। अर्थात् पदान्तरनिरपेक्ष तुल्यार्थक (जिनका स्वतन्त्र प्रयोग करने से ही तुल्यार्थ की प्रतीति होती हो) एतादृश शब्दों का ग्रहण होता है। अत एव पदान्तरसापेक्ष तुल्यार्थक इवादि अव्ययों का ग्रहण प्रकृतसूत्र में नहीं होता है। 'तुल्यैः' पदोपदेश करने पर तुल्यशब्द के पर्यायवाची शब्दों का ग्रहण होगा, तुला और उपमा तुल्यशब्द के पर्यायवाचक नहीं हैं। अतः 'तुल्यैः' पदोपदेश स्वीकार करने पर सूत्रोपदिष्ट

'अतुलोपमाभ्याम्' पर्युदास भी व्यर्थ होता है। प्रकृतसूत्रोपदिष्ट तुल्यशब्द का तुल्यत्व (सदृश) अर्थ स्वीकार करने पर सादृश्यबोधक तुला और उपमा शब्दों के योग में प्राप्त तृतीया और षष्ठी विभक्तियों का निषेध करने के लिये 'अतुलोपमाभ्याम्' पर्युदासोपदेश की संगति होती है।

**चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः ।।२.३.७३।।**

**एतदर्थैर्योगे चतुर्थी वा स्यात् पक्षे षष्ठी आशिषि। आयुष्यं चिरञ्जीवितं कृष्णाय कृष्णस्य वा भूयात्। एवं मद्रं भद्रं कुशलं निरामयं सुखं शम् अर्थः प्रयोजनं हितं पथ्यं वा भूयात्। आशिषि किम्–देवदत्तस्यायुष्यमस्ति। व्याख्यानात् सर्वत्रार्थग्रहणम्। मद्रभद्रयोः पर्यायत्वादन्यतरो न पठनीयः।।इति कौमुदी।।**

**शे.–** **चतुर्थी चाशिषीति–आशीर्विषयक्रियान्वय्यर्थकात् प्रातिपदिकात्तद्द्वारके आयुष्यादियोगे चतुर्थीषष्ठ्यावित्यर्थः। अत एवैतदर्थकचतुर्थ्याद्यन्तेन सुखहितादिभिर्न समासः। उभयोरपि क्रियान्वयेन परस्परसामर्थ्यात्। अत एव हि तेन चतुर्थीसमासविधानं तद्योगे चतुर्थीज्ञापकमित्याकरोक्तं सङ्गच्छते। यत्तु वृत्तावुद्देश्यविधेयभावेनानन्वयादाशीर्विषये च तथाऽन्वयान्न समास इति। तन्न। वृत्तावपि प्राप्तत्वादिपर्यालोचनेन 'लोहितोष्णीषाः' इत्यादौ तथान्वयदर्शनात्। भाष्ये तथान्वये वृत्तेरसाधुतया अनुक्तेश्चेति समासवादे मञ्जूषायां विस्तरः। व्याख्यानादिति–सूत्रेऽर्थशब्दः पृथङ्निमित्तमिति भावः। भाष्ये तु नैतद् दृश्यते।**

**भैरवी–** **चतुर्थी सम्प्रदाने इतिवच्चतुर्थी चाशिषीत्युक्तत्वेनाशीश्चतुर्थ्यर्थ इति भ्रमवारणायाह–आशीर्विषयेति। तद्द्वारकेति क्रियाद्वारकेत्यर्थः। अत एव–क्रियाद्वारकसम्बन्धस्वीकारादेव। उभयोरपीति–'देवदत्ताय सुखं भूयात्' इत्यादौ देवदत्तायेत्यस्य सम्बन्धित्वेन भूयादित्येतच्छब्दबोध्य-क्रियायामन्वयेन। अत एव–एतद्विहितचतुर्थ्यन्तस्य तेन समासाभावादेव। अनेन सूत्रेण यत्र चतुर्थी तत्र चतुर्थ्यन्तार्थस्योद्देश्यत्वमाशीर्विषयक्रियान्वयिनश्च विधेयत्वमिति वाक्यस्योद्देश्यविधेयभावावगाहिबोधजनकत्वं वृत्तौ च न तथेति वृत्तिविग्रहयोः समानार्थत्वाभावान्नैतद्विहितचतुर्थ्यन्तेन समास इति प्राचोक्तं खण्डयति–यत्त्विति। तथान्वयात्–उद्देश्यविधेयभावेनान्वयात्। न समासः–उद्देश्यविधेयभावेनान्वयबोधे पृथगुपस्थितेस्तन्त्रत्वादिति भावः। वृत्तावपि प्राप्ताप्राप्तविवेकेन यत्प्राप्तं तदुद्देश्यं यच्चाप्राप्तं तद्विधेयमिति**

**कल्पनयोद्देश्यविधेयभावेनान्वयेन वृत्तौ सर्वत्र तथाऽनन्वय इति नियमे मानाभाव इत्यभिप्रायेण दूषयति–तन्नेति। लोहितोष्णीषाः। इत्यादाविति– 'सोष्णीषा ऋत्विजः प्रचरन्ति' इति वाक्येनोष्णीषस्य प्राप्तत्वात् तदनुवादेन लौहित्यमात्रस्य विधानादिति भावः। वृत्तेस्तथा स्वभावे प्रमाणाभावमाह–भाष्य इति। मूले व्याख्यानादिति–प्राचां व्याख्यानादित्यर्थः। ननु सुखशब्दान्तद्वन्द्वं कृत्वाऽर्थशब्देन बहुव्रीहिसमासे कृते 'द्वन्द्वान्ते श्रूयमाणमिति न्यायेनैवार्थलाभे व्याख्यानादित्ययुक्तमत आह–सूत्रेऽर्थशब्द इति। तथा चार्थशब्दान्तो द्वन्द्व एवायं न त्वर्थशब्देन बहुव्रीहिरिति भावः। प्राचोक्तं दूषयति–भाष्ये त्विति।**

**आशीर्वाद की विषयता में आयुष्य, मद्र, भद्र, कुशल, सुख, अर्थ और हित एतदर्थक शब्दों के योग में प्रकृतसूत्रद्वारा विकल्प से चतुर्थीविभक्ति का विधान होता है।** यथा—आयुष्यं चिरञ्जीवितं कृष्णस्य कृष्णाय वा भूयात्।

प्र.— 'कृष्णस्य आयुष्यं भूयात्' स्थल में आयुष्यविषयिका जो भवनक्रिया तदन्वयी कृष्ण हैं, अर्थात् आयुष्य और कृष्ण दोनों का भवनक्रिया में अन्वय है। कृष्ण का आयुष्य के साथ अन्वय (योग) नहीं है, अत एव प्रकृतसूत्रद्वारा कृष्णप्रातिपदिक से चतुर्थी और षष्ठी विभक्तियों का विधान नहीं होना चाहिए?

उ.— यद्यपि कृष्ण का आयुष्य के साथ साक्षात् सम्बन्ध (योग) नहीं है; किन्तु आयुष्यविषयिणी भवनक्रिया में कृष्ण का अन्वय है। अर्थात् 'कृष्णकर्तृका आयुष्यविषयिणी भवनक्रिया' अर्थ में आयुष्य का भवनक्रिया के द्वारा कृष्ण के साथ परम्परया सम्बन्ध होने से प्रकृतसूत्रद्वारा कृष्णप्रातिपदिक से चतुर्थी और षष्ठी विभक्तियों का विधान होता है। 'आयुष्यं कृष्णाय भूयात्' इत्यादिवाक्यघटक आयुष्यादि का कृष्ण के साथ साक्षात् योग (अन्वय) न होने के कारण ही आयुष्यादि का कृष्ण के साथ समास भी नहीं होता है। 'चतुर्थी तदर्थार्थ.' सूत्रद्वारा चतुर्थ्यन्त का बलि, हित, सुख और रक्षित के साथ समासविधान किया है। सुखादि के साथ कृष्णादि का अन्वय न होने से चतुर्थीविभक्ति का विधान ही असंभव है, अत एव 'चतुर्थी तदर्थार्थ.' सूत्रद्वारा चतुर्थ्यन्त का सुखादि के साथ

समासविधानसामर्थ्य से ज्ञापित होता है कि 'परम्परासम्बन्ध से अन्वय होने पर भी 'चतुर्थी चाशिष्यायुष्य.' सूत्रद्वारा चतुर्थीविभक्ति का विधान होता है'।

प्रकृत प्रसङ्ग में वृत्तिकार का अभिमत है, कि वृत्ति (समास) और वाक्य (विग्रह) उभयत्र उद्देश्यविधेयभाव की प्रतीति होने पर ही उद्देश्यविधेयबोधक विग्रह में समास का विधान होता है। 'कृष्णाय आयुष्यं भूयात्' वाक्य में चतुर्थ्यन्तार्थ कृष्ण का आशीर्विषयक्रियान्वयी आयुष्य के साथ उद्देश्यविधेयभाव से अन्वय होने पर भी समासविधानानन्तर उद्देश्यविधेयभाव की प्रतीति न होने से समास नहीं होता है।

परन्तु वृत्तिकार का प्रस्तुत अभिमत तर्कसङ्गत नहीं है; यतो हि वाक्य में उद्देश्यविधेयभाव से अन्वय होने पर समासविधानानन्तर उद्देश्यविधेयभावावगाहिबोध न होने पर भी समासविधान होता है। यथा—'कृष्णं प्राप्तः' विग्रहवाक्य में कृष्ण और प्राप्ति का परस्पर उद्देश्यविधेयभाव से अन्वय होने पर भी समासविधानानन्तर उद्देश्यविधेयभाव की प्रतीति नहीं होती है, तथापि समास होता है, तथैव समासार्थकल्पित 'लोहिताश्च ते उष्णीषाः' विग्रहवाक्य से उष्णीष का उद्देश्य कर लौहित्यविधान का बोध होने पर भी समासविधानानन्तर उद्देश्यविधेयभाव की प्रतीति न होने पर भी समास होता है। भाष्यकार ने भी समासार्थ कल्पित विग्रहवाक्य से उद्देश्यविधेयभाव की परस्पर प्रतीति होने पर भी समासविधानानन्तर उद्देश्यविधेयभावावगाहिबोधाभावस्थल में समासविधान का निषेध नहीं किया है। ग्रन्थकार ने मञ्जूषा के समासवादप्रकरण में अतिविस्तारपूर्वक एतद्विषयक विवेचन किया है।

व्याख्यानादिति—प्रकृतसूत्रोपदिष्ट अर्थशब्द का आयुष्यादि के साथ अन्वयपुरःसर 'आयुष्यार्थक सुखार्थक........' रूप से प्रकृतसूत्रार्थोपपत्ति होती है। 'प्रकृतसूत्रविधीयमाना चतुर्थीविभक्ति की अर्थशब्द में पृथक् निमित्तता है' यह कथन उपयुक्त नहीं है, यतो हि भाष्य में अर्थशब्दनिष्ठ पृथङ्निमित्तता का उल्लेख उपलब्ध नहीं है।

**।।इति षष्ठी-विभक्तिः।।**

## अथ सप्तमी-विभक्तिः

### आधारोऽधिकरणम्।।१.४.४५।।

कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणसंज्ञः स्यात्।।इति कौमुदी।।

शे.– 'कारके' (पा.सू. १.४.२३) इत्यधिकारात् क्रियाजनके एतत्प्रवृत्त्योपस्थिततत्वादाधारः क्रियाया एव। तत्रेप्सिततमस्वतन्त्रपदाभ्यां साक्षात् क्रियाधारयोः कर्तृकर्मसंज्ञाभ्यां बाधात् परम्परया तदाश्रयस्य ग्रहणम्। परम्परा च कर्तृकर्मद्वारिकैव व्याख्यानादित्याह–कर्तृकर्मद्वारेति। यद्यपि कालस्य साक्षात् क्रियापरिच्छेदकत्वं तथापि तदधिकरणं कर्तृकर्मद्वारैव। तथैवानुभवात्। साक्षात्तदाधारत्त्वेऽपि आधारपदे स्वरितत्वप्रतिज्ञानात् परम्पराधारस्य ग्रहणम्। किञ्च तदाधारत्वे कर्तृत्वमेव तस्य स्यात्। कालः पचति भूतानीतिवत्। एवञ्च क्रियान्वयोऽप्यस्य कर्त्राद्यन्वयद्वारैव। यस्य यद्द्वारा कारकत्वं तस्य तद्द्वारैव क्रियान्वय इति व्युत्पत्तेः। अत एव 'अक्षशौण्डः' इत्यादौ समासः। अत्र आसत्त्यादिक्रियान्तर्भावेण बोधाननुभवात् क्रियाद्वारा सामर्थ्यमिति कैयटाद्युक्तं न युक्तम्। 'मूले वृक्षः कपिसंयोगी' इत्यादावस्तिक्रियामध्याहृत्य तस्याः स्वकर्तृकपिसंयोगिवृक्षद्वारा मूलवृत्तित्वादाधारत्वम्। विशिष्टवृक्षस्य मूलवृत्तित्वबोधेऽन्यत्रावयवे तद्विशिष्टवृक्षाभावप्रतीतेः। कपिसंयोगे तदवच्छेद्यत्वं फलतीति भावः।

भैरवी– तदाश्रयस्य–क्रियाश्रयस्य। व्याख्यानादिति–'कर्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम्। उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्'।। इति हर्याद्युक्तिमूलकव्याख्यानादित्यर्थः। हरिकारिकायां यदुक्तमसाक्षाद्धारयत् क्रियामिति तद्व्यभिचारोऽपि क्वचिदस्तीत्याह–यद्यपीति। ननु सम्भवति साक्षात्तदाधारत्वे कथं परम्परया तदाधारस्य ग्रहणमत आह–आधारपद इति। साक्षात्तदाधारस्य तु चैत्रादितुल्यत्वमेवेत्याशयेनाह–किञ्चेति। तत्र दृष्टान्तमाह–काल इति। एवञ्च–परम्परयाऽऽधारस्य ग्रहणसिद्धौ च। अस्य–आधारस्य। अत एव–पूर्वोक्तनियमस्वीकारादेव। कारकाणां क्रियान्वयित्वमिति नियमोऽप्यधिकरणविषये परम्परयैव। अक्षशौण्ड

**इत्यादाविति–यथा 'कटे शेते चैत्रः' इति वाक्यात् कटाधिकरणकचैत्रकर्तृकं शयनमिति बोधः, तथा 'अक्षेषु शौण्डः' इति वाक्यादपि अक्षाधिकरणिका शौण्डकर्तृका भवनक्रियेत्येवं रीत्या बोधात् साक्षादेव सप्तम्यन्तस्य शौण्डादिभिः सामर्थ्यमिति समाससंज्ञासिद्धिः। अत्र–अक्षशौण्ड इत्यादौ। न युक्तमिति–भाष्यकृता तस्यार्थस्यानुक्तेरिति शेषः। यत्र तु क्रियावाचकं पदन्न श्रूयते तत्रापि तदन्वययोग्यक्रियावाचकं पदमध्याहृत्य क्रियाधारत्वमुपपादनीयम्। तदाह–'मूले वृक्ष इति'। फलतीति–एवमभिधानेन कपिसंयोगादौ मूलाद्यवच्छेद्यत्वावगाहिनी मानसी प्रतीतिरित्युक्तम्। तत्र 'कटे शेते' 'स्थाल्यां पचति' इत्यादावाधारत्वेनाभिप्रेते कर्तृकर्मणोः संयोगोऽस्तीति तद्द्वाराऽऽधारत्वम्। क्वचित्त्ववच्छेदकता-सम्बन्धेन। 'शिरसि वेदना' 'पादे मे सुखम्' इत्यादौ यथा। क्वचित्तु प्रतियोगितानिरूपितानुयोगितया। यथा–'अभावे प्रतियोगितया घटः प्रकारोऽस्ति' इत्यादौ। एवमन्यत्राप्यूह्यम्।**

प्रकृतशास्त्र से कर्त्ता और कर्म के द्वारा क्रिया = (फल और व्यापार) के आधार की अधिकरणसंज्ञा का विधान होता है। 'आधारोऽधिकरणम्' सूत्र का 'कारके' सूत्राधिकार में उपदेश होने से 'कारके' पद का अधिकारतः लाभ होता है। इसीलिए क्रियाजनक आधार की अधिकरणसंज्ञा होती है, यतो हि किसका जनक आधार लिया जाय? इत्याकारिका आकाङ्क्षा होने पर अधिकारलब्ध कारक = क्रियाजनकघटक क्रिया का आधार लेते हैं। क्रिया अर्थात् फल और व्यापार के आधार की अधिकरणसंज्ञा फलित होती है। व्यापाराधारतया = व्यापाराश्रयतया व्यापाराधार की कर्तृसंज्ञा और फलाधारतया = फलाश्रयतया फलाश्रय की कर्मसंज्ञा प्राप्त है। अतः अधिकरणसंज्ञा को बाँधकर व्यापाराधार की कर्तृसंज्ञा और फलाधार की कर्मसंज्ञा हो जायेगी, तथा च 'कटे आस्ते, स्थाल्यां पचति' प्रयोगोपपत्ति असंभव है। **अत एव प्रयोगरूप व्याख्यान से कर्तृकर्मद्वारा क्रिया के आधार की अधिकरणसंज्ञा होती है**। इस प्रकार अधिकरणसंज्ञा तथा कर्तृ और कर्म–संज्ञा के उद्देश्य में भेद होने से परस्पर बाध्यबाधकभाव भी नहीं आता है।

प्र.— **'क्रियाभेदाय कालः स्यात्'** यह क्रिया किस काल में हुई? इत्याकारिका आकाङ्क्षा का उदय होने से क्रिया का आधार काल सिद्ध होता है।

इस प्रकार क्रिया के आधार काल की अधिकरणसंज्ञा होने से 'भूतानि कालः पचतीति वार्त्ता' वाक्यघटक 'कालः' पद में प्रथमा न होकर सप्तमी होनी चाहिए?

उ.— यद्यपि काल परिच्छेदकतया क्रिया का साक्षात् आधार है, तथापि 'आधारोऽधिकरणम्' शास्त्रघटक 'आधारः' पद का स्वरितत्वप्रतिज्ञाबल से एवं प्रयोगरूप व्याख्यान से 'आधारः' पद का कर्तृकर्मद्वारा आधार अर्थ स्वीकार करते हैं, अत एव क्रिया के साक्षात् आधार काल की अधिकरणसंज्ञा नहीं होती है। अथ च क्रिया का साक्षात् आधारतया काल में अन्वय होने से काल की कर्तृसंज्ञा और अधिकरणसंज्ञा दोनों की प्राप्ति होने पर भी परत्वात् हेतु से कर्तृसंज्ञाद्वारा अधिकरणसंज्ञा का बाध होने से 'भूतानि कालः पचति' प्रयोगोपपत्ति होती है। **'जिसकी यदन्वयद्वारक कारकत्वोपपत्ति होती है, उस कारक का तदन्वयद्वारक ही क्रिया के साथ योग होता है'**। अत एव कर्तृकर्मद्वारा क्रिया के आधार की अधिकरणसंज्ञा का विधान होने से अधिकरणकारक का क्रिया में अन्वय भी कर्तृकर्म द्वारा ही होता है। यथा—'कटे आस्ते देवदत्तः' वाक्यघटक कट की देवदत्तकर्त्रन्वयद्वारक क्रिया में अन्वय होने से अधिकरणसंज्ञा होती है, अत एव 'कटे' इत्यधिकरणकारक का भी देवदत्तान्वयद्वारक ही क्रिया में अन्वय होता है। अधिकरणकारक का कर्त्राद्यन्वयद्वारक ही क्रिया में अन्वय स्वीकार करने से 'अक्षेषु शौण्डः' स्थल में आसक्तिक्रिया का आधार शौण्ड (धूर्त्त) होने पर भी शौण्डद्वारक आसक्तिक्रिया का 'अक्षेषु' अधिकरण में अन्वय होने से सामर्थ्योपपत्तिपूर्वक समासविधान होकर 'अक्षशौण्डः' प्रयोगोपपत्ति होती है। 'अक्षेषु शौण्डः' विग्रहवाक्य में आसक्तिक्रियाध्याहारपूर्वक सामर्थ्योपपन्न होने से समासविधान संभव है। अत एव कैयटद्वारा 'अक्षेषु शौण्डः' विग्रहवाक्यघटक शौण्ड की आसक्त शौण्ड में लक्षणाश्रयणपूर्वक शौण्ड में आसक्तिक्रिया का अन्तर्भाव मानकर आसक्तिक्रिया में अक्षान्वय करके समासोपपादन करना असंगत है। क्रियाध्याहारपूर्वक अधिकरण का कर्त्ताद्वारा क्रिया में अन्वय होता है इसीलिए 'मूले वृक्षः कपिसंयोगी' स्थल में अस्तिक्रिया का अध्याहारपूर्वक अस्तिक्रियाश्रयकर्तृकपिसंयोगिवृक्षद्वारा अस्तिक्रिया के आधारभूत मूल की अधिकरणसंज्ञा होने से सप्तमीविभक्ति का विधान

होता है। कपिसंयोगित्वविशिष्ट वृक्ष का मूल में बोध होता है। अर्थात् कपिसंयोग वृक्ष के मूल में है, शाखादि में नहीं। यथा—'शिरसि मे वेदना' स्थल में वेदना का आधार शरीर है, अथ च शरीरद्वारा वेदना का आधार शिर होता है, तथैव अस्तिक्रिया वृक्ष में है, अथ च वृक्षद्वारा अस्तिक्रिया का आधार मूल सिद्ध होता है। अर्थात् अस्तिक्रिया अवच्छेदिका कहलाती है और मूल अवच्छेद्य।

### सप्तम्यधिकरणे च ।।२.३.३६।।

**अधिकरणे सप्तमी स्यात्। चकाराद् दूरान्तिकार्थेभ्यः। औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा। कटे आस्ते। स्थाल्यां पचति। मोक्षे इच्छास्ति। सर्वस्मिन्नात्मास्ति। वनस्य दूरे अन्तिके वा। 'दूरान्तिकार्थेभ्य.' (पा.सू. २.३.३५) इति विभक्तित्रयेण सह चतस्रोऽत्र विभक्तयः फलिताः। 'क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्' अधीती व्याकरणे। अधीतमनेनेति विग्रहे 'इष्टादिभ्यश्च' (पा.सू. ५.२.८८) इति कर्त्तरीनिः। साध्वसाधुप्रयोगे च। साधुः कृष्णो मातरि। असाधुर्मातुले। निमित्तात् कर्मयोगे। निमित्तमिह फलम्। योगः संयोगसमवायात्मकः। चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्। केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः।। (इति भाष्यम्) हेतौ तृतीयाऽत्र प्राप्ता तन्निवारणार्थमिदम्। सीमाण्डकोशः। पुष्कलको गन्धमृगः। योगविशेषे किम्। वेतनेन धान्यं लुनाति।।इति कौमुदी।।**

**शे.–** चकारादिति–प्रातिपदिकार्थे इति शेषः। त्रिधेति–तत्र सकलावयवव्याप्तौ व्यापकाधारत्वम्। यथा–तिलेषु तैलम्। इदमेव मुख्यमधिकरणम् इति 'स्वरितेन' (पा.सू. १.३.११) इत्यत्र 'साधकतमम्' (पा.सू. १.४.४२) इत्यत्र च भाष्ये स्पष्टम्। उप समीपे श्लेषः सम्बन्धस्तत्कृतमौपश्लेषिकम्, अत एव 'इको यणचि' (पा.सू. ६.१.७७) इत्यत्रादावौपश्लेषिके आधारे सप्तम्युक्ता 'संहितायाम्' (पा.सू. ६.१.७२) इति सूत्रे भाष्ये। तत्राजादिसामीप्यमेवेगादीनाम्। 'यन्मासेऽतिक्रान्ते दीयते तस्य मास औपश्लेषिकमधिकरणम्' इत्युक्तं 'तत्र च दीयते' (पा.सू. ५.१.९६) इति सूत्रे च भाष्ये। 'तस्मिन्नधिकम्' (पा.सू. ४.१.६७) इति सूत्रे च भाष्ये स्पष्टमिदम्। 'कटे आस्ते' इति तु नौपश्लेषिकोदाहरणं युक्तम्। उक्तभाष्यविरोधात्।

यद्वा, एकदेशावच्छेदेन श्लेषेऽपि श्लेषस्य समीपमुपश्लेषं तत्कृतमिति व्युत्पत्त्यौपश्लेषिकत्वमित्यभिप्रायेण तदुदाहरणम्। तदेतत् सर्वं गौणमधिकरणम्, 'गङ्गायां गावः' इत्यादिकञ्चेति। 'स्वरितेन' इत्यादौ भाष्ये स्पष्टम्। गौणोऽप्याधारादिः सप्तम्यादिशक्य एवेति बोध्यम्। एतदतिरिक्तं सर्वं वैषयिकम्। अधिकरणत्वशक्तिमांश्चाधिकरणविभक्त्यर्थः।

इन्विषयस्येति–इनो विषयस्येन्प्रकृतेः क्तान्तस्य कर्मणीत्यर्थः। तेन 'कृतपूर्वी कटम्' इत्यत्र न। उदाहरणे न कर्मणि क्तः। अभिहितत्वेन सप्तम्यनापत्तेः। किन्तु भावे। इष्टादिभ्यश्चेति–तत्र हि श्राद्धमनेनेत्यतोऽनेनेति वर्त्तते। अत्र कर्मशब्देन कालादिव्यतिरिक्तमेव गृह्यते व्याख्यानात्, तेन 'मासमधीती व्याकरणे' इत्यत्र नेति कैयटः।

साध्वसाधुप्रयोगे चेति–शेषषष्ठ्यपवादोऽयम्। 'साधुनिपुणाभ्याम्' (पा.सू. २.३.४२) इत्येव सिद्धे अनर्चार्थमत्र साधुग्रहणम्। तेन तत्त्वकथनेऽपि भवति। सूत्रेऽर्चाग्रहणन्तु निपुणार्थम्। निमित्तादिति–निमित्तवाचकात् सप्तमी भवति तस्य निमित्तस्य प्रत्यासत्त्या स्वान्वयिक्रियाकर्मणा योग इत्यर्थः। निमित्तञ्चात्र क्रियाफलम्, एवञ्च फलं सप्तम्यर्थः। चर्मणीति–चर्मणः फलत्वञ्च हननस्य तल्लाभेच्छाधीनत्वात्। कर्मसम्बन्धश्च स्वरूपसन्नेव निमित्तम्। द्वीपिचर्मणोरण्डकोशमृगयोश्च समवायः, इतरयोः संयोगः। 'मुक्ताफलाय करिणं रघुवीर' इत्यादौ 'क्रियार्थोपपदस्य' (पा.सू. २.३.१४) इति चतुर्थी। घ्नन्तीति शेषः। मुक्ताफलान्याहर्तुमित्यर्थः।

भैरवी– चकारेण विहिता या सप्तमी सा स्वार्थे न तु तस्मिन् वाक्येऽधिकरण इत्यस्य सम्बन्धः। वाक्यभेदसामर्थ्यात्तदभिप्रायेणाह–प्रातिपदिकार्थ इति। तत्र–तेषु मध्ये। सकलेति–सकलावयवावच्छेदेन व्याप्तिरित्यर्थः। व्याप्तावविति–अत्र व्यापनं व्याप्तिपदार्थः, स च व्याकत्वाभिन्न इत्यभिप्रायेणाह–व्यापकाधारत्वमिति। व्यापकत्वञ्च व्याप्यतानिरूपितम्। व्याप्यता च किन्निष्ठेत्याकाङ्क्षायामन्यस्यानुपस्थितत्वात् प्रकृत्यर्थनिष्ठैव ग्राह्या। प्रकृत्यर्थस्य व्याप्यता च समवायसम्बन्धेन। व्यापकत्वन्तु संयोगसम्बन्धावच्छिन्नमाधेयनिष्ठं विवक्षितमिति संयोगसम्बन्धा-वच्छिन्नाधेयनिष्ठव्यापकतानिरूपिता या समवायसम्बन्धावच्छिन्नव्याप्यता तद्विशिष्टाधारोऽभिव्यापकाधारः। 'तिलेषु तैलम्' इत्यत्र स्वावयवेषु समवायेन तिलस्य सत्त्वात्तेषु सर्वत्र तैलस्य संयोगेन

सत्त्वादुक्तव्याप्यव्यापकभावो द्रष्टव्यः। एवमेव 'दध्नि सर्पिः' इत्यादावपि ज्ञेयम्। मुख्यमिति-आधारमाधार्यः किं न्याय्यं मन्यते यत्र कृत्स्न आधारात्मा व्याप्तो भवति तेनेहैव स्यात्तिलेषु तैलम्, दध्नि सर्पिः, इति हि 'साधकतमम्' इति सूत्रभाष्येऽभिहितम्। अत एवेति-औपश्लेषिकपदस्योक्तार्थस्वीकारादेव। एवञ्च 'इको यणचि' इत्यादौ निमित्तत्वेनाभिप्रेतेऽच्पदार्थे इक्पदार्थसामीप्यादेवेगाधारत्वव्यवहारः। एतादृशाधारस्य गौणत्वव्यवहारः। अत एव 'साधकतमम्' इति सूत्रभाष्ये 'गङ्गायां गावः', 'कूपे गर्गकुलम्' इत्यत्र न स्यात्। कारकसंज्ञायान्तरतमयोगो न भवतीत्यत्रापि सिद्धं भवतीत्युक्तम्। औपश्लेषिकाधारस्याप्यधिकरणसंज्ञेत्यत्र भाष्यान्तरमपि साधकमाह-यन्मास इति। अत्र दानक्रियाया उपश्लेषः सम्बन्धः, स च स्वाधिकरणकालपूर्वत्वरूपः। औपश्लेषिकमप्यधिकरणं सप्तमीशक्य-मित्यत्र मानान्तरमाह-तदस्मिन्निति। तत्र हि 'एकादशाधिका अस्मिन् शते' इत्यत्र शतस्याधिकरणत्वाभावात् कथं सप्तमीत्याशङ्क्यौपश्लेषिक-मिदमधिकरणमित्युक्तम्। शतसमीपे हि ते भवन्ति, न तु तदन्तर्भूता इति। नौपश्लेषिकमिति-औपश्लेषिकपदस्यावयवमर्यादया योऽर्थः प्रतीयते सोऽत्र नास्तीति भावः। तदेतदाह-उक्तभाष्येति। सूत्रत्रयस्थभाष्येत्यर्थः। नन्वेवं 'कटे आस्ते' 'स्थण्डिले शेते' इत्यौपश्लेषिकाधारे सप्तमीति ग्रन्थानां का गतिरिति चेत्तेषामपि यथाकथञ्चित्तत्तदभिप्रायेणाह-यद्वेति। एतत्सर्वमिति-औपश्लेषिकं सर्वाधिकरणमित्यर्थः। गङ्गायां गाव इत्यादिकञ्चेति-आदिना 'कूपे गर्गकुलम्' इत्यस्य सङ्ग्रहः। अत्र यद्यपि गङ्गापदस्य सामीप्यात्तीरे गङ्गात्वारोपात् प्रवृत्तिस्तथापि न सर्वावयवावच्छेदेन गोसम्बन्ध इति भावः। शक्य एवेति-'आधारोऽधिकरणम्' इति सूत्रस्थाधारपदे स्वरितत्वप्रतिज्ञानात्। अधिकः कारोऽधिकार इत्यर्थाश्रयणात्। एतदतिरिक्तमिति-उभाभ्यां भिन्नमित्यर्थः। यथा 'मोक्षे इच्छास्ति'। 'खे शकुनयः' इत्यादौ। उक्तद्वयातिरिक्तत्वेन सर्वसङ्ग्रहो न तु विषयतासम्बन्धावच्छिन्नाधिकरणमेवेत्याग्रहः। एवञ्च वैषयिकपदमुभयातिरिक्ते रूढमिति भावः। शक्तिमांश्चेति चकारेण क्रियाधिकरणभावसम्बन्धपरिग्रहः। तेन-इन्विषयस्येत्यस्योक्तार्थकरणेन। इत्यत्र नेति-यदि तस्येन्नन्तघटकधात्वर्थस्येत्यर्थः स्यात्तदा 'कृतपूर्वी कटम्' इत्यादावपि स्यादिति भावः। अभिहितत्वेनेति-'सप्तम्यधिकरणे

च' इति सूत्रेऽस्य वार्त्तिकस्य पाठादनभिहित इत्यस्य सम्बन्धः। यन्मूले कर्त्तरीत्युपात्तं तल्लाभोपायमाह–तत्र हीति। ननु प्राकृतमेवेदं कर्मेति रीत्या कालस्यापि कर्मत्वात्तस्मिन्नपि सप्तमी स्यादिति 'मासमधीती व्याकरणे' इत्यत्र मासपदादपि सप्तमी स्यादत आह–'अत्र कर्मशब्देनेति'। व्याख्यानादिति–अधीत इत्येतावन्मात्रोपादाने वेदादिरूपपदसन्दर्भाकाङ्क्षानियमोऽस्तीत्येतादृशं कर्मान्तरङ्गमित्येतन्मूलकव्याख्यानादित्यर्थः। कैयट इति–अत्रारुचिबीजन्तु कालादिकर्मणां सकर्मकाकर्मकसाधारण्येन धातुसामान्यकर्मतया तत्त्यागे मानाभावः। पदसन्दर्भस्यापि शब्दत्वात्मकसामान्यरूपेण प्रकृतधात्वर्थकर्मतया कस्मिन्निति विशेषाकाङ्क्षापि सामान्यज्ञानपूर्विका भवतीति तस्यापि ग्रहणमिति। एतद्वार्त्तिकव्याख्यानोत्तरं मूले 'निमित्तात् कर्मयोगे' इति 'यस्य च' इति च सूत्रे व्याख्याय 'साध्वसाधुप्रयोगे' इति वार्त्तिकं व्याख्यातम्, तन्न युक्तम्। भाष्ये क्तस्येन्विषयस्येत्येतद्व्याख्यानानन्तरं साध्वसाधुप्रयोगे चेत्यस्य व्याख्यानादिति तेनैव क्रमेण व्याचष्टे–साध्वसाध्विति। तत्त्वकथनेऽपीति–अर्चा हि यत्राविद्यमानस्यापि धर्मस्य पूजनीयत्वद्योतनाय बोधनं तत्र भवतीति भावः। निपुणार्थमिति–अत एव मूले–'अर्चायां किम्? निपुणो राज्ञो भृत्यः' इत्येवोपात्तम्। इतोऽग्रे अर्हाणामित्येतद्व्याख्यानानन्तरं भाष्यीयक्रमानुरोधेन व्याख्यानमुचितम्।

मूलकारानुरोधेन तु व्याचष्टे–निमित्तादितीति। फलं सप्तम्यर्थ इति–अनिर्दिष्टार्था इति न्यायादिति भावः। तल्लाभेच्छाधीनत्वादिति–एवञ्च फलेच्छया उपायेच्छाप्रयोजकत्वस्य प्रसिद्धत्वाद् हननरूपोपायेच्छाप्रयोजकेच्छाविषयचर्मलाभस्यैव मुख्यफलत्वम्। चर्मणस्तु लाभकर्मत्वात् फलत्वमुपचरितं बोध्यम्। 'चर्मणि द्वीपिनं हन्ति' इत्यादिभाष्योदाहरणादिति भावः। स्वरूपसन्नेव निमित्तमिति–न तु तस्य शाब्दबोधविषयत्वपर्यन्तमाग्रह इति शेषः। कर्मयोग इत्यत्र योगपदं सम्बन्धवाचि स च सम्बन्धः संयोगसमवायान्यतरात्मकस्तदभिप्रायेणाह–द्वीपिचर्मणोरित्यादि। अण्डकोशमृगयोरिति–यद्यपि मृगशब्दस्याल्पाच्तरत्वम्, तथापि 'सीम्नि पुष्कलको हतः' इति भाष्ये येन क्रमेणोपादानं कृतं तेनैव क्रमेण व्याख्यानमुचितमित्यभिप्रायेण पूर्वनिपातप्रकरणं 'समुद्राभ्राद् घः' इति सौत्रनिर्देशेनानित्यमतो वैपरीत्येन व्याख्यातम्। मुक्ताफलायेत्यत्र चतुर्थ्या असाधुत्वभ्रमनिवारणायाह–मुक्ताफलायेति।

प्रकृतसूत्रद्वारा अधिकरण में सप्तमीविभक्ति का विधान होता है। अथ च सूत्रोपदिष्ट चकारसामर्थ्य से दूरार्थक एवं अन्तिकार्थक शब्दों के योग में भी सप्तमीविभक्ति का विधान होता है। दूरार्थक एवं अन्तिकार्थक शब्दों के योग में 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' सूत्र से षष्ठी, पञ्चमी और द्वितीया विभक्तियों का विधान होने से दूरार्थक एवं अन्तिकार्थक शब्दों के योग में चार (द्वितीया, पञ्चमी, षष्ठी एवं सप्तमी) विभक्तियाँ फलित होती हैं। 'देवदत्तः दूरे अस्ति' इत्यादि स्थल में सूत्रोपदिष्ट चकारसामर्थ्य से विधीयमान सप्तमीविभक्ति प्रातिकार्थ में होती है। **औपश्लेषिक, वैषयिक और अभिव्यापक भेद से आधार तीन प्रकार का होता है**। मुख्य और गौण भेद से पुनः आधार के दो भेद होते हैं। सकलावयवव्याप्त आधार को मुख्याधार कहते हैं, यथा—'तिलेषु तैलम्'। 'गङ्गायां घोषः' गौणाधार का उदाहरण है, यतो हि प्रकृतस्थल में गङ्गाशब्द की गौण 'तट' अर्थ में लक्षणा स्वीकार करनी होती है। इस प्रकार औपश्लेषिक = गौणाधार और अभिव्यापक एवं वैषयिक भेद से आधार के तीन भेद होते हैं। प्रकृतविश्लेषण 'स्वरितेनाधिकारः' (पा.सू. १.३.११) एवं 'साधकतमम्' (पा.सू. १.४.४२) सूत्र के भाष्य में स्पष्ट है। औपश्लेषिक, वैषयिक एवं अभिव्यापक भेद से विभक्त आधारों के मध्य औपश्लेषिकाधारविषयक विवेचनप्रसंग में ग्रन्थकार का कहना है कि— 'उपशब्द का सम्बन्ध अर्थ है, श्लेषशब्द का समीप अर्थ है। 'उपश्लेषेण कृतः' विग्रह में ठक्प्रत्ययविधानपूर्वक औपश्लेषिकशब्दोपपत्ति होती है। अत एव 'सामीप्यवृत्तित्वसम्बन्धकृत आधार को 'औपश्लेषिक आधार' कहते हैं। अर्थात् समीप में क्रिया का रहना भी आधार कहलाता है, इसीलिए 'इको यणचि' (पा.सू. ६.१.७७) शास्त्रघटक अचि पद में औपश्लेषिकाधार- सप्तमी का विधान संगत होता है। यतो हि 'अच्-पदबोध्य भी वर्ण हैं और इक्पदबोध्य भी वर्ण हैं। 'वर्णेषु वर्णानङ्गीकारात्' नियमानुसार अच् के ऊपर तो इक् बैठ नहीं सकते हैं। अच् के अव्यवहितपूर्वसमीप इक् की वृत्तिता संभव है, अतः समीपवृत्तित्व क्रिया का आधार अच् कहलाता है। प्रस्तुत विवरण 'संहितायाम्' (पा.सू. ६.१.७२) सूत्र के भाष्य में स्पष्ट है। समीपवृत्तिक्रियाधार को औपश्लेषिकाधार कहते हैं, इसीलिए 'यन्मासेऽतिक्रान्ते दीयते' स्थल में मास की अधिकरणसंज्ञा होती है, अन्यथा 'मास बीतने पर देता है'

इत्यर्थवाग्विवक्षा में मास दानक्रिया का आधार न होने से मास की अधिकरणसंज्ञा असंभव थी। समीपवृत्तिक्रियाधार को औपश्लेषिकाधार स्वीकार करने से ही उत्तरकालवृत्तिक्रियाधार के अव्यवहितपूर्ववर्त्ती काल की अधिकरणसंज्ञा होती है। अर्थात् जिस मास में वह देता है, उससे अव्यवहितपूर्ववर्त्ति मास दानक्रियाधार मास के समीप होने के कारण समीपवृत्ति क्रिया का आधार कहलाता है। प्रस्तुत विवरण 'तत्र च दीयते' एवं 'तदस्मिन्नधिकम्' सूत्रों के भाष्य में स्पष्ट है।

प्र.— क्रिया का समीप में रहना औपश्लेषिकाधार कहलाता है, अत एव 'कटे आस्ते' वाक्यघटक 'कटे' पद में भाष्यानुसार औपश्लेषिकाधार में सप्तमीविधान असंगत है, अथ च स्थितिक्रिया देवदत्तवृत्ति होने से भी 'कटे' पद में औपश्लेषिकाधार में सप्तमीविधान असंगत है?

उ.— **अथवा**—एकदेश में क्रिया का सम्बन्ध होने पर भी क्रिया का उपश्लेष कहलाता है, अतः तत्कृत आधार को भी औपश्लेषिकाधार कहते हैं, अर्थात् एकदेश में क्रिया का सम्बन्ध होने पर भी क्रिया की समीपवृत्तिता मानी जाती है, इसीलिए 'कटे आस्ते' वाक्यघटक 'कटे' पद में औपश्लेषिकाधार में सप्तमीविधान होता है। कट का एकदेश मुख्याधार और अवशिष्ट कट गौणाधार कहलाता है। 'गङ्गायां गावः' स्थल में भी औपश्लेषिकाधार में सप्तमीविधान है, यतो हि गङ्गासमीपदेश में गौएँ बैठी हैं। 'औपश्लेषिकाधार को गौणाधार कहते हैं' इसका प्रतिपादन 'स्वरितेनाधिकारः' सूत्र के भाष्य में भी स्पष्ट है। गौणाधार भी सप्तमी का शक्य ही है। औपश्लेषिक और अभिव्यापक आधारातिरिक्त आधार को वैषयिकाधार कहते हैं। आधारविहित सप्तमी का अधिकरणत्वशक्तिमान् अर्थ होता है। **क्तस्येन्विषयस्येति**—प्रकृतवार्त्तिकद्वारा 'इन्विषयक क्त' (अर्थात् क्तप्रत्ययान्त से जहाँ इन्प्रत्यय का विधान होता हो) तत्र क्तान्तप्रकृतिक इन्नन्तार्थनिरूपित अनुक्त कर्म में सप्तमी विभक्ति होती है। यथा—अधीती व्याकरणे। कर्म की अविवक्षा में अधिपूर्वक इङ् अध्ययने धातु से भाव में क्तप्रत्यय, भावक्तान्त अधीतशब्द का स्वतन्त्र प्रयोग कहीं भी नहीं होता है, अत एव 'इष्टादिभ्यश्च' सूत्रद्वारा 'अधीतम् अनेन' विग्रह में इनिप्रत्ययविधानपूर्वक 'अधीती' पदोपपत्ति होती है। यद्यपि 'इष्टादिभ्यश्च' सूत्र में 'अनेन' पदोपदिष्ट नहीं है, तथापि 'श्राद्धमनेन.'

सूत्र से 'अनेन' पदानुवर्त्तनपूर्वक 'इष्टादिभ्यश्च' सूत्रद्वारा करण में इनिप्रत्यय का विधान होता है। तद्धितवृत्ति करने के उपरान्त 'इसने किस विषय़ का अध्ययन किया है?' इत्याकारिका आकाङ्क्षा होने पर 'व्याकरणम्' कर्म का अध्याहार किया जाता है। अर्थात् तद्धितवृत्त्युपरान्त 'व्याकरणम्' कर्म की उपस्थिति होती है। षष्ठीविभक्ति का विधान कृद्वृत्त्योपस्थित अनुक्त कर्म में होता है, अत एव प्रकृतस्थल में षष्ठीविभक्ति न होकर 'क्तस्येन्विषयस्य' वार्त्तिकद्वारा सप्तमीविधानपूर्वक 'अधीती व्याकरणे' प्रयोगोपपत्ति होती है। प्रकृतवार्त्तिकद्वारा क्तान्तप्रकृतिक जो इन्प्रत्यय तदन्तार्थनिरूपित कर्म में सप्तमी का विधान होता है, अत एव 'कृतपूर्वी कटम्' में सप्तमी नहीं होती है। इन्नन्तपदघटकधात्वर्थक्रियानिरूपित कर्म में सप्तमी का विधान करने पर 'कृतपूर्वी कटम्' प्रयोग में भी सप्तमी होने लगती।

प्र.— यथा 'अधीती व्याकरणे' प्रयोग में 'क्तस्येन्विषयस्य' वार्त्तिकद्वारा 'व्याकरणम्' में सप्तमी का विधान होता है, तथैव 'मासमधीती व्याकरणे' प्रयोगघटक 'मासम्' कर्म में भी प्रकृतवार्त्तिकद्वारा सप्तमी होनी चाहिए?

उ.— लक्ष्यानुरोधरूप व्याख्यान से कालव्यतिरिक्तकर्म में ही 'क्तस्येन्विषयस्य' वार्त्तिकद्वारा सप्तमी का विधान होता है, अत एव 'मासम् अधीती व्याकरणे' प्रयोगघटक 'मासम्' कर्म में सप्तमीविभक्ति नहीं होती है। इति कैयटाशयः।

**साध्वसाधुप्रयोगे च**—साधु और असाधु शब्दों के योग में जिसके प्रति साधु अथवा असाधु हो तद्वाचक प्रातिपदिक से सप्तमीविभक्ति होती है। यथा—'साधुः कृष्णो मातरि, असाधुर्मातुले' अर्थात् कृष्ण माता के प्रति साधु और मामा के प्रति असाधु हैं। प्रकृतस्थल में मातृसम्बन्धि साधुता और मातुलसम्बन्धिनी असाधुता की अभिव्यक्ति होने से शेषषष्ठी प्राप्त थी, उसका बाध होकर प्रकृतवार्त्तिकद्वारा सप्तमीविभक्ति का विधान होता है।

प्र.— 'साधुः कृष्णो मातरि' वाक्य में साधु शब्द का योग होने से 'साधुनिपुणाभ्यामर्चायामप्रतेः' (पा.सू. २.३.४२) सूत्रद्वारा ही सप्तमीविधान संभव है, अत एव वार्त्तिक में साधुशब्दोपदेश अनावश्यक है?

उ.— 'साधुनिपुणाभ्यामर्चायामप्रते:' शास्त्रोपदिष्ट अर्चाशब्द 'अर्चा में निपुण' अर्थ का बोधक है। अत एव 'साधुनिपुणाभ्याम्.' सूत्रद्वारा अर्चा में निपुण अर्थ गम्यमान होने पर साधुशब्द के योग में सप्तमीविभक्ति का विधान होता है। तत्त्वकथन अर्थात् सज्जनतामात्र गम्यमान होने पर सूत्रद्वारा साधुशब्द के योग में सप्तमीविभक्ति का विधान संभव नहीं है। तत्त्वकथन में साधुशब्द का योग होने पर सप्तमीविधान करने के लिये वार्त्तिक में साधुशब्द का उपदेश किया है। वार्त्तिक में साधुशब्दोपदेश करने पर 'साधुनिपुणाभ्याम्.' सूत्र में साधुशब्दोपदेश अनावश्यक है, यतो हि तत्त्वकथन (सज्जनता) और अर्चा उभय अर्थ गम्यमान होने पर साधु शब्द के योग में वार्त्तिकद्वारा ही सप्तमीविभक्ति का विधान संभव है।

**'निमित्तात् कर्मयोगे'** प्रकृतवार्त्तिकद्वारा कर्म के साथ योग होने पर निमित्तवाचक शब्द से सप्तमीविभक्ति का विधान होता है। यथा—'चर्मणि द्वीपिनं हन्ति' चर्म के लिये द्वीपि को मारता है, अर्थात् चर्महेतुक द्वीपि का हनन है। अत: हेतुतृतीया की प्राप्ति थी, उसका बाधपूर्वक प्रकृतवार्त्तिक द्वारा सप्तमीविभक्ति का विधान होता है। योग सम्बन्ध को कहते हैं। प्रकृतस्थल में दो सम्बन्धों का ग्रहण होता है—१. समवाय, २. संयोग। निमित्त का कर्म के साथ योग होने पर निमित्तवाचक से सप्तमी का विधान होता है। निमित्तशब्द से क्रिया के फल का ग्रहण होता है। निमित्त का स्वान्वयिक्रियानिरूपित कर्म के साथ सम्बन्ध गृहीत होता है। स्वान्वयिक्रियाकर्मेति पदघटक स्वशब्द से क्रिया का फल लिया जाता है। यथा—'चर्मणि द्वीपिनं हन्ति' स्थल में हननक्रिया का फल 'चर्म' है। यद्यपि हननक्रिया का फल 'प्राणवियोग' होता है; किन्तु चर्मलाभेच्छाधीन हनन होने के कारण हननक्रिया का फल 'चर्म' सिद्ध होता है। चर्म का हननक्रिया में कार्यकारणभावसम्बन्ध से अन्वय होता है। इस प्रकार सप्तमीविभक्ति का 'फल' अर्थ होता है, अर्थात् 'चर्मणि' पद का 'चर्माभिन्न फल' अर्थ है। कर्म का निमित्त के साथ स्वरूपसत् सम्बन्ध लिया जाता है। यथा—'अग्नि दाहक है' इस ज्ञानमात्र से ही अग्नि नहीं जलाती, अपितु 'अग्नि दाहक है' इसका ज्ञान न होने पर भी अग्नि जलाती ही है, अर्थात् अग्नि में दाहकता शक्ति स्वरूपत: रहती है। उसी प्रकार निमित्त का कर्म के साथ स्वरूपसत् सम्बन्ध रहता

है। चर्म का द्वीपि के साथ और अण्डकोश का पुष्कल मृग के साथ समवाय सम्बन्ध है। अथ च केश का चमरी के साथ और दन्त का कुञ्जर के साथ संयोग सम्बन्ध है।

प्र.— 'मुक्ताफलाय करिणं घ्नन्ति वीराः, हे रघुवीर' स्थल में निमित्तरूप मुक्ताफल का करी के साथ संयोगसम्बन्ध होने के कारण निमित्तवाचक मुक्ताफल शब्द से सप्तमीविभक्ति होनी चाहिए?

उ.— 'मुक्ताफलाय करिणं घ्नन्ति' स्थल में 'मुक्ताफलानि आहर्तुं करिणं घ्नन्ति' इत्याकारिका वाग्विवक्षा स्वीकार करने से 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' (पा.सू. २.३.१४) सूत्रद्वारा मुक्ताफल शब्द से चतुर्थीविभक्ति होती है।

### यस्य च भावेन भावलक्षणम् ।।२.३.३७।।

**यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी स्यात्। गोषु दुह्यमानासु गतः। अर्हाणां कर्तृत्वेऽनर्हाणामकर्तृत्वे तद्वैपरीत्ये च।।वा.।। सत्सु तरत्सु असन्त आसते। असत्सु तिष्ठत्सु सन्तस्तरन्ति। सत्सु तिष्ठत्सु असन्तस्तरन्ति। असत्सु तरत्सु सन्तस्तिष्ठन्ति।।इति कौमुदी।।**

**शे.- यस्य च भावेनेति–भावः क्रिया। ततः–ज्ञापकक्रियाश्रयवाचकात्, तेन गोपददुह्यमानपदयोरुभयोरपि सप्तमी सिद्धा। क्रियाश्रयः कर्त्ता कर्म च। तत्र 'ब्राह्मणेष्वधीयानेषु गतः' इति कर्तर्युदाहरणम्। कर्मण्याह–गोष्विति। तत्र काचित् क्रिया स्वाधारकालेनान्यां क्रियां परिच्छिनत्ति यथा प्रकृते, काचित्तु स्वाधारकालाव्यवहितपूर्वकालेन यथा 'गोषु धोक्ष्यमाणास्वित्यादौ, काचित् स्वाधारकालानन्तरकालेन यथा 'गोषु दुग्धास्वित्यादौ। ज्ञापकत्वं सप्तम्यर्थस्तस्य च भावलक्षणमित्युक्तेः क्रियायामेवान्वयः। लक्ष्यलक्षणभावः शब्दबोद्ध्य एवैतच्छास्त्रप्रवृत्तौ निमित्तं न तु तस्य भूयो दर्शनादिरूपमानान्तरेण ग्रहणापेक्षेति बोद्ध्यम्। अन्यथा 'उदिते आदित्ये तमो नष्टम्' इत्यादावेव स्यान्न तु प्रकृते, कदाचिद्धि 'गोषु दुह्यमानास्वसौ गतः'। इदञ्च यत्र मानान्तरेण ज्ञातस्वरूपस्यार्थस्य कालविशेषादिज्ञापनार्थं शब्दप्रयोगस्तत्रैव प्रवर्त्तते भाष्यस्वरसात्। 'राहूपरागे स्नायात्' राहूपरागपदेन तदाश्रयकाल उच्यत इति अधिकरणसप्तम्येव। विवाहे नान्दीमुखं कुर्यादित्यत्र**

विवाहपदेन तत्प्राक्काल उच्यते। 'गवां दोहे आगतः' इत्यत्रापि अधिकरणसप्तम्येवेत्यन्यत्र विस्तरः।

अर्हाणामिति-कर्तृत्वार्हाणाम्। तद्वैपरीत्ये-अर्हाणामकर्तृत्वे, अनर्हाणाञ्च कर्त्तृत्वे इत्यर्थः। वाक्यचतुष्टयमेतत्, कर्त्तृसमर्पकादकर्तृसमर्पकाच्च सप्तमीत्यर्थः। सप्तम्यां तदन्वयिक्रियावाचकाद् धातोरप्रथमा-सामानाधिकरण्याच्छतृशानचावेव। लक्ष्यलक्षणभावाविवक्षार्थमिदम्। सत्स्विति-सन्तो हि तरणक्रियाकर्त्तृत्वार्हाः, तरणक्रियाकर्तृसत्सम्बन्धि असत्कर्तृकमासनमिति बोधः। स्वक्रियाधिकरणकालवृत्तित्वं सम्बन्धः। असत्स्विति-तरणक्रियाकर्तृत्वानर्हाणां तदकर्त्तृत्वमत्र। यद्यपि स्थितिक्रियाकर्तृत्वार्हत्वेनेदं सिद्धं तथाप्यसतां तरणक्रियानर्हत्वादिकमपि बोधविषय इति भावः। सत्स्विति-तरणक्रियाकर्तृत्वार्हाणां तदकर्तृत्वमत्र। असत्स्विति-तरणकर्त्तृत्वानर्हाणां तत्कर्तृत्वमत्र।

भैरवी- 'यस्य च भावेन' इत्यत्र भावपदार्थविशेषणतया यस्ये-त्यस्योपादानाल्लक्षकक्रियासम्बन्धिवाचकगवादिशब्दादेव सप्तमी प्रकृतसूत्रेण विधीयत इति भ्रमनिरासायाह-ज्ञापकक्रियाश्रयवाचकादिति। क्रियापदस्य धात्वर्थप्रतिपादकता, फलव्यापारयोश्च धात्वर्थत्वादाह-कर्त्ता कर्म चेति। अत्र कर्म कर्त्ता चेति वक्तव्ये कर्तृशब्दस्य प्रथममुपादानं कर्मसंज्ञाविधायकसूत्रे कर्तृशब्दस्य प्रथमोपादानाभिप्रायेण। क्रियायाः परस्परं ज्ञाप्यज्ञापकभावः प्रकृतसूत्रस्य प्रवृत्तौ नियामकः। तत्र निर्ज्ञातकाला क्रियाऽनिर्ज्ञातकालक्रियाया ज्ञापिका, अत्र कालो न वर्त्तमान एव विवक्षितः; किन्तु भूतभविष्यतोरपि सम्भवति घटकत्वमित्याशयेन तत्तत्कालस्थले सूत्रप्रवृत्तिं दर्शयति-तत्र काचित्क्रियेति। तत्र-ज्ञापकक्रियासु। ज्ञापकत्वमिति-न च सप्तम्यर्थज्ञापकत्वे कृदन्तार्थ-विशेषणतापन्नक्रियाया एकविशेषणत्वेनोपस्थितस्यान्यत्र विशेषणतयाऽ-न्वयायोग इति व्युत्पत्तिविरोधाद् विशेषणतयाऽन्वयो न सम्भवतीति वाच्यम्। प्रकृत्यर्थस्य क्रियाविशिष्टकृदन्तार्थस्याधेयतयाऽन्वयस्वीकारात्। विशेष्ये ज्ञापकावबोधेऽपि विशेषणे पर्यवसानम्। 'स्वर्गी ध्वस्तः' इति यथा तस्य च ज्ञापकत्वस्य स्वनिरूपितज्ञाप्यत्वसम्बन्धेन गतशब्दार्थघटकगमनक्रियायामन्वयः।

वस्तुतस्तु क्रिययोर्ज्ञाप्यज्ञापकभावः सूत्रप्रवृत्त्या पदस्य साधुतायामुपयुज्यते। सप्तम्यास्तु ज्ञापकत्वेनाभिप्रेता क्रियैवार्थः। तस्याश्च समानकालिकत्वं

ज्ञाप्यक्रियायां सम्बन्धो 'गोषु दुह्यमानासु गतः' इत्यादौ वर्तमानार्थककृत्समभिव्याहारे। एवञ्च दुह्यमानगोवृत्तिदोहनसमानकालिक-गमनकर्त्तेति शाब्दबोधः। यत्र भविष्यदर्थककृत्समभिव्याहारस्तत्र 'गोषु धोक्ष्यमाणासु' इत्यादौ सप्तम्यर्थदोहनक्रियायाः प्राक्कालिकत्वसम्बन्धेन ज्ञाप्यगमनक्रियायामन्वयः। यत्र तु भूतार्थककृत्तत्र 'गोषु दुग्धासु' इत्यादौ सप्तम्यर्थदोहनक्रियाया उत्तरकालिकत्वसम्बन्धेन गमनक्रियायामन्वय इत्यूह्यम्। अस्मिन् पक्षे च ज्ञाप्यज्ञापकभावस्य शाब्दबोधाविषयत्वे लक्ष्यलक्षणभावः शब्दबोध्य एवैतच्छास्त्रप्रवृत्तौ निमित्तमित्युत्तरग्रन्थासङ्गतिरिति तु न वाच्यम्। तस्य पूर्वोक्तपक्षाभि-प्रायकत्वात्। द्वितीयपक्षे तु वस्तुतः क्रियाद्वयनिष्ठ इत्यर्थः कार्यः। ननु लक्ष्यलक्षणभावो यत्र भूयः सहचारदर्शनं तत्र युक्तः। यथा वह्निधूमयोः। प्रकृते तु गमनक्रिया सकृदेव जातेति कथं कालिकसम्बन्ध-घटितो ज्ञाप्यज्ञापकभाव इत्यत आह–लक्ष्यलक्षणभाव इति। मानान्तरम्–ज्ञानान्तरम्। अन्यथा–भूयः सहचारदर्शनसहकारेण यत्र ज्ञाप्यज्ञापकभावप्रतीतिस्तत्रैवैतत्सूत्रप्रवृत्तिस्वीकारे। मानान्तरेण प्रमाणान्तरेण। ज्ञातस्वरूपस्यार्थस्य–ज्ञातं स्वरूपं यस्य तादृशार्थस्य क्रियाद्वयस्य। यथा गोदोहनं मनोजन्यस्मृतिविषयः। पुरुषविशेषे गमनन्तु तद्देशाधिकरणस्थितिकर्तृत्वाभावेनानुमितम्। भाष्यस्वरसादिति– 'नावश्यं तदेव लक्षणं भवति येन पुनः पुनर्लक्ष्यते। सकृदपि यन्निमित्तत्वाय कल्पते, तदपि लक्षणं भवति' इति भाष्यस्वरसादित्यर्थः। निमित्तत्वायेति–परिच्छेद्यपरिच्छेदकभावनिमित्तत्वायेत्यर्थः। स च परिच्छेद्यपरिच्छेदकभावः क्रियाद्वारा कालयोः फलति। क्वचित्तु निर्ज्ञातदेशक्रिया अनिर्ज्ञातदेशविशेषक्रियाया लक्षणं भवति यथा–'द्रव्यं गुणकर्मान्यत्वे सति सत्त्वात्' इत्यादौ। 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे।। इत्यादौ च। अत्र सतीत्यस्याध्याहारः। सत्त्वादित्यत्र तु सतीत्यनन्तरं सत इत्यस्याध्याहारो विवक्षितः। नन्वेवं 'राहूपरागे स्नायात्' इत्यत्र ज्ञापकक्रियावाचकपदाभावात् कथमेतत्सूत्रप्रवृत्तिरत आह–राहूपरागे इत्यादि। अधिकरणसप्तम्यैवेति– यद्यत्र राहूपरागे सति स्नायादित्येवं क्रियावाचकपदाध्याहारेण 'यस्य च भावेन.' इति सप्तमी उच्यते। तदा राहूपरागसत्त्वस्नानयोर्लक्ष्यलक्षणभावस्य समानकालिकत्वस्य वा लाभेऽपि

**राहूपरागसत्त्वस्य स्नाननिमित्तत्त्वालाभः। इष्टापत्तिस्तु न। स्नाननिमित्तत्वाभावे सति आलस्यादिना शक्तेन स्नानाद्यकरणे प्रायश्चित्तविधेरनुपपत्तेः। अधिकरणसप्तम्यान्तु राहूपरागकालत्वावच्छेदेन स्नानस्य विधानेन राहूपरागस्य निमित्तत्वं फलति। यणादेशेऽच इवेति भावः। तथैवाह–विवाहे इति। लक्षणाया उदाहरणान्तरमप्याह–गवामिति। मानान्तरसिद्धस्य कालदेशविशेषज्ञापनाय यत्र प्रयोगस्तत्रैव 'यस्य च भावेन.' इति सप्तमीस्वीकारेणैतेषु स्नानादीनामेतैरेव विधानेन तत्सूत्राप्राप्तेः। राहूपरागादीनां निर्ज्ञातदेशकालत्वाभावाच्चेति तदाह–'अन्यत्र विस्तरः' इति।**

**अर्हाणामिति–भाष्ये 'यद्यप्यत्र कारकार्हाणाञ्च कारकत्वम्। अकारकार्हाणाञ्च कारकत्वे सप्तमी वक्तव्या। अकारकार्हाणाञ्चाकारके सप्तमी वक्तव्या। ऋद्धेषु भुञ्जानेषु दरिद्रा आसते। ब्राह्मणेषु तरत्सु वृषला आसते इति। तद्विपर्यासे च सप्तमी वक्तव्या। ऋद्धेषु आसीनेषु मूर्खा भुञ्जते। ब्राह्मणेष्वासीनेषु वृषलास्तरन्ति' इत्युक्तम्। कारकशब्दोऽत्र भावप्रधानः। कारकत्वमर्हन्ति ते कारकार्हा इत्यर्थः। तथापि प्रत्यासत्त्या अर्हता कारकत्वस्यैव लभ्यत इत्याशयेन कारकशब्दः परित्यक्तः। अत्रार्हत्वमनर्हत्वं वा न भिन्नक्रियामादाय किन्त्वेकक्रियामादायैव। अन्यथा सर्वेषामेव यत्किञ्चित्क्रियाकर्तृत्वार्हतयाऽनर्हाणामप्रसिद्धिः स्यात्। अर्हाणामिति वचनस्य फलान्तरमप्याह–यद्यपीत्यादि।**

प्रकृतसूत्रद्वारा जिसकी क्रिया से क्रियान्तर का बोध होता है, उससे सप्तमीविभक्ति का विधान होता है। यथा—देवदत्तः कदा गतः? आकाङ्क्षा में 'गोषु दुह्यमानासु गतः' वाक्य का प्रयोग किया। प्रकृतवाक्यद्वारा गौ की दोहनक्रिया से देवदत्त की गमनक्रिया का बोध होता है। गोदोहन प्रातः ६ बजे होता है, अर्थात् देवदत्त प्रातः ६ बजे गया। अतः गोशब्द से सप्तमीविभक्ति का विधान होकर 'गोषु दुह्यमानासु गतः' वाक्योपपत्ति होती है। गुरवः कदा गताः? आकाङ्क्षा में प्रयुक्त 'छात्रेषु अधीयानेषु गताः' वाक्यद्वारा छात्रों की अध्ययनक्रियाद्वारा गुरु जी की गमनक्रिया का बोध होता है, अत एव छात्रशब्द से सप्तमी होकर 'छात्रेषु अधीयानेषु गताः' वाक्योपपत्ति होती है। जिस क्रिया से क्रियान्तर का बोध होता है, उसे लक्षणक्रिया (ज्ञापकक्रिया) कहते हैं, अथ च जिस क्रिया का

बोध होता है, उसे ज्ञाप्यक्रिया कहते हैं। इसीलिए प्रकृतस्थल में क्रियाओं का परस्पर बोध्यबोधकभाव = लक्ष्यलक्षणभाव = ज्ञाप्यज्ञापकभाव सम्बन्ध सिद्ध होता है। जब गोदोहनक्रिया की सत्ता थी, उस समय गमनक्रिया की सत्ता अर्थात् फलित होती है, इसीलिए इसे 'सतिसप्तमी' कहते हैं।

**'यस्य च भावेन.' शास्त्रोपदिष्ट भावशब्द का क्रिया अर्थ है। ततः सप्तमी अर्थात् ज्ञापकक्रियाश्रयवाचक शब्द से सप्तमीविभक्ति होती है**। यथा—'गोषु दुह्यमानासु गतः' एवं 'छात्रेषु अधीयानेषु गतः' स्थल में गमनक्रिया की ज्ञापिका क्रिया क्रमशः दोहनक्रिया एवं अध्ययनक्रिया है, इनका आश्रय क्रमशः गोरूप कर्म एवं छात्ररूप कर्त्ता हैं, अत एव कर्मवाचक गोशब्द से एवं कर्तृवाचक छात्रशब्द से सप्तमीविभक्ति होती है। 'ब्राह्मणेषु अधीयानेषु गतः' स्थल में ज्ञापकक्रियाश्रयवाचक ब्राह्मणशब्द से सप्तमी होती है। यह कर्तृस्थ ज्ञापक क्रिया का उदाहरण है एवं 'गोषु दुह्यमानासु गतः' यह कर्मस्थ ज्ञापक क्रिया का उदाहरण है। ज्ञापक क्रिया कुत्रचित् अपने आधारकालद्वारा क्रियान्तर का परिच्छेदनपूर्वक बोध कराती है, यथा 'गोषु दुह्यमानासु गतः' स्थल में, अर्थात् जिस काल में गोदोहनक्रिया हो रही थी, उसी काल में गमनक्रिया हुई। कहीं पर ज्ञापक क्रिया स्वाधारकालाव्यवहितप्राक्कालद्वारा क्रियान्तर का परिच्छेदनपूर्वक बोध कराती है, यथा—'गोषु धोक्ष्यमाणासु गमिष्यति' अर्थात् जब गोदोहन प्रारम्भ होनेवाला होगा, तब जायगा। कहीं पर ज्ञापक क्रिया अपने आधारकाल से अव्यवहितोत्तरकालद्वारा परिच्छेदनपूर्वक क्रियान्तर का बोध कराती है, यथा 'गोषु दुग्धासु गतः' अर्थात् गोदोहनक्रिया की निष्पत्ति के अनन्तर गया। किन्तु 'गोषु दुह्यमानासु, धोक्ष्यमाणासु एवं दुग्धासु गतः' वाक्यद्वारा गोनिष्ठक्रियानिष्ठज्ञापकतानिरूपितकर्तृनिष्ठज्ञाप्यतावती गमनक्रिया की सिद्धि होती है। सप्तम्यर्थ ज्ञापकत्व का क्रिया में ही अन्वय होता है। इस प्रकार सतिसप्तमी स्थल में क्रियाओं का परस्पर ज्ञाप्यज्ञापकभावसम्बन्ध फलित होता है। प्रकृतज्ञाप्यज्ञापकभाव की अपूर्वतया शब्दबोध्यता रहने पर ही सतिसप्तमी का विधान होता है, अन्यथा नहीं। अत एव शब्दोच्चारण के विना भी मानान्तर से ज्ञाप्यज्ञापकभाव की सिद्धि होने पर प्रकृतशास्त्र की प्रवृत्ति नहीं होती है। यथा 'उदिते आदित्ये तमो नष्टम्' स्थल में सूर्योदय एवं तमोनाश में परस्पर यद्यपि ज्ञापकज्ञाप्यभाव सम्बन्ध

है, सूर्योदय ज्ञापक है, अथ च तमोनाश ज्ञाप्य है, तथापि प्रकृतज्ञाप्यज्ञापकभावसम्बन्ध का प्रतिदिन प्रत्यक्षद्वारा भी बोध होने के कारण शब्दमात्रबोध्यता के अभाव से, अर्थात् शब्दद्वारा ही अज्ञात ज्ञाप्यज्ञापकभाव- सम्बन्ध का बोध न होने से 'सतिसप्तमी' न होकर अधिकरणसप्तमी होती है। देवदत्त प्रतिदिन घर जाता नहीं है, जाता भी है, तो कदाचित् गोदोहन के पूर्व जाता है, कदाचित् गोदोहन के पश्चात् जाता है, कदाचित् गोदोहन के समय जाता है, अर्थात् देवदत्त के जाने का समय नियत न होने के कारण 'देवदत्त कब गया'? इत्याकाङ्क्षा में प्रयुक्त 'गोषु दुह्यमानासु गतः' वाक्यद्वारा ही अज्ञात ज्ञाप्यज्ञापकभावसम्बन्ध का बोध होने के कारण प्रकृतवाक्य में सतिसप्तमी का विधान होता है। भाष्यमतानुसार 'यस्य च भावेन भावलक्षणम्' शास्त्र की प्रवृत्ति वहीं पर होती है, जहाँ पर मानान्तर से सिद्ध-पदार्थद्वारा (ज्ञात स्वरूपार्थद्वारा) कालादिविशेष का परिज्ञान करने के लिये शब्द का प्रयोग किया जाता है, यथा—देवदत्त की गमनक्रिया का तो पहले से ही ज्ञान था। ज्ञात गमनक्रियारूप अर्थद्वारा गमनक्रिया के कालविशेष का ज्ञान करने के लिये 'गोषु दुह्यमानासु गतः' वाक्योपदेश होने के कारण प्रकृतवाक्य में सतिसप्तमी का विधान होता है। 'राहूपरागे स्नायात्' स्थल में यद्यपि राहूपरागक्रिया से स्नानक्रिया का बोध होता है, तथापि प्रकृतस्थल में ज्ञाप्यज्ञापकसम्बन्ध स्वीकार न कर निमित्तनिमित्तिभावसम्बन्ध की स्वीकृति करते हैं। प्रकृतस्थल में राहूपराग निमित्त है, अथ च स्नानक्रिया निमित्तिनी है, अतः सतिसप्तमी नहीं होती है।

प्र.— प्रकृतस्थल में राहूपरागक्रिया से स्नानक्रिया का बोध होने के कारण लक्ष्यलक्षणभावसम्बन्ध की उपपत्ति होने से सतिसप्तमी होनी चाहिए?

उ.— 'राहूपरागे स्नायात्' वाक्य में लक्ष्यलक्षणभावबोधिका सतिसप्तमी स्वीकार करने पर निमित्तनिमित्तिभाव की उपपत्ति न होने से राहूपरागनिमित्तक स्नान न करने पर प्रायश्चित्तविधायक वाक्य की असंगति होने लगेगी। अत एव प्रकृतवाक्य में अधिकरणसप्तमी स्वीकार करते हैं। 'विवाहे नान्दीमुखं कुर्यात्' वाक्यद्वारा विवाहकाल से नान्दीमुखश्राद्ध के काल का परिज्ञान होता है, अर्थात् विवाहकाल लक्षक है, क्रिया नहीं, अत एव प्रकृतवाक्य में सतिसप्तमी न होकर अधिकरणसप्तमी होती है। इसी प्रकार

'गवां दोहे आगतः' स्थल में भी गोदोहनकाल में लक्षकता है, न कि क्रिया में, अत एव प्रकृतवाक्य में भी अधिकरणसप्तमी का ही विधान होता है, सतिसप्तमी का नहीं।

**।।अर्हाणां कर्तृत्वेऽनर्हाणामकर्तृत्वे तद्वैपरीत्ये च।।**

जिस क्रिया के प्रति जो योग्य होते हैं, वे उस क्रिया के प्रति अर्ह कहलाते हैं और जो अयोग्य होते हैं, उन्हें उस क्रिया के प्रति अनर्ह कहते हैं। **प्रकृतवार्त्तिक के चार अर्थ हैं**—

१. एकक्रियानिरूपित अर्ह और अनर्ह उभयविध कर्त्ता के रहते अर्ह की कर्तृत्वविवक्षा में अर्ह कर्त्ता में सप्तमी होती है। यथा—'सत्सु तरत्सु असन्तः तिष्ठन्ति'। प्रकृतस्थल में तरणक्रिया के प्रति योग्य सज्जन (सत्पुरुष) हैं, असज्जन (असत्पुरुष) नहीं। अत एव तरणक्रिया के प्रति सत्पुरुष अर्ह कहलाते हैं, अथ च असत्पुरुष अनर्ह। अर्ह और अनर्ह उभयविध कर्त्ता के रहते अर्ह कर्त्ता में सप्तमी होकर 'सत्सु तरत्सु असन्तस्तिष्ठन्ति' वाक्योपपत्ति होती है।

२. एकक्रियानिरूपित अर्ह और अनर्ह उभयविध कर्त्ता के रहते अनर्ह की कर्तृत्वाभावविवक्षा में अनर्ह कर्त्ता में सप्तमी होती है। यथा—'असत्सु तिष्ठत्सु सन्तस्तरन्ति'। प्रकृतस्थल में तरणक्रियानिरूपित अर्ह और अनर्ह उभयविध कर्त्ता के विद्यमान रहने पर अनर्ह कर्त्ता में सप्तमीविभक्ति का विधान होता है।

३. एकक्रियानिरूपित अर्ह और अनर्ह उभयविध कर्त्ता की उपस्थिति में अर्ह की कर्तृत्वाभावविवक्षा होने पर अर्हकर्तृबोधक प्रातिपदिक से सप्तमीविभक्ति का विधान होकर 'सत्सु तिष्ठत्सु असन्तस्तरन्ति' प्रयोगोपपत्ति होती है। प्रकृतस्थल में तरणक्रिया के अर्ह की कर्तृत्वाभावविवक्षा में अर्हकर्तृवाचकप्रातिपदिक से सप्तमीविभक्ति का विधान होता है।

४. एकक्रियानिरूपित अर्हाऽनर्होभयविध कर्त्ता के रहते अनर्ह की कर्तृत्वविवक्षा में अनर्हकर्तृबोधक प्रातिपदिक से सप्तमीविभक्ति का विधान होकर 'असत्सु तरत्सु सन्तस्तिष्ठन्ति' प्रयोगोपपत्ति होती है।

अर्हाणाम् = कर्तृत्वार्हाणाम् अर्थात् अर्ह कर्त्ता की (कर्तृत्वयोग्य कर्त्ता की) कर्तृत्वविवक्षा में अर्हकर्तृवाचक अथ च अनर्हकर्तृवाचक उभय से

सप्तमी होती है। यथा—'सत्सु तरत्सु असन्तास्तिष्ठन्ति, असत्सु तिष्ठत्सु सन्तस्तरन्ति' दोनों ही वाक्यों में सन्तरणक्रियार्ह सन्तों की सन्तरणक्रिया के प्रति कर्त्तत्वविवक्षा है।

**तद्वैपरीत्ये च**—अर्थात् अर्हगतकर्तृत्व की अविवक्षा में अथवा अनर्ह की कर्तृत्वविवक्षा करने पर अर्हकर्तृबोधक से अथ च अनर्हकर्तृबोधक से सप्तमीविभक्ति होती है। यथा—'सत्सु तिष्ठत्सु असन्तस्तरन्ति' अथवा 'असत्सु तरत्सु सन्तस्तिष्ठन्ति'। प्रकृतस्थल में सन्तरणक्रियार्ह सन्तों की सन्तरणक्रियानिरूपितकर्तृत्वाविवक्षा में अर्ह और अनर्ह उभयविध कर्तृबोधक प्रातिपदिकों से सप्तमीविभक्ति होती है।

कर्तृबोधक और अकर्तृबोधक सप्तम्यन्तपदोपस्थाप्य अर्थ का क्रिया के साथ सामानाधिकरण्यसम्बन्ध से अन्वय होने से अर्थात् अप्रथमान्तार्थ में क्रिया का सामानाधिकरण्यसम्बन्ध से अन्वय होने से 'लटः शतृशानचावप्रथमासमानाधिकरणे' सूत्रद्वारा लट् के स्थान में शतृ और शानच् प्रत्ययों का विधान होता है। शतृप्रत्ययविधान के 'सत्सु तरत्सु, असत्सु तिष्ठत्सु' आदि उदाहरण हैं, अथ च शानच्प्रत्ययविधान के 'ब्राह्मणेषु भुञ्जानेषु शूद्रास्तिष्ठन्ति' इत्यादि उदाहरण हैं। प्रकृतवार्त्तिकद्वारा लक्ष्यलक्षणभाव गम्यमान न होने पर भी 'सतिसप्तमी' का विधान होता है।

'सत्सु तरत्सु असन्तस्तिष्ठन्ति' वाक्य का 'तरणक्रियासम्बन्धी सन्तों का तरण एवं तरणक्रियासम्बन्धी अनर्ह असन्तों की स्थिति' रूप से शाब्दबोध स्वीकार करने के कारण सम्बन्धसामान्य में प्राप्त षष्ठी का बाधपूर्वक सतिसप्तमी होती है। प्रकृतस्थल में सत्सम्बन्धिसंतरणक्रिया का असत्सम्बन्धिस्थितिक्रिया के साथ स्वाधिकरणकालवृत्तित्वसम्बन्ध है, अर्थात् सन्तों की तरणक्रिया का जो काल है, वही काल असन्तों की स्थितिक्रिया का भी है।

'असत्सु तिष्ठत्सु सन्तस्तरन्ति' स्थल में तरणक्रिया के प्रति अनर्ह कर्तृवाचक प्रातिपदिक से सप्तमीविधान है। प्रकृतस्थल में यद्यपि स्थिति-क्रिया के प्रति योग्यकर्तृता स्वीकार करने पर भी सप्तमीविधान संभव है, तथापि तरणक्रिया के प्रति असन्तों का अनर्हकर्तृत्वप्रतिपादन करने की इच्छा से अकर्तृत्वविवक्षा में सप्तमीविधान स्वीकार किया है। 'सत्सु

तिष्ठत्सु......' स्थल में तरणक्रिया के प्रति अर्ह कर्त्ता की अकर्तृतया विवक्षा में सप्तमी होती है, अथ च 'सत्सु तरत्सु.....' स्थल में तरणक्रिया के प्रति अनर्ह की कर्तृत्वाविवक्षा में सप्तमी का विधान होता है।

## षष्ठी चानादरे ।।२.३.३८।।

**अनादराधिक्ये भावलक्षणे षष्ठीसप्तम्यौ स्तः। रुदति रुदतो वा प्राव्राजीत्। रुदन्तं पुत्रादिकमनादृत्य संन्यस्तवानित्यर्थः। इति कौमुदी।।**

**शे.–** **'अनादरे' इति विषयसप्तमी, 'यस्य च भावेन' इत्याद्यनुवर्त्तते। अनादरे गम्यमाने सति यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी षष्ठी चेत्यर्थः। फलितमाह–अनादराधिक्ये इति। लक्ष्यलक्षणभावः षष्ठ्यर्थः। अनादरविशिष्टं प्रव्रजनं धात्वर्थः। तत्र षष्ठी तात्पर्यग्राहिका, अनादरश्च प्रत्यासत्त्या पुत्रादिविषयक एवेति भावः।**

**भैरवी–** **'षष्ठी चानादरे' इति सूत्रे यस्य च भावेनेत्याद्यनुवृत्तौ यादृशो वाक्यार्थस्तमाह–'अनादरे गम्यमाने' इति। षष्ठी तात्पर्येति–इदमुपलक्षणम्। सप्तम्यपि तत्त्वे तात्पर्यग्राहिका। वैशिष्ट्यञ्च–समानकर्तृकत्वस्व-कालिकत्वोभयसम्बन्धेन।**

प्रकृतसूत्र में 'यस्य च भावेन भावलक्षणम्' सूत्र का अनुवर्त्तन होता है, प्रकृतशास्त्रोक्त 'अनादरे' पद में विषयसप्तमी है। इस प्रकार प्रकृतशास्त्र में 'अनादराधिक्य गम्यमान होने पर जिस क्रिया से क्रियान्तर का बोध है, तत्र क्रियान्तरबोधक क्रियावाचक प्रातिपदिक से षष्ठी और सप्तमी दोनों विभक्तियाँ होती हैं। यथा—रुदति रुदतो वा प्राव्राजीत्। अत्र षष्ठी का लक्ष्यलक्षणभाव अर्थ है, अथ च अनादरविशिष्ट प्रव्रजन अर्थ में व्रजधातु की लक्षणा है। 'रुदतः' पदघटक षष्ठी अथवा 'रुदति' पदघटक सप्तमी लक्षणा की तात्पर्यग्राहिका है। 'रुदति रुदतो वा प्राव्राजीत्' वाक्यद्वारा स्त्रीपुत्रादिविषयक अनादर गम्यमान होता है।

## स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च ।।२.३.३९।।

**एतैः सप्तभिर्योगे षष्ठीसप्तम्यौ स्तः। षष्ठ्यामेव प्राप्तायां पाक्षिकसप्तम्यर्थं वचनम्। गवां गोषु वा स्वामी। गवां गोषु वा प्रसूतः। गा एवानुभवितुं जात इत्यर्थः।।इति कौमुदी।।**

**शे.– शब्दपरत्वात् 'विरूपाणामपि' इति नैकशेषः। पर्यायान्तरसङ्ग्रहापत्त्या स्वाम्यर्थ इति नोक्तम्। दीयते इति व्युत्पत्त्या दीयमानांशरूपं दायमादत्ते इति सोपसर्गादप्यादन्तादत एव निपातनात् कः। गवादिकं च दीयमाने अन्वेति नित्यसाकाङ्क्षत्वाद् वृत्तिः। दायादशब्दः स्वामिपर्याय इत्यन्ये। षष्ठ्यामेवेति। शेषे षष्ठीत्यनेनेति भावः।**

**भैरवी– पर्यायान्तरेति–प्रभ्वादेरित्यर्थः। समुदायविशेषणत्वेऽर्थासङ्गतिपरिहारायाह–गवादिकञ्चेति। 'गवां गोषु वा दायादः' इत्यत्रेत्यादिः। स्वामिपर्यायेति–अस्यात्रेत्यादिः। एतेन 'पृथिव्या दायादो राजा' इति प्रयोगापत्तिनिरासः।**

स्वामी, ईश्वर, अधिपति, दायाद, साक्षि, प्रतिभू और प्रसूत इन सात शब्दों में अन्यतम का योग होने पर षष्ठी और सप्तमी विभक्तियों का प्रकृतसूत्रद्वारा विधान होता है। यथा—गवां गोषु वा स्वामी, गवां गोषु वा प्रसूतः इत्यादि। 'गवां गोषु वा स्वामी' स्थल में गौ का स्वामी के साथ स्वस्वामिभावसम्बन्ध से अन्वय है, अथ च 'गवां गोषु वा प्रसूतः' वाक्य का गोसम्बन्धिनी समुत्पत्ति अर्थ है। अत एव उभयत्र 'शेषे षष्ठी' सूत्रद्वारा षष्ठी का बाधपूर्वक प्रकृतशास्त्रद्वारा षष्ठी और सप्तमी विभक्तियाँ होती हैं।

प्र.— स्वामी, ईश्वर और अधिपति शब्द परस्पर विरूप होने पर भी समानार्थक हैं। अत एव 'विरूपाणामपि समानार्थानाम्' वार्त्तिकद्वारा एकशेष होना चाहिए?

उ.— यद्यपि स्वामी, ईश्वर और अधिपति शब्द समानार्थक हैं; किन्तु प्रकृतसूत्र में **शब्दपरकतया इनका उपदेश स्वीकार करने से समानार्थकत्व की उपपत्ति नहीं होती, अत एव 'विरूपाणाम्' इति वार्त्तिकद्वारा एकशेष नहीं होता है।**

प्र.— स्वामी, ईश्वर और अधिपति शब्दों के स्थान में स्वाम्यर्थशब्दोपदेश करने से ही स्वामी, ईश्वर और अधिपतिशब्दों के योग में षष्ठी और सप्तमी का विधान संभव है, अत एव लाघवतया स्वाम्यर्थशब्दोपदेश करना चाहिए?

उ.— 'स्वामीश्वराधिपति' के स्थान में स्वाम्यर्थपदोपदेश स्वीकार करने पर स्वामी, ईश्वर और अधिपति शब्दों की भाँति स्वामिपर्यायवाची भूपति, भूपेश

आदि शब्दों के योग में भी प्रकृतसूत्रद्वारा षष्ठी और सप्तमी का विधान होने लगता। स्वामी, ईश्वर और अधिपति शब्दों के योग में ही प्रकृतशास्त्र की प्रवृत्ति हो, स्वाम्यर्थक अन्यशब्दों के योग में नहीं, इसीलिए स्वामीश्वराधिपतिशब्दों का उपदेश किया है।

'दायमादत्ते' विग्रह में 'दाय अम्' उपपद रहते आङ्पूर्वक-दाधातु से कप्रत्ययविधानपूर्वक दायादपदोपपत्ति होती है, जिसका हिस्सेदार (भागीदार-अंशभागी) अर्थ होता है।

प्र.— 'आतोऽनुपसर्गे कः' सूत्रद्वारा अनुपसर्ग सुबन्त के उपपद रहने पर कप्रत्यय होता है, अत एव आङ्पूर्वक दाधातु से कप्रत्ययविधान असङ्गत है?

उ.— 'स्वामीश्वराधिपति.' सूत्र में दायादशब्दोपदेशसामर्थ्य से आङ्पूर्वक-दाधातु से निपातनप्रक्रियाद्वारा कप्रत्ययविधानपूर्वक दायादपदोपपत्ति स्वीकार्य है।

प्र.— दायादशब्दघटक दायशब्द गवादि में नित्यसाकाङ्क्ष है, अत एव 'साकाङ्क्षमसमर्थवत्' नियमानुसार कृद्वृत्ति नहीं होनी चाहिए?

उ.— यथा 'देवदत्तस्य गुरुकुलम्' स्थल में गुरुशब्द के नित्यसाकांक्ष होने पर भी समासवृत्ति होती है, तथैव दायशब्द के नित्यसाकांक्ष होने पर भी 'दायमादत्ते' विग्रह में कृद्वृत्ति का विधान होता है। प्रकृतसूत्रोपदिष्ट दायादशब्द का स्वामी अर्थ स्वीकार करनेवाले वैयाकरणों के मतानुसार साकांक्षता का प्रसङ्ग ही नहीं है। 'शेषे षष्ठी' सूत्र का यह अपवादशास्त्र है।

## आयुक्तकुशलाभ्यां चासेवायाम् ।।३.४.४०।।

**आभ्यां योगे षष्ठीसप्तम्यौ स्तस्तात्पर्येऽर्थे। आयुक्तो व्यापारितः। आयुक्तः कुशलो वा हरिपूजने हरिपूजनस्य वा। आसेवायां किम्? आयुक्तो गौः शकटे। ईषद्युक्त इत्यर्थः।।इति कौमुदी।।**

**शे.–** **तात्पर्ये इति–आसेवापदस्य तत्र रूढेरिति भावः। तात्पर्यञ्च तदेकव्यापारता। आयुक्तयोगेऽधिकरणत्वविवक्षया सप्तमीप्राप्तौ सम्बन्धविवक्षायामत्र कुशलयोगे च षष्ठीप्राप्तौ वचनम्।**

**भैरवी–** **नन्वासेवापदादक्षरमर्यादया तात्पर्यस्य न लाभ इत्यत आह–आसेवापदस्येति। तदेकव्यापारता–तन्मात्रसाध्यकप्रवृत्तिमत्त्वम्।**

**अधिकरणत्वविवक्षयेति–वैषयिकाधारत्वविवक्षयेत्यर्थः। अत्र–आयुक्तशब्दयोगे। वचनमिति–षष्ठ्यर्थं सप्तम्यर्थञ्च वचनमित्यर्थः।**

आसेवा अर्थ गम्यमान होने पर आयुक्त अथ च कुशल शब्द के योग में प्रकृतसूत्रद्वारा षष्ठी और सप्तमी विभक्तियों का विधान होता है। यथा— आयुक्तः कुशलो वा हरिपूजने हरिपूजनस्य वा। आसेवापद की तात्पर्य अर्थात् 'इच्छा' अर्थ में रूढि है। आयुक्तो व्यापारितः-स्वेच्छापूर्वक नियोजित, **तदेकव्यापारतः**, अर्थात् स्वेच्छापूर्वक उसी में लगे रहना आसेवा पद का अर्थ है। अत एव 'आसेवायां किम्'—'आयुक्तो गौः शकटे'। प्रकृतस्थल में गौ की शकट में लगने की = जुतने की स्वतः इच्छा नहीं है, अपितु उसे लगाया जाता है, अर्थात् आसेवा अर्थ गम्यमान न होने के कारण आयुक्तशब्द का योग होने पर भी 'आयुक्तो गौः शकटे' वाक्य में प्रकृतसूत्र की प्रवृत्ति नहीं होती है। आयुक्तशब्द के योग में अधिकरणत्वविवक्षा में सप्तमी, अथ च कुशलशब्द के योग में सम्बन्धविवक्षा में षष्ठी प्राप्त थी। उसका बाध होकर प्रकृतसूत्रद्वारा षष्ठी और सप्तमी दोनों विभक्तियों का विधान होता है।

## यतश्च निर्धारणम् ।।२.३.४१।।

**जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणं यतस्ततः षष्ठीसप्तम्यौ स्तः। नृणां नृषु वा ब्राह्मणः श्रेष्ठः। गवां गोषु वा कृष्णा बहुक्षीरा। गच्छतां गच्छत्सु वा धावन् शीघ्रः। छात्राणां छात्रेषु वा मैत्रः पटुः।।इति कौमुदी।।**

**शे.–** **जातिगुणक्रियासंज्ञाभिरिति–विशिष्टस्येत्यध्याहारः। तद्विशिष्टस्य एकदेशस्य यतः स्वघटितसमुदायात् स्वेतरसमुदायघटकव्यावृत्तधर्मकरणकं पृथक्करणं तद्वाचकात् षष्ठीत्यर्थः। यत इति किम्? यस्य जात्यादिविशिष्टस्य स्वेतरव्यावृत्तधर्मवत्त्वबोधनं तत एव मा भूत्। षष्ठ्यपवादत्ववत् प्रथमापवादत्वस्यापि सम्भवात्। स्वघटितसमुदायावधिक-स्वेतरसमुदाय-घटकव्यावृत्तधर्मकरणकपृथक्करणरूपनिर्धारणविषयत्वरूपोऽवयवा-वयविभावरूपश्च सम्बन्धो विभक्त्यर्थः। नृसमुदायावधिक-द्विजेतरनरव्या-वृत्तधर्मकरणकपृथक्करणरूपनिर्धारणविषयो नृसमुदायावयवो द्विजः श्रेष्ठ इति बोधः। संसर्गघटककरणं च श्रेष्ठत्वादिरूपमेव प्रत्यासत्तेः। अत एव 'न निर्धारणे' (पा.सू. ३.२.७०) इति सूत्रबोधितं**

निर्धारणस्य विभक्त्यर्थत्वे सङ्गच्छते। उद्भूतावयवभेदविवक्षया नृणामिति बहुवचनम्। तिरोहितावयवभेदविवक्षया निर्धार्णणविषये एकवचनं त्वसाध्विति 'कारके' (पा.सू. १.४.२३) इति सूत्रे भाष्ये स्पष्टम्। तत्र हि 'निर्धारणे कारकेषु इति ब्रूयात्' इत्युक्तम्। 'मिदचोऽन्त्यात्' (पा.सू. १.४.४७) इत्यादौ तु सौत्रो निर्देश इति तदाशयः। 'द्वन्द्वः सामासिकस्य च' इत्यत्र समाससमूहमध्ये इत्यर्थः। समूहेऽर्थे 'अचित्त.' (पा.सू ४.२.४७) इति ठक्।

भैरवी– 'यतश्च निर्धारणम्' इति सूत्राद् यथाश्रुताद् यस्मात् समुदायाद् निर्धारणं पृथक्करणं तादृशसमुदायघटकावृत्तिधर्मवत्त्वबोधनं यत्र तत्र तादृशसमुदायवाचकप्रातिपदिकात् षष्ठीसप्तम्यावित्यर्थः प्रतीयते; परन्त्वयन्न युक्तः। 'नराणां क्षत्रियः शूरः' इत्यत्र नृशब्दस्य समुदायवाचकत्वाभावाद् अनुपपत्तिरतः सूत्रार्थ उक्तो मूले–जातिगुणक्रियासंज्ञादिभिरिति। एवमपि जात्यादिभिरेव पृथक्करणमिति भ्रान्तिर्भवतीत्यत आह– विशिष्टस्येत्यध्याहारः। एवमपि जात्यादिविशिष्टस्य यतो निर्द्धारणमिति भ्रमः स्यादतः पूरणेन व्याचष्टे–एकदेशस्येति। एतेन तादृशसमुदाय-वृत्तिधर्माश्रयस्य लाभः। यथा–'नराणां क्षत्रियः शूरः' इत्यत्र नृसमुदायवृत्तिनरत्वाश्रयस्य क्षत्रियस्य जातिविशिष्टस्य लाभः। समुदायवृत्तित्वञ्च समुदायत्वाश्रयवृत्तित्वमेव न तु समुदायत्व-पर्याप्त्यधिकरणपर्याप्तित्वम्, क्षत्रियत्वस्य तथात्वासम्भवात्। न हि नृत्वं समुदायत्वपर्याप्त्यधिकरणे समुदाये पर्याप्तम्। तस्य प्रत्येकपर्याप्तत्वात्। एवञ्च प्रकृते नृशब्दो नृसमुदायबोधकतया तादृशसमुदाये वर्त्तमानं यत्समुदायत्वं स्वरूपसम्बन्धेन तादृशसमुदायत्वाश्रयक्षत्रियस्य तादृशसमुदायत्वाश्रयवृत्तिनृत्वावच्छिन्नस्य लाभः। क्षत्रियपदार्थश्चात्रैकदेशः। स्वघटितसमुदायात्–नृसमुदायात्। स्वेतरसमुदायघटकेति। स च ब्राह्मणादिः। स्वमेकदेशो जात्यादिविशिष्टः। स्वेतरेत्यस्य समुदायघटकेऽन्वयः। तस्य च व्यावृत्तौ तादृशसमुदायघटकावृत्तिर्धर्मः शूरत्वं तत्करणकं पृथक्करणञ्च क्षत्रियस्य शूरत्वाश्रयत्वबोधनमेवेति नृशब्दादत्र षष्ठ्युपपत्तिः।

यद्यपि तद्धर्माश्रयत्वबोधनस्य तद्धर्मप्रकारकबोधानुकूलव्यापाररूपतया तस्य धर्मस्य कर्मत्वं सम्भवति। तथापि तद्धर्मवत्त्वबोधने तस्य धर्मस्य

**कारणत्वविवक्षयैवं लेखः। एवञ्च जात्यादिविशिष्टस्य यद्धर्मावच्छिन्नस्य तादृशजात्यादिशून्यतद्धर्मावच्छिन्नावृत्तिविधेयवत्त्वबोधनं यत्र तत्र तद्धर्मावच्छिन्नवाचकप्रातिपदिकात् षष्ठीसप्तम्यौ भवत इति सूत्रार्थः पर्यवसन्नः। यथा क्षत्रियत्वविशिष्टस्य नरत्वावच्छिन्नस्य क्षत्रियत्वशून्य-नरत्वावच्छिन्नब्राह्मणावृत्तिशूरत्ववत्त्वबोधनं 'नराणां क्षत्रियः शूरः' इत्यत्रास्तीति, भवति नृशब्दाद्विभक्तिः। यत इत्यस्याभावे यस्य जातिविशिष्टस्येत्यस्य लाभः स्यात्तदा क्षत्रियपदादेव षष्ठी स्यादित्याशयेनाह–यतः किमित्यादि। ननु क्षत्रियपदात् प्रथमा परत्वात् स्यादत आह–षष्ठ्यपवादत्ववदिति। अत एव–निरुक्तस्य विभक्त्यर्थत्वादेव। नराणामिति बहुवचनोपपत्तये आह–उद्भूतावयवेति। यद्धर्मावच्छिन्न-स्येत्युपादानात् 'नराणां व्याघ्रः शूरः' इति न, किन्तु 'नरेभ्यो व्याघ्रः शूरः' इत्येव। तादृशजात्यादिशून्येत्युपादानाद् विधेयतया विवक्षितस्य शूरत्वस्य नरत्वावच्छिन्नावृत्तित्वबाधेऽपि न क्षतिः। तद्धर्मावच्छिन्नावृत्तित्वं परित्यज्य तादृशजात्यादिशून्ययत्किञ्चिदवृत्तित्वनिवेशे 'नराणां क्षत्रियो गौरः' इत्यपि स्यात्। गौरत्वस्य क्षत्रियत्वशून्यशूद्रावृत्तित्वात्। तादृशजात्यादिशून्यसामान्यावृत्तित्वनिवेशेऽस्य प्रयोगस्यापत्तिनिरासेऽपि 'नराणां क्षत्रियः शूरः' इत्यत्रैवानुपपत्तिः। शूरत्वस्य विधेयस्य क्षत्रियत्वशून्यसामान्यान्तर्गतराक्षसादिवृत्तित्वेन क्षत्रियत्वशून्यसामान्या-वृत्तित्वबाधादतस्तद्धर्मावच्छिन्नावृत्तिनिवेशः। ननु निर्धारणस्थले यदि नैकवचनं तदा गीतावाक्यस्य का गतिरत आह–द्वन्द्व इत्यादि।**

**समुदाय से जाति-गुण-क्रिया-संज्ञाविशिष्टसमुदायावयव की पृथक्कृति को निर्धारण कहते हैं।** जाति-गुण-क्रिया-संज्ञाविशिष्टसमुदायावयव की जिस समुदाय से पृथक्कृति होती है, तत्समुदायवाचक शब्द से षष्ठी और सप्तमी विभक्तियों का विधान होता है। प्रकृतप्रसङ्ग में 'विशिष्टस्य' पद का अध्याहार होता है, अत एव 'जातिगुणक्रियासंज्ञाविशिष्टस्य' रूप से अर्थोपलब्धि होती है। जाति, गुण, क्रिया अथवा संज्ञा से विशिष्ट समुदायावयव का जिस स्वघटित समुदाय से अर्थात् अवयवघटित समुदाय से स्वेतरसमुदायघटकव्यावृत्तधर्मकरणकपृथक्करण अर्थात् तदवयवेतर जो समुदाय, उसमें घटकतया न रहनेवाला जो धर्म उस धर्म से पृथक्करण को निर्धारण कहते हैं। एतादृशनिर्धारण में समुदायवाचक शब्द से षष्ठी

और सप्तमी दोनों विभक्तियाँ होती हैं। यथा—'नृणां नृषु वा ब्राह्मणः श्रेष्ठः' स्थल में नृसमुदायावयव ब्राह्मणत्वजातिविशिष्ट ब्राह्मण का ब्राह्मणघटित नृसमुदाय से ब्राह्मणेतरनृसमुदायघटक क्षत्रिय-वैश्य-शूद्र में न रहनेवाले श्रेष्ठत्व धर्म से पृथक्करण होता है, अत एव समुदायवाचक नृशब्द से षष्ठी और सप्तमी विभक्तियाँ होकर 'नृणां नृषु वा ब्राह्मणः श्रेष्ठः' प्रयोगोपपत्ति होती है।

प्र.— **यतः किम्**? अर्थात् प्रकृतसूत्र में 'यतः' पदोपदेश किसलिए किया है?

उ.— प्रकृतसूत्र में 'यतः' पदोपदेश न करने पर प्रकृतशास्त्रद्वारा उपस्थितत्वात् समुदाय में न रहनेवाले धर्म का जिसमें बोधन होता है, अर्थात् पृथक्करणधर्मविशिष्टबोधक प्रातिपदिक से ही षष्ठी और सप्तमी विभक्तियाँ होने लगेंगी। जिस समुदाय से पृथक्करण होता है, तत्समुदायबोधक प्रातिपदिक से ही षष्ठी और सप्तमी विभक्तियों का विधान करने के लिये 'यतः' पदोपदेश आवश्यक है।

प्र.— प्रकृतसूत्रद्वारा पृथक्करणधर्मविशिष्टबोधक प्रातिपदिक से षष्ठी और सप्तमी विभक्तियों का बाध करने के लिये 'यतः' पदोपदेश अनावश्यक है, यतो हि पृथक्करणधर्मविशिष्ट प्रातिपदिक से प्राप्त प्रथमाद्वारा षष्ठी और सप्तमी का स्वतः बाध संभव है?

उ.— प्रकृतसूत्रद्वारा अपवादत्वहेतु से यथा षष्ठीविभक्ति का बाध होता है, तथैव अपवादत्वहेतु से प्रथमा का भी बाध हो जायेगा। इसलिए पृथक्करणधर्मविशिष्टवाचक प्रातिपदिक से षष्ठी और सप्तमी का वारण करने के लिये 'यतः' पदोपदेश आवश्यक है।

अवयवघटितसमुदायावधिक अवयवेतरसमुदायावृत्तिधर्मकरणक पृथक्करण को निर्धारण कहते हैं, अत एव निर्धारणषष्ठी का अवयवघटित समुदायावधिक अवयवेतरसमुदायव्यावृत्तधर्मकरणकनिर्धारणविषयत्वरूप अथ च अवयवावयविभावरूप सम्बन्ध अर्थ होता है। निर्धारण का करण उपस्थितत्वात् श्रेष्ठत्वादि धर्म लिया जाता है। निर्धारण विभक्त्यर्थ है, अत एव निर्धारणार्थक षष्ठी के समास का 'न निर्धारणे' (पा.सू. ३.२.७०) सूत्रद्वारा निषेध संगत होता है। अर्थात् 'न निर्धारणे' शास्त्रबोधित निर्धारण की विभक्त्यर्थोपपत्ति होती है।

प्र.— 'नृणां नृषु वा द्विजः श्रेष्ठः' स्थल में नृसमुदाय एक है, अत एव एकत्वविवक्षा में एकवचन होना चाहिए?

उ.— समुदाय में अनेक व्यक्ति हैं, अत एव समुदायान्तर्गत प्रतिव्यक्ति की उद्भूतावयवभेदविवक्षा स्वीकार करने से बहुवचन होता है। निर्धारणषष्ठी-स्थल में जातिविवक्षाश्रयण अर्थात् तिरोहितावयवभेदविवक्षाश्रयणपूर्वक एकवचनविधान असंगत है। जिसका ध्वनन 'कारके' (पा.सू. १.४.२३) सूत्रसमुपदिष्ट 'निर्धारणे कारकेषु इति ब्रूयात्' भाष्योक्ति से होता है।

प्र.— निर्धारणस्थल में सर्वत्र यदि षष्ठीबहुवचन का ही विधान होता है, तर्हि 'मिदचोऽन्त्यात्परः' सूत्रघटक 'अचः' पद में निर्धारणषष्ठी के एकवचन का विधान कैसे?

उ.— निर्धारणस्थल में सर्वत्र बहुवचन का ही विधान होता है, अत एव 'मिदचोऽन्त्यात्परः' अर्थात् 'अन्त्याद् अचः परः' स्थल में सौत्रत्वात् एक-वचनोपपत्ति होती है।

प्र.— निर्धारणस्थल में सर्वत्र बहुवचन का विधान स्वीकार करने पर 'द्वन्द्वः सामासिकस्य च' स्थल में एकवचन कैसे?

उ.— 'समासानां समूहमध्ये' इत्यर्थवाग्विवक्षा में 'अचित्तादेशकालाट्ठक्' (पा.सू. ४.२.४७) शास्त्रद्वारा ठक्प्रत्यय होकर सामासिक पदोपपत्ति होती है, अर्थात् 'समासानाम्' पद में निर्धारणषष्ठीबहुवचन का ही प्रयोग है, एकवचन का नहीं।

निर्धार्यमाण और निर्धारणावधि (जिस समुदाय से पृथक्कृति होती है) में अभेद होने पर 'यतश्च निर्धारणम्' शास्त्रद्वारा षष्ठी-सप्तमी विभक्तियों का विधान होता है, यथा 'नृणां नृषु वा द्विजः श्रेष्ठः' स्थल में नृसमुदाय और निर्धार्यमाण ब्राह्मण में नरत्वधर्मतया अभेद है। **जहाँ निर्धार्यमाण और निर्धारणावधि में भेद होता है**, वहाँ निर्धारणावधिवाचक से 'पञ्चमी विभक्ते' (पा.सू. २.३.४२) सूत्रद्वारा पञ्चमीविभक्ति होती है।

**पञ्चमी विभक्ते ।।२.३.४२।।**

**विभागः = विभक्तम्। निर्धार्यमाणस्य यत्र भेद एव तत्र पञ्चमी स्यात्। माथुराः पाटलिपुत्रकेभ्य आढ्यतराः।।इति कौमुदी।।**

**शे.–** **'यतश्च निर्धारणम्' (पा.सू. २.३.४१) इत्यनुवर्तते। विभागोऽत्र भेदः। तत्र निर्धारणे सर्वत्र यथाकथञ्चिद् भेदस्य सत्त्वेन विभक्तिग्रहणसामर्थ्यात्, यत्र भेद एव न तु केनाप्युपात्तरूपेणाभेदस्तत्रैव प्रवृत्तिरित्याह–भेद एवेति।**

**भैरवी–** **अस्मिन् सूत्रे अनुवर्त्तमानं निर्धारणपदमवृत्तिधर्मप्रकारकज्ञानविषयत्व-परमेव। एतद्घटकाभावप्रतियोगिवृत्तित्वे प्रकृत्यर्थतावच्छेदकावच्छिन्नस्य निरूपितत्वसम्बन्धेनान्वयो निर्द्धारणस्य च स्वरूपसम्बन्धेन भेदाश्रये विशेषणत्वम्। भेदश्च प्रकृत्यर्थतावच्छेदकानाश्रयत्वमेवात्र पारिभाषिको विभक्तग्रहणसामर्थ्यान्न त्वन्योन्याभावः। एवञ्च यत्सिद्धं तदाह–तत्र निर्धारण इति।**

'यतश्च निर्धारणम्' शास्त्रानुवर्त्तनपूर्वक प्रकृतसूत्र की ''जिस निर्धारणावधि से निर्धार्यमाण का पृथक्करण किया जाता है, उस निर्धारणावधिवाचक प्रातिपदिक से पञ्चमीविभक्ति का विधान होता है'' इत्यर्थोपपत्ति होती है। विपूर्वक-भज् धातु से 'नपुंसके भावे क्तः' (पा.सू. ३.३.११४) सूत्रद्वारा क्तप्रत्ययविधानपूर्वक विभक्तशब्दोपपत्ति होती है, अत एव विभक्तशब्द का विभाग अर्थ होता है। **विभाग भेद को कहते हैं**।

प्र.— निर्धार्यमाण व्याप्य होता है, अथ च निर्धार्यमाणावधि व्यापक, इस प्रकार व्याप्य-व्यापक में परस्पर भेद स्वतः सिद्ध है, अतः भेदार्थबोधन के लिये प्रकृतसूत्र में 'विभक्ते' पदोपदेश व्यर्थ है?

उ.— प्रकृतसूत्रोपदिष्ट 'विभक्ते' पदोपदेश व्यर्थीभूय ज्ञापन करता है, कि 'यत्र निर्धार्यमाण और निर्धार्यमाणावधि में भेद ही रहता है, किसी भी प्रकार अभेद प्रतिपादन संभव न हो, वहीं 'पञ्चमी विभक्ते' सूत्र की प्रवृत्ति होती है'। अत एव नृसमुदाय और ब्राह्मण में ब्राह्मणत्वधर्म को लेकर परस्पर भेद सिद्ध होने पर भी निर्धार्यमाणावधि नृसमुदाय और निर्धार्यमाण ब्राह्मण में नरत्वधर्म को लेकर अभेदप्रतिपादन संभव होने के कारण 'नृणां नृषु वा ब्राह्मणः श्रेष्ठः' स्थल में 'पञ्चमी विभक्ते' सूत्र की प्रवृत्ति नहीं होती है।

**शे.–** **अत्र पञ्चम्यर्थो निर्धारणविषयत्वरूप एव पाटलिपुत्र-कावधिकनिर्धारणविषया माथुरा आढ्यतरा इति बोधः। एवञ्च**

त्रितयोपादान एव निर्धारणप्रतीतिरिति 'पुरुषोत्तमः' इत्यादौ सम्बन्धसामान्ये षष्ठी उत्तमनिरूपितेति समाससिद्धिरिति तरप्. सूत्रे कैयटः।

भैरवी– पाटलिपुत्रकावधिकेति–अवधित्वमत्र निरूपकत्वमेव संसर्गघटकतया भासते। एवं सति यादृशो वाक्यार्थबोधस्तमाह–पाटलिपुत्रकावधिकेति। त्रितयोपादान इति–निरुक्तनिर्धारणनिरूपकवाचकस्य तदाश्रयवाचकस्य निरुक्तनिर्धारणप्रयोजकधर्मवाचकस्य च यत्रोपादानं शब्देनोच्चारितेन प्रतीतिस्तत्रैतत्सूत्रनिष्पन्नपञ्चम्यन्तस्य साधुत्वमिति फलितम्। यत्र तु 'सांकाश्यकानां पाटलिपुत्रकाणाञ्च पाटलिपुत्रका अभिरूपतमाः' इति प्रयुज्यते, तत्र निर्धार्यमाणेषु पाटलिपुत्रकेषु न भेदः, एवञ्च शब्दार्थैकबुद्धिविषयत्वरूपसाहित्याश्रयत्वेनाभेदस्यापि सत्त्वात् सा बुद्धिश्च पूर्वकालिकी सांकाश्यकाश्च पाटलिपुत्रकाश्चाभिरूपा इत्याकारा ग्राह्येति न तत्र पञ्चमी। ननु 'पुरुषोत्तमः' इत्यत्र पुरुषाणामुत्तम इत्यर्थः प्रतीयते, एवञ्चात्र पूर्वसूत्रेण षष्ठी वाच्या, तथा च 'न निर्धारणे' (पा.सू. २.२.१०) इति सूत्रेण समासनिषेधापत्तिरत आह–सम्बन्धसामान्य इति। तथा च 'न निर्धारणे' इति सूत्राप्राप्तिरिति भावः। कैयट इति–अत्रारुचिबीजन्तु 'पुरुषोत्तमः' इत्यत्र षष्ठीसमाससत्त्वे हि त्वदुक्तरीत्या पुरुषोत्तमपदस्य साधुत्वं कल्पनीयम्। स एव तु न। 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इति वाक्यात् कर्मधारयस्यैव प्रतीतेः। न चोत्तमपदस्य पूर्वनिपातापत्तिः। राजदन्तादित्वात् पूर्वनिपात-प्रकरणस्यानित्यत्वाद्वा।

प्रकृतशास्त्रद्वारा 'माथुराः पाटलिपुत्रकेभ्य आढ्यतराः' स्थल में निर्धारणपञ्चमी का विधान हुआ है, इसका निर्धारणविषयत्व अर्थ है। अत एव प्रकृतवाक्य की 'पाटलिपुत्रनिवासी हैं अवधि जिनकी, एतादृश निर्धारण के विषय मथुरानिवासी आढ्यतर हैं—'पाटलिपुत्रकावधिकनिर्धारणविषया माथुरा आढ्यतराः' इत्यर्थोपपत्ति होती है। इस प्रकार निरुक्तनिर्धारणनिरूपकवाचक, तदाश्रयवाचक एवं निरुक्तनिर्धारणप्रयोजकधर्मवाचक एतत्त्रितय, अर्थात् १. यस्मान्निर्धार्यते = निर्धारणावधि, २. यश्च निर्धार्यते = निर्धार्यमाण एवं ३. निर्धारणहेतु = पृथक्करणहेतु इन तीनों की सत्ता रहने पर निर्धारण की प्रतीति होती है। 'पुरुषोत्तमः' (पुरुषाणाम् उत्तमः) स्थल में एतत्त्रितय का भान न होने के कारण निर्धारणषष्ठी का विधान नहीं हुआ, अत

एव 'न निर्धारणे' सूत्रद्वारा समास का निषेध भी नहीं होता है, इति कैयटः। कैयट के नामग्रहण का तात्पर्य यह है कि 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इत्युक्त्या 'उत्तमश्चासौ पुरुषः' विग्रह में कर्मधारयसमास है, पूर्वनिपातप्रकरण अनित्य है, अत एव राजदन्तादिगण में पाठस्वीकृतिपूर्वक अभीष्टपूर्वनिपातविधानद्वारा प्रयोगोपपत्ति करनी चाहिए।

**साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः।।२.३.४३।।**

**आभ्यां योगे सप्तमी स्यादर्चायां न तु प्रतेः प्रयोगे। मातरि साधुर्निपुणो वा। अर्चायां किम्? निपुणो राज्ञो भृत्यः। इह तत्त्वकथने तात्पर्यम्।।इति कौमुदी।।**

**शे.–** **निपूर्वात् 'पुण-कर्मणि शुभे' इत्यत इगुपधलक्षणः कः। अर्चतेश्च भौवादिकाद् 'गुरोश्च हलः' (पा.सू. ३.३.१०३) इत्यप्रत्ययः। अर्चा। चौरादिकात्तु 'ण्यासश्रन्थ.' (पा.सू. ३.३.१०७) इति युच् स्यात्। षष्ठ्यपवादोऽयम्।**

**भैरवी–** **अर्चतेस्त्वित्यर्थः।**

सेवा गम्यमान होने पर साधु और निपुण शब्दों के योग में प्रकृतसूत्रद्वारा सप्तमीविभक्ति का विधान होता है, यदि प्रतिशब्द का प्रयोग न हो। यथा—साधुर्निपुणो वा मातरि। अर्चायां किम्—निपुणो राज्ञो भृत्यः। 'राजा का भृत्य चतुर है' कथन से भृत्यद्वारा सेवा गम्यमान न होने से सप्तमीविभक्ति का विधान नहीं होता है। निपूर्वक √ पुण कर्मणि शुभे धातु से 'इगुपधज्ञाप्रीकिरः कः' (पा.सू. ३.१.१३५) सूत्रद्वारा कप्रत्ययविधानपूर्वक निपुणशब्दोपपत्ति होती है। भौवादिक √ अर्चधातु से 'गुरोश्च हलः' (पा.सू. ३.३.१०३) सूत्रद्वारा अप्रत्यय, कृदन्तत्वात् प्रातिपदिकसंज्ञा, स्त्रीत्वविवक्षा में टाप्प्रत्ययविधानपूर्वक अर्चापदोपपत्ति होती है। चौरादिक √ अर्चधातु से तो 'ण्यासश्रन्थो युच्' (पा.सू. ३.३.१०७) शास्त्रद्वारा युच् प्रत्ययविधानपूर्वक अर्चनापदोपपत्ति होती है। प्रकृतस्थल में 'मातरि साधुः' वाक्यद्वारा 'माता के विषय में साधु है' अर्थ की प्रतीति होने के कारण प्राप्त षष्ठी का अपवादत्वात् बाधपुरःसर सप्तमी विभक्ति होती है।

**अप्रत्यादिभिरिति वक्तव्यम्–साधुर्निपुणो वा मातरं प्रति पर्यनु वा।।इति कौमुदी।।**

**शे.–** **'लक्षणेत्थम्.' (पा.सू. १.४.९०) इति सूत्रोपात्ताः प्रत्यादयः।**

भैरवी– **गणपाठे प्रत्यादिगणपाठाभावादाह–लक्षण इति। न च साधुशब्दोपादानमत्र विफलम्, साध्वसाधुप्रयोगे चेत्येव सिद्धत्वादिति वाच्यम्। अर्चायां प्रत्यादियोगे निषेधार्थमस्योपादानात्।**

'अप्रत्यादिभिरिति वक्तव्यम्' वार्त्तिकद्वारा केवल प्रति के योग में ही नहीं, अपितु आदिशब्दसामर्थ्य से प्रति के साथ-साथ (लक्षणेत्थम्.) सूत्रोक्त परि, अनु और अव के योग में भी 'साध्वसाधु.' सूत्र का बाध होता है।

## नक्षत्रे च लुपि ।।२.३.४५।।

**नक्षत्रे प्रकृत्यर्थे यो लुप्संज्ञया लुप्यमानस्य प्रत्ययस्यार्थस्तत्र वर्त्तमानात् तृतीयासप्तम्यौ स्तोऽधिकरणे। मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत्। मूले श्रवणे इति वा। लुपि किम्–पुष्ये शनिः।।इति कौमुदी।।**

शे.– **लुप्शब्देन लुप्संज्ञया, लुप्तप्रत्ययार्थो लक्ष्यत इति बोध्यम्। अधिकरणे किम्–अद्य पुष्यः। असत्यां तदनुवृत्तावन्तरङ्गत्वात् प्रातिपदिकार्थ एव स्यात्। मूलेनेति 'नक्षत्रेण युक्तः कालः' (पा.सू. ४.२.३) इत्यणो 'लुबविशेषे' (पा.सू. ४.२.४) इति लुप्। नक्षत्रे किम्–पञ्चालेषु तिष्ठन्ति। 'जनपदे लुप्' (पा.सू. ४.२.८१) इति लुप्।**

भैरवी– **लुप्शब्दस्याभावबोधकतया नक्षत्रवाचकस्य तस्मिन्नर्थे न वृत्तिरत आह–लुप्शब्देनेति। अधिकरण इति किम्–मण्डूकप्लुत्याऽधिकरण-शब्दानुवृत्तिः किमर्थेत्यर्थः। अनुवृत्त्यभावे सर्वविभक्त्यपवादत्वमस्य स्यात्। अनिर्दिष्टा इति न्यायात्। अन्तरङ्गत्वात्–इतरानपेक्षत्वेनान्तरङ्ग-त्वादित्यर्थः।**

**प्रकृत्यर्थ यदि नक्षत्र हो**, अथ च **लुप्संज्ञाद्वारा जहाँ प्रत्यय का लुप् हुआ हो**, वहाँ **प्रत्ययार्थ में वर्त्तमान प्रातिपदिक से तृतीया और सप्तमी विभक्तियों का प्रकृतशास्त्र से विधान होता है।** यथा— मूलेन युक्तः कालः' एवं 'श्रवणेन युक्तः कालः' विग्रहों में 'नक्षत्रेण युक्तः कालः' सूत्रद्वारा विहित अण्प्रत्यय का 'लुबविशेषे' सूत्रद्वारा लुप् होकर मूलः और श्रवणः पदों की उपपत्ति होती है। अत्र मूल और श्रवण नक्षत्रवाचक हैं, अथ च नक्षत्रयुक्त काल अर्थ में विहित अण्प्रत्यय का लुप्शब्द से अदर्शन हुआ है, अत एव प्रत्ययार्थ में वर्तमान मूल और श्रवण प्रातिपदिकों से तृतीया और सप्तमी विभक्तियों का विधान होकर 'मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत्' एवं 'मूले आवाहयेद्देवीं श्रवणे

विसर्जयेत्' वाक्योपपत्ति होती है। प्रकृतस्थल में मूल और श्रवण-नक्षत्रयुक्त काल आवाहन और विसर्जन क्रिया के अधिकरण हैं। लुप्शब्द के अभावबोधक होने के कारण 'नक्षत्रे च लुपि' शास्त्रोक्त लुपि पद का लक्षणावृत्ति से 'लुप्संज्ञया लुप्यमानस्य प्रत्ययस्यार्थे' अर्थ करते हैं। प्रकृतशास्त्र में 'अधिकरणे' पद का मण्डूकप्लुतिन्याय से अनुवर्त्तन होता है, अत एव प्रातिपादिकार्थ में प्रकृतशास्त्रद्वारा सप्तमी का विधान न होने से 'अद्य पुष्यः' प्रयोगोपपत्ति होती है। अधिकरणे पद का अनुवर्त्तन न करने पर 'पुष्येण युक्तः कालः' विग्रह में विहित अण्प्रत्यय का लुप्संज्ञाद्वारा लोप का विधान होने से प्रत्ययार्थ में वर्त्तमान पुष्यप्रातिपदिक से सप्तमी होने लगेगी।

नक्षत्रे किम्—पञ्चालेषु तिष्ठन्ति। लुप्संज्ञाद्वारा जहाँ लोप हुआ हो, अथ च प्रकृत्यर्थ नक्षत्र हो, वहाँ पर प्रत्ययार्थ में वर्त्तमान प्रातिपदिक से तृतीया और सप्तमी विभक्तियों का विधान होता है। अत एव 'पञ्चालेन युक्तः देशः' विग्रह में लुप्संज्ञाद्वारा अण्प्रत्यय का लोप होने पर भी प्रत्ययार्थ में वर्त्तमान पञ्चालप्रातिपदिक से तृतीया और सप्तमी विभक्तियाँ नहीं होती हैं, यतो हि प्रकृतस्थल में प्रकृत्यर्थ नक्षत्र न होकर देश है।

### सप्तमीपञ्चम्यौ कारकमध्ये ।।२.३.७।।

**शक्तिद्वयमध्ये यौ कालाध्वानौ ताभ्यामेते स्तः। अद्य भुक्त्वाऽयं द्व्यहे द्व्यहाद्वा भोक्ता। कर्तृशक्त्योर्मध्येऽयं कालः। इहस्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येत्। कर्त्तृकर्मशक्त्योर्मध्येऽयं देशः। अधिकशब्देन योगे सप्तमीपञ्चम्याविष्येते। 'तस्मिन्नधिकमिति दशान्ताड्डः' (पा.सू. ५.२.४५) 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी' (पा.सू. २.३.९) इति च सूत्रनिर्देशात्। लोके लोकाद्वाधिको हरिः।।इति कौमुदी।।**

**शे.– 'कालाध्वनोः.' (पा.सू. २.३.५) इत्यतस्तदनुवर्त्तते तच्च पञ्चम्या विपरिणम्यते मध्यस्यावधिद्वयसापेक्षतया द्विवचनान्तेन समासः। बोधस्तु शक्तित्वेन शक्तिद्वयस्य, न तु द्वित्वेनेति बोध्यम्। ननु कर्तृरूपस्य कारकस्यैकत्वाद् भेदनिबन्धनमध्यव्यपदेशासम्भवोऽत आह– शक्तिद्वयमध्ये याविति। कर्तृत्वादिशक्तिरेव कारकम्। सा च क्रियाभेदेन भिन्नेति भावः। यद्यप्यवध्यवधिमतोस्साजात्यनियमान्न कालाध्वानौ कारकमध्ये सम्भवतस्तथापि शक्तिशब्देन तदाधारकालादिग्रहणान्न दोषः।**

**षष्ठ्यपवादोऽयम्। स्वानन्तरकालवृत्तित्वादिकं विभक्त्यर्थः। शक्तिद्वयमध्यवर्त्तित्वन्तु वस्तुसन्निमित्तम्।**

भैरवी– **द्विवचनान्तेन समास इति–अन्यथा सूत्रस्यैवैतस्यानुपपत्तिः स्यादिति भावः। अभेदैकत्वसङ्ख्याया वृत्तौ भानानुरोधेनाह–बोधस्त्विति। कारकस्य द्रव्यरूपतया तन्मध्यत्वमनुपपन्नमित्यभिप्रायेणाह–ननु कर्तृरूपस्येति। शक्तिरेव कारकमिति–अत्र कारकपदेन विवक्षितेत्यर्थः। धर्मधर्मिणोरभेदादिति भावः। क्रियाभेदेन–भिन्नभिन्नकालोत्पन्नक्रियाभेदेन। तदाधारकालग्रहणात्–लक्षणया शक्त्याधारकालग्रहणादित्यर्थः। अत्र कालाध्वनोर्विभक्त्योश्च न यथासंख्यमस्वरितत्वात्।**

प्रकृतशास्त्रोपदिष्ट कारकशब्द का कर्तृत्वादिशक्ति अर्थ है। 'कालाध्वनोरत्यन्तसंयोगे' सूत्र से अनुवर्तित 'कालाध्वनोः' पद का अर्थवशात् पञ्चम्यन्ततया विपरिणाम होता है। मध्यत्व अवधिद्वयसापेक्ष होता है, अत एव 'कारकयोर्मध्ये' इति द्विवचनान्ततया विग्रह करते हैं। समासार्थविग्रह वाक्य में द्विवचनान्ततया विग्रह स्वीकार करने पर भी द्वित्वविशिष्ट कारकशक्ति के मध्य (अर्थात् दो कारकशक्ति इधर, दो कारकशक्ति उधर) अर्थ न होकर **'कारकशक्ति के मध्य' अर्थ स्वीकार करते हैं**। अत एव उभयतः (इधर-उधर) एक-एक कर्तृत्वादि शक्ति की विद्यमानता में प्रकृतशास्त्र-द्वारा कालवाचक और अध्ववाचक प्रातिपदिकों से तृतीया और सप्तमी विभक्तियों का विधान होता है, यथा—'अद्य भुक्त्वाऽयं द्व्यहे द्व्यहाद् वा भोक्ता' स्थल में कर्तृत्वशक्तिविशिष्ट 'अयम्' तथा कर्त्तृत्वशक्तिविशिष्ट 'भोक्ता' इन दो कारकशक्ति के मध्य वर्त्तमान कालवाचक द्व्यहप्रातिपदिक से सप्तमी और पञ्चमी विभक्तियाँ होती हैं।

प्र.— प्रकृतस्थल में कर्तृत्वशक्ति और कर्तृत्वशक्ति इत्येकशक्ति के मध्य कालवाचक द्व्यहप्रातिपदिक है, दो कारकशक्ति के मध्य नहीं। मध्य तो भेदनिबन्धन होता है। इस प्रकार प्रकृतशास्त्र की प्रवृत्ति 'अद्य भुक्त्वाऽयं द्व्यहे द्व्यहाद् वा भोक्ता' स्थल में नहीं होनी चाहिए?

उ.— प्रकृतस्थल में क्रियाभेद होने से कर्तृत्वशक्ति में भेद स्वीकार करते हैं। उभयकर्तृत्वनिरूपिका भोजनक्रिया यद्यपि एक प्रतीत होती है; किन्तु कालभेद होने से भोजनक्रिया में भेदोपपत्ति होती है।

प्र.— यथा 'अतो भिस ऐस्' सूत्र में 'तपरस्तत्कालस्य' शास्त्र की 'तकार है परे जिससे' इत्यर्थवाग्विवक्षा में अवधिमान् वर्ण होने से अवधि भी

साजात्यात् वर्ण ही लिया जाता है, अर्थात् अवधि और अवधिमान् में साजात्य होता है। 'अद्य भुक्त्वाऽयं द्व्यहे द्व्यहाद् वा भोक्ता' स्थल में काल अवधि है, अथ च अवधिमान् कर्तृत्वादिशक्तिविशिष्ट है, अत एव कालभेद के कारण साजात्य का अभाव होने से अवध्यवधिमद्भाव ही असंभव है।

उ.— प्रकृतस्थल में शक्तिशब्दद्वारा कर्तृत्वादिशक्ति के आधारभूत काल का ग्रहण करने से अवध्यवधिमान् में कालत्वेन साजात्योपपत्ति होती है।

प्रकृतशास्त्रविधीयमान पञ्चमी-सप्तमी, षष्ठीविभक्ति की भी अपवादिका हैं। आज के भोजनकाल से दो दिन बाद की भोजनक्रिया अर्थात् अनन्तरकालवृत्तिता भोजनक्रिया में सिद्ध होती है। इस प्रकार प्रकृतसूत्र-विहित विभक्ति के स्वानन्तरकालवृत्तित्व और स्वानन्तराध्ववृत्तित्व अर्थ की निष्पत्ति होती है।

**अधिकशब्दयोगे सप्तमीपञ्चम्याविष्येते।। इति कौमुदी।।**

**शे.– कर्त्तरि क्तप्रत्ययान्ताध्यारूढशब्दार्थकाधिकशब्दयोगे लोकशब्दात् षष्ठ्यां प्राप्तायां ज्ञापकादिमे इष्येते इत्यर्थः। 'तदस्मिन्नधिकम्' (पा.सू. ४.२.६७) इति सूत्रे भाष्ये तु उपश्लिष्टपदाध्याहारेणौपश्लेषिकेऽधिकरणे सप्तमीत्युक्तम्। कर्मणि क्तप्रत्ययान्ताध्वारूढशब्दार्थकाधिकयोगे तु अधिको लोको हरिणेति प्रथमैव।**

**भैरवी– कर्त्तरि क्तप्रत्ययान्तेति–अधिकमिति सूत्रेण कर्त्तरि क्तप्रत्यये कनि उत्तरपदलोपे च सिद्धो यस्तेन योग इत्यर्थः। षष्ठ्यामिति–उक्तसूत्रद्वयनिर्देशरूपज्ञापकादित्यर्थः। ननु 'सप्तम्यधिकरणे च' इति सूत्रेण सप्तमी क्रियायोगाभानादिति भावः। इदमनध्याहारपक्षेऽध्याहारे त्वधिकरणसप्तम्येव तदाह–तस्मिन्नेति। यश्च कर्मार्थकाध्यारूढशब्दात् कनि कृते उत्तरपदलोपे च सिद्धोऽधिकशब्दस्तद्योगे त्वाह–कर्मणीति। अधिकमिति सूत्रेण तन्त्रेणोभयोरप्यधिकशब्दयोर्निपातनात्। अधिकमिति सूत्रे भाष्ये स्पष्टमेतत्।**

अधि—आङ् पूर्वक √रुह् धातु से कर्त्ता अर्थ में विहित **क्तप्रत्ययनिष्पन्न अध्यारूढशब्द के अर्थ में वर्त्तमान अधिक शब्द के योग में** प्रकृतेष्टि-द्वारा सप्तमी और पञ्चमी विभक्तियों का विधान होता है। 'यस्मादधिकम्' सूत्रनिर्देश से पञ्चमीविभक्ति का, अथ च 'यस्मिन्नधिकम्' सूत्रनिर्देश से

सप्तमीविभक्ति का अधिकशब्द के योग में विधान होता है। अर्थात् यह निपातनेष्टि है। अत एव 'लोक के ऊपर हरि हैं' इत्यर्थवाग्विवक्षा में 'लोके लोकाद्वा अधिको हरिः' वाक्यघटक लोकशब्द से सप्तमी और पञ्चमी विभक्तियाँ होती हैं। 'तदस्मिन्नधिकम्' सूत्र के भाष्य में 'लोकसमीपाधिकरण में हरि हैं' इत्यर्थाश्रयणपूर्वक औपश्लेषिकाधिकरण में सप्तमीविधान स्वीकार किया है। कर्मक्तप्रत्ययनिष्पन्न अध्यारूढशब्द के अर्थ में वर्त्तमान अधिकशब्द के योग में कर्मार्थ उक्त होने के कारण प्रथमाविभक्ति ही होती है। यथा—'अधिको लोको हरिणा'।

**यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी।।२.३.९।।**

**अत्र कर्मप्रवचनीययुक्ते सप्तमी स्यात्। उप परार्द्धे हरेर्गुणाः। परार्द्धादधिका इत्यर्थः। ऐश्वर्ये तु स्वस्वामिभ्यां पर्यायेण सप्तमी। अधि भुवि रामः। अधि रामे भूः। सप्तमी शौण्डैरिति (पा.सू. २.१.४०) समासपक्षे तु रामाधीना। अषड्क्ष. (पा.सू. ५.४.७) इत्यादिना खः।।इति कौमुदी।।**

**शे.–** 'उपोऽधिके च' (पा.सू. १.४.८७) इति कर्मप्रवचनीयत्वम्।

**भैरवी–** **उपशब्दस्य कर्मप्रवचनीयत्वमुपपादयति–उपोऽधिक इति। परार्द्धादधिकेत्यत्र पूर्वोक्तज्ञापकादेव पञ्चमी। सूत्रे पर्यायेणेति–यदि यस्य चेश्वरवचनमित्यत्र यच्छब्दः स्ववाचीश्वरशब्दस्तु धर्मिपर एव तदा यस्य स्वस्येश्वर उच्यते तद्वाचकात् सप्तमीत्यर्थो यदा तु यच्छब्दः स्वामिपर ईश्वरशब्दश्च भावप्रधानत्वेनेश्वरत्वपरस्तदा यस्य स्वामिन ईश्वरत्वमुच्यते तद्वाचकात् सप्तमीत्यर्थे स्वामिवाचकात् सप्तमीत्यर्थः। इयञ्च सप्तमी विशेषण-वाचकादेव। षष्ठ्यपवादत्वात्। विशेष्यवाचकात्तु प्रातिपदिकार्थे प्रथमैव। 'अधि भुवि' इत्यस्माद् भूमिनिरूपितस्वामित्ववानिति बोधः। 'अधिराम' इत्येतस्मात्तु रामनिरूपितस्वत्ववती भूरिति बोध इति भावः। अधिकशब्दस्य शौण्डादिगणे पाठफलमाह–सप्तमी शौण्डैरितीति। यदा तु विभक्त्यर्थेऽव्ययीभावस्तदा तु 'अधिरामं भूः' इति प्रयोगः।**

'अधिरीश्वरे' (पा.सू. १.४.९७) एतत्सूत्रघटक ईश्वर शब्द का स्वस्वामिभावसम्बन्ध अर्थ है। अत एव प्रकृतसूत्रद्वारा स्वस्वामिभाव गम्यमान होने पर 'अधि' की कर्मप्रवचनीयसंज्ञा होती है। 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी' (पा.सू. २.३.९) जिससे अधिकता द्योत्य

हो, अर्थात् आधिक्यद्योतक प्रातिपदिक से प्रकृतसूत्रद्वारा कर्मप्रवचनीय के योग में सप्तमीविभक्ति का विधान होता है, अथ च स्वस्वामिभाव द्योतित होने पर जिसका प्रभु तद्वाचक प्रातिपदिक से और प्रभुबोधक प्रातिपदिक से पर्याय से सप्तमीविभक्ति का विधान होता है, यथा—'उप परार्द्धे हरेर्गुणाः' श्रीहरि के परार्द्ध से अधिक गुण हैं। प्रकृतस्थल में परार्द्ध से अधिक की विवक्षा है, अथ च 'उपोऽधिके च' सूत्रद्वारा उप की कर्मप्रवचनीयसंज्ञा होती है, अत एव कर्म वचनीयसंज्ञक उप के योग में प्रकृतशास्त्रद्वारा परार्द्ध शब्द से सप्तमीविभक्ति का विधान होता है। स्वस्वामिभावसम्बन्ध द्योत्य होने पर जिसका प्रभु और जो प्रभु, उभयत्र पर्याय से सप्तमीविभक्ति का विधान होता है। अत एव 'अधि भुवि रामः' अथ च 'अधि रामे भूः' प्रयोगोपपत्ति होती है। 'रामे अधि' अवस्था में 'सप्तमी शौण्डैः' शास्त्रद्वारा समासोपपन्न रामाधिप्रातिपदिक से 'अषड्क्ष.' शास्त्रद्वारा खप्रत्ययविधानपूर्वक 'रामाधीना' पदोपपत्ति भी होती है।।

## विभाषा कृञि ।।१.४.९३।।

**अधिः करोतौ प्राक्संज्ञो वा स्यादीश्वरेऽर्थे। यदत्र मामधिकरिष्यति। विनियोक्ष्यत इत्यर्थः। इह विनियोक्तुरीश्वरत्वं गम्यते। अगतित्वात् तिङि चोदात्तवति (पा.सू. ८.१.७१) इति निघातो न।।इति कौमुदी।।**

**शे.–** **ननु 'मामुद्दिश्य विनियोक्ष्यत' इत्यर्थादत्र कर्मणि द्वितीयैव किं कर्मप्रवचनीयत्वेनेत्यत आह–अगतित्वादिति। तिङि चेति–उदात्तवति तिङन्ते गतिर्निहन्यत इत्यर्थः। अत्र 'तिङ्ङतिङः' (पा.सू. ८।१.२८) इति निघातस्य 'निपातैर्यद्यदि' (पा.सू. ८.१.३०) इत्यादिना निषेधात् करिष्यतीति तिङन्तस्योदात्तवत्त्वमिति सर्वेष्टसिद्धिः।**

**भैरवी–** **ईश्वरे अर्थ इति–गम्यमान इत्यर्थः। तदुपपादयति–विनियोक्तुरिति। ननु मामित्यत्र 'कर्मणि द्वितीया' इति सूत्रेणैव द्वितीया भविष्यति किं कर्मप्रवचनीयसंज्ञयेत्याशयेन शङ्कते–नन्विति। अत्रेति–यदत्र मामधिकरिष्यतीत्यत्रेत्यर्थः। उदात्तवत्त्वमिति–विकरणेभ्यो नियमस्य बलवत्त्वेन करिष्यतीत्यत्र तिङि कृते विकरणे च कृते उदात्तवत्त्वमिति। सर्वेष्टसिद्धिरिति–सर्वेषामिष्टानां निघातवारणकर्मप्रवचनीयसंज्ञा-साफल्योदात्तश्रवणरूपाणामित्यर्थः। 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि' इति भाष्यकारोक्तेर्मङ्गलस्यावश्यकत्वाभिप्रायेणात्र सिद्धिशब्दोपादानम्। मूलेऽपि 'अधिरीश्वरे' इति सूत्रात् 'ईश्वरे' इति**

**'विभाषा कृञि' इति सूत्रेऽनुवर्त्ततेऽतस्तज्ज्ञानेनेश्वरस्मरणरूपमङ्गलं सर्वेषां भवत्वित्यभिप्रायेण प्रकरणान्तेऽस्य सूत्रस्योपन्यास इति शिवम्।**

**ईश्वर अर्थ गम्यमान होने पर प्रकृतसूत्रद्वारा √कृञ् धातु के योग में 'अधि' की कर्मप्रवचनीयसंज्ञा विकल्प से होती है।** अत एव 'कर्मप्रवचनीययुक्ते द्वितीया' सूत्रद्वारा द्वितीयाविभक्ति का विधान होकर 'यदत्र मामधिकरिष्यति' प्रयोगोपपत्ति होती है। 'मामधिकरिष्यति' का 'मां विनियोक्ष्यते' अर्थात् 'मुझको रखेगा' अर्थ है। जो मेरे लिये कार्य में विनियुक्त करेगा, वह अधिकारी ईश्वर है।

प्र.— 'मामधिकरिष्यति' स्थल में 'अधिकरिष्यति' का 'माम्' कर्म है। अत एव 'कर्मणि द्वितीया' सूत्रद्वारा ही द्वितीयाविधान संभव है। अतः प्रकृतस्थल में कर्मप्रवचनीयसंज्ञाविधानपूर्वक द्वितीयाविधान व्यर्थ है?

उ.— कर्मप्रवचनीयसंज्ञाद्वारा गतिसंज्ञा का बाध होने से 'मामधिकरिष्यति' स्थल में 'उदात्तवान् तिङ् परे रहते गति को निघात होता है' इत्येतदर्थक 'तिङि चोदात्तवति' सूत्रद्वारा अधि को निघात नहीं होता है।

प्र.— 'मामधिकरिष्यति' वाक्यघटक 'करिष्यति' पद के उदात्तवान् होने पर 'तिङि चोदात्तवति' शास्त्र की प्रवृत्ति संभव है। 'अधिकरिष्यति' स्थल में 'तिङ्ङतिङः' सूत्रद्वारा 'करिष्यति' पद को अनुदात्त हो जायेगा, अत एव 'अधि' की कर्मप्रवचनीयसंज्ञा का निघाताभावफलोपादान करना भी असंगत है।

उ.— 'अधिकरिष्यति' स्थल में 'तिङ्ङतिङः' सूत्रद्वारा प्राप्त निघात 'निपातैर्यद्यदि.' शास्त्रद्वारा हो जाता है। इस प्रकार उदात्तवान् तिङ् परे रहते 'अधि' की कर्मप्रवचनीयसंज्ञा के विधान का 'तिङि चोदात्तवति' सूत्रद्वारा निघाताभाव फल का अन्वाख्यान करना सर्वथा युक्तियुक्त है।

**।।इति सप्तमी-विभक्तिः।।**

**'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते' इति भाष्य को हृदयङ्गम कर कौमुदीकार ने प्रकृतसूत्र में 'ईश्वरे' पदानुवर्त्तन करके एवं शेखरकार ने कारकप्रकरण का समापन करके 'सिद्धिः पदोपादानपूर्वक सर्वमङ्गलकामना की अभिव्यक्ति की है।**

**नीलाद्रीशं जगन्नाथं नत्वा शब्देन्दुकारकम्।**
**हिन्दीभाषायुतं भक्त्या गुरुपादे समर्पितम्।।**

**।।शुभं भूयात्।।**